# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]




५२ वर्षे
१-२ अङ्कौ

ज्येष्ठ-भाद्रपदपूर्णिमे
जून-सितम्बर, १९९७

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]

सम्पादकः

**डॉ. हरिश्चन्द्रमणित्रिपाठी**

निदेशकः, प्रकाशनसंस्थानस्य




५२ वर्षे
१-२ अङ्कौ

वार्षिकं मूल्यम् - १०० रूप्यकाणि
जून-सितम्बर, १९९७ ई.




*प्रकाशकः —*
**डॉ. हरिश्चन्द्रमणित्रिपाठी**
निदेशकः, प्रकाशनसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

*मुद्रकः —*
**श्रीजी-कम्प्यूटर प्रिण्टर्स**
नाटी इमली
वाराणसी - २२१००१

*प्राप्तिस्थानम्—*
**विक्रय-विभागः**, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी-२२१००२

# विषयानुक्रमणी

# सम्पादकीयम्

एतदस्माकं महत्सौभाग्यं यत् स्वीयां स्वर्णजयन्तीं संस्कृतवर्षे समुद्भास्य साम्प्रतम् ऋषिकल्पैराचार्यैः समारब्धेयं स्वनामविश्रुता **'सारस्वती सुषमा'** अनुसन्धानपत्रिका द्विपञ्चाशद्वर्षे पदं निदधती प्रकीर्णयति सारस्वतं महः, उत्प्रेरयति च संस्कृतसेवापरायणान् विद्वद्वरेण्यान्। प्रसङ्गेऽस्मिन् पद्यमेकं स्मर्यते प्रासङ्गिकम्—

**अये चिरपरिश्रान्ता विद्याकान्तारचारिणः।**
**समागच्छत वस्तृप्तिं करोमि ज्ञानधारया[1]।।**

अत्र वाग्देवता स्वयमेवाह्वयति विद्याकान्तारचारिणो विदुषो ननु श्रान्ता भवन्त आयान्तु, ज्ञानसुधाधारया भवतां तृप्तिं करोमीति। तद्वदेव **'सारस्वती सुषमा'** इयमाह्वयति नानादिग्देशस्थान् विदुषो ननु पठन्तु नाम वेदादारभ्याद्यतनीनं शाखोपशाखपल्लवितं पुष्पितं फलितञ्च ज्ञानराशिं सारस्वती-सुषमायाम्। राष्ट्र-परराष्ट्रव्यापिनीयं 'सारस्वती-सुषमा' सम्प्रेरयति विद्याकान्तारचारिणो विदुषो नवनवोन्मेषशालिनो विचारानाविष्कर्तुम्।

जानन्त्येव विद्वांसो यदचिरमेव सम्पूर्णतां जातः सारस्वती-सुषमायाः स्वर्णजयन्तीमहोत्सवः संस्कतवर्षेऽस्मिन्। अस्याः स्वर्णजयन्तीविशेषाङ्को नूनं बिभर्त्यभिख्यां काञ्चिदलौकिकीम्। स्वर्णमयः स्वर्णजयन्तीविशेषाङ्को दैशिकै-र्वैदेशिकैश्च विद्वद्धौरेयैरुपश्लाघितः। तदन्वनुसन्धानपत्रिकाया अस्या द्विपञ्चाशद्वर्षस्य प्रथम-द्वितीयसंयुक्ताङ्कं प्रकाशयतां प्रकामं मोमुदीति नश्चेतः।

संयुक्ताङ्केऽस्मिन् ऊनविंशतिर्निबन्धानां नानाशास्त्ररसस्रोतःपरिप्लुतानां समुच्चयो द्रष्टुं शक्यते विद्वन्निवहैः। प्रायेणात्र पाण्डुलिपिशास्त्रम्, वैदिका-नुसन्धानशास्त्रम्, व्याकरणशास्त्रम्, ज्यौतिषशास्त्रम्, नानादर्शनशास्त्रम्, साहित्यशास्त्रम्, निरुक्तशास्त्रञ्च विचारकोटौ समानीतं तत्तच्छास्त्रपारङ्गमेभ्यः पण्डितप्रकाण्डेभ्यः। मान्यवर-डॉ. गयाचरणत्रिपाठिमहोदयेन रचितं **'संस्कृत-**

---

१. पद्यमिदं पण्डितश्रीक्षेत्रेशचन्द्रचट्टोपाध्याय-पूर्वानुसन्धाननिदेशकद्वारा निर्मितम्, तत्प्रतिकृति-श्चापि तेनैव परिकल्पितेत्यवसेयम्।

**पाण्डुलिपीनां संरक्षणे पण्डितानामवदानम्'** इति निबन्धो नवोन्मेषं प्रयच्छति पाण्डुलिपिसङ्ग्रहकर्तृभ्य: संस्कृतसेवापरायणेभ्यो विद्वद्भ्य:। एवमेव डॉ.विन्ध्येश्वरी-प्रसादमिश्रेण नवीना दिगुन्मीलिता **'श्रीमद्भागवते दिक्कालानुसन्धानम्'** इत्यस्मिन् निबन्धे। **'वेदरक्षणं नाम वेदार्थानुशीलनम्'** इति डॉ. राममूर्तिचतुर्वेदिना प्रणीतो निबन्ध: काममावर्जयति चेतांसि विदुषाम्। प्रो. इन्द्रवदनरावलमहोदयस्य **'वसोर्धारामन्त्रेषु यज्ञस्य विभावना कर्मयोगपरिकल्पिका'** इति निबन्धो यागपरं कर्मयोगं विविनक्ति। डॉ. देवेन्द्रनाथत्रिपाठिविरचित: **'वेदाङ्गेषु श्रौतकल्पाङ्ग-वैशिष्ट्यम्'** इत्ययं निबन्ध: स्पष्टयति श्रौतकल्पाङ्गवैशिष्ट्यम्। पण्डितवरेण डॉ. मुरलीधरपाण्डेयेन प्रणीतो निबन्ध: **'लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति'** काञ्चिन्नवीनां दिशमुन्मीलयति विवेचनाशैल्या:। तदनु चत्वारो निबन्धा व्याकरणशास्त्रमवलम्बन्ते, तेषु गभीरतराणि सोहापोहसमन्वितानि चिन्तनतत्त्वानि द्रष्टुं शक्यन्ते पण्डितेन्द्रै:। ज्यौतिषशास्त्रशिरोमणिनाऽऽचार्यपण्डित-श्रीकृष्णचन्द्रद्विवेदिमहानुभावेनोद्भावित: **'मानवजीवने ग्रहाणां प्रभाव:'** इति निबन्ध: प्रकाममावर्जयति मनांसि विदुषाम्। एवमेव दर्शनपराश्चत्वारो निबन्धा नानाशास्त्रनिष्णातै: सुधीवर्यैरुद्भाविता:। विश्वविद्यालयस्यास्य साहित्यविभागाचार्येण नानाशास्त्रसाधनानिष्ठेन महाकवि-पण्डितश्रीशिवजी-उपाध्यायमहाभागेन विरचितमत्र प्रकाशितञ्च तत्त्वगर्भं **'स्वातन्त्र्यशौर्यम्'** इत्येकाङ्किनाटकं विस्कम्भयति मनांसि यूनां प्रेरयति च चेतांसि स्वातन्त्र्यं कामयमानानां जनानाम्, उद्बोधयति च स्वान्तं स्वातन्त्र्यमभीप्सूनां राष्ट्रसेवाहेवाकिनाम्। एवमेव त्रयोऽन्येऽपि निबन्धा: साहित्य-शास्त्रतत्त्वगर्भा राजन्ते पर्यन्ते पत्रिकायामस्याम्।

तदेवंविधनानाशास्त्रविचारसारसौगन्ध्यगर्भीकृतान् निबन्धकोरकान् बिभ्रती सारस्वतं मह: परिपुष्णाती च पत्रिकेयं विदुषां करारविन्देषु समुपहरता मयाऽनुभूयतेऽ-मन्दानन्दसन्दोह:। मन्ये, यन्नानाशास्त्रगवेषकाणां सुरगवीसमुपासकानां पत्रिकाया: संयुक्ताङ्कोऽयं महते श्रेयसे कल्पिष्यत इति।

एवं द्विपञ्चाशद्वर्षस्य संयुक्ताङ्कोऽयं सान्नपूर्णाय श्रीकाशीविश्वेश्वराय समर्पयन् कामये, यदियं **'सारस्वती सुषमा'** स्वीयां सारस्वतीं सुषमां प्रसारयन्ती समन्तादा-कल्पमग्रेसरीभवत्विति।

**हरिश्चन्द्रमणित्रिपाठी**
***निदेशक:***
प्रकाशन-संस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

**काश्याम्**
वासन्तिके नवरात्रे
वि.सं. २०५७

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

| ५२ वर्षे | ज्येष्ठ-भाद्रपदपूर्णिमे, वि.सं. २०५४ | १-२ अङ्काः |
| --- | --- | --- |

# संस्कृतपाण्डुलिपीनां संरक्षणे पण्डितानामवदानम्[1]

**डॉ. गयाचरणत्रिपाठी**

**प्राचार्यः,**

प्रयागस्थ-गङ्गानाथझा-केन्द्रीयसंस्कृतविद्यापीठस्य



संहितोपनिषद्ब्राह्मणे, वासिष्ठे धर्मशास्त्रे, निरुक्तादौ च पद्यमेकमुपलभ्यते, यत्र विद्या ब्राह्मणमागत्य प्रार्थयति यद् अहं तव निधिः, अतस्त्वया रक्षणीयास्मि —

विद्या ह वै ब्राह्मणमाजगाम गोपाय मा, शेवधिष्टेऽहमस्मि।

वस्तुतो वैदिककालादेव पारम्परिकज्ञानसरणे रक्षकत्वेन, तद्व्याख्यातृत्वेन च ब्राह्मणानां पण्डितानां वा महती भूमिका भारतीयसंस्कृतौ विद्यत इति सुविज्ञातमेव सर्वेषाम्। ग्रन्थरचनया, ग्रन्थानां कण्ठस्थीकरणेन, तद्व्याख्यानभूतटीकाभाष्यादिनिर्माणेन, विद्वद्गोष्ठीषु शास्त्रचिन्तनेन, अथ च भूर्जपत्रताडपत्रादिषु लिखित्वा ग्रन्थानां संरक्षणेन, पण्डितैर्भौतिकसुखान्यनादृत्य भारते अविच्छिन्नतया प्रवहमाणाया ज्ञानधारायाः सततं संरक्षणं कृतम्। महता त्यागेन, तपस्यया चैतत् सम्भवमासीत्। व्रतबन्धनानन्तरमष्टमवर्षादारभ्य चतुर्विंशतिवर्षपर्यन्तं, यदि वा षोडशवर्षाणि यावत्, सर्वाणि भौतिकसुखानि परित्यज्य

---

१. शर्मण्यदेशीय-'हाइडेलबर्ग'विश्वविद्यालयस्य दक्षिण-आशिया-संस्थाने "Pandit : The Future of traditional Sanskrit Scholarship" इत्याख्ये विद्वत्सम्मेलने १२।७।१९९९ ई. इत्यस्मिन् दिवसे प्रदत्तम् उद्घाटनभाषणम्।

भूयोभिः कष्टैर्विद्यामर्जयित्वा, तदनन्तरं गार्हस्थ्यमङ्गीकृत्य जिज्ञासुभ्यो विद्यार्थिभ्य आजीवनं निःशुल्कं विद्यां ददानाः, अवकाशं ग्रन्थनिर्माणलेखनादिकं च कुर्वाणास्ते असौविध्यमसौकर्यं च सोढ्वापि विद्यायाः संरक्षणे, तदभिवर्धने च सर्वदैव कृतप्रयासा बभूवुः। श्रीमद्भिः 'आक्सेल् मिषाइल्'-महोदयैरायोजितायामस्यां गोष्ठ्यामेतादृशां पण्डितानामवदानमिह समुपस्थितानां विदुषां भाषणैः स्पष्टतरं भविष्यतीत्यत्र नाधिकमुच्यते। अस्यामपि शताब्द्यां महापण्डितेन 'राहुल-साङ्कृत्यायनेन' अवर्णनीयानि महान्ति कष्टानि सोढ्वा, भिक्षुकरूपेण तिब्बतदेशस्य चतुर्वारं यात्रां कृत्वा, योऽनेकेषां भारते लुप्तानां 'प्रमाणवार्त्तिक' - 'योगाचारभूमिशास्त्रम्' इत्यादीनां दुर्लभसंस्कृतग्रन्थानामुद्धारः कृतः, स पण्डितानां परम्परागतप्राचीनविद्यासंरक्षणप्रयासेऽद्यापि सर्वेषां कृते निदर्शनभूतः।

केचन सर्वशास्त्रनिष्णाताः संस्कृतपण्डिताः संस्कृतपाण्डुलिपीनां विशालं सङ्ग्रहं कृत्वा स्वकीयं विपुलं पुस्तकालयमपि निर्मान्ति स्म, यस्योदाहरणं सप्तदशशताब्द्यां विद्यमानानां 'सर्वविद्यानिधान' इत्युपाधिविभूषितानां वाराणसेयानां श्रीकवीन्द्राचार्यसरस्वतीमहाभागानां पुस्तकसङ्ग्रहस्य दीर्घया सूच्या प्राप्यते यत्र परःसहस्रं ग्रन्थाः सन्ति। सूच्येषा गंगानाथझामहोदयेन वटोदरनगरात् (Baroda) प्रकाशिता। अद्यत्वेऽपि उत्कलेषु, आन्ध्रेषु, कर्णाटकेषु, केरलेष्वन्यत्र चापि बहूनां पण्डितानां गृहेषु पाण्डुलिपीनां विशालः सङ्ग्रहो विद्यते। ते इदानीं प्राय एतानि पुस्तकानि नैव वाचयन्ति, किन्तु पितॄणां, पूर्वजानां वा सम्पत्तिरेषा इति मत्वा तानि महत्या श्रद्धया संरक्षन्ति पूजयन्ति च। विक्रयणे चाप्येतेषां ते भृशं मन्दोत्साहाः।

यदि नाम केचिदत्र सन्दिह्युर्यत् पाण्डुलिपिलेखकास्तु प्रायः कायस्थजातीया आसन्, अतः पाण्डुलिपिसंरक्षणस्य श्रेयस्ते गृह्णन्ति, तदास्माभिरुच्यते यद् ग्रन्थानां रचनाकाराः, तेषां प्रथमलेखकाः, पाण्डुलिपीनां शोधकाः, तासां पाठकाः, तासां संरक्षणकर्तारश्च पण्डिता एवासन्, न तु कायस्थाः। पण्डितानां सदनेष्वेव पाण्डुलिपयोऽद्य सुरक्षितास्तिष्ठन्ति, न तु कायस्थानां गृहेषु। अतो नास्ति तेषां तद्रक्षणे किमपि कर्तृत्वम्।

**पाण्डुलिपीनां प्राचीनता**

प्रकृतमनुसरन्तः प्रथमं तावद् विचारयामः — कियती प्राचीना खलु भारतीया ग्रन्थलेखनपरम्परा? वैदिककाले सर्वमेव मौखिकमासीत्, श्रुति-शब्दवाच्यत्वात् सर्ववेदानाम्, 'लेखनकलायाः लिपेर्वा ज्ञानं नासीत् तत्कालिकानां जनानाम्' इति बहूनां विपश्चितां विशेषतः पाश्चात्त्यानां मतमिदम्; किन्तु

चिन्त्यमेतत्। एतत्तु विद्वद्भिर्विचारणीयं यद् विभिन्नगोत्रीयैः ऋषिभी रचितानि, अथ च विविधपरिवारेषु यज्ञार्थं देवानामावाहनाय उपयुज्यमानानि सूक्तानि सङ्कलय्य महर्षिणा वेदव्यासेन, केनचिदन्येन वा, ऋग्वेदसंहिताया रचना कृता। 'संहिता' इति शब्दस्य समाहारः, सङ्कलनं वेत्यर्थः। अत्र विचार्यं भवति — केन प्रकारेण बहुभ्यः ऋषिपरिवारेभ्यः सूक्तानि आनीतानि? किं सर्वतस्तानि कण्ठस्थीकृत्यैव कश्चिदानीतवान्? नैतत् श्रद्धास्पदं प्रतिभाति। सङ्ग्रथितायामेकदा संहितायां तस्या मौलिकं स्वरूपं, मण्डलेषु विभाजनं, सूक्तानां संख्या, तेषामानुपूर्वी चेत्यादि केन प्रकारेण स्थिरं, सुरक्षितं च स्थातुं शक्यते यदि तेषां भौतिकं, चक्षुर्ग्राह्यं, प्रत्यक्षं स्वरूपं नैव स्यात्? वैदिकसंस्कृतेः समकालिक्यां पूर्ववर्तिन्यां वा सैन्धव-सरस्वतीसंस्कृतौ लेखनकला सुविज्ञाता आसीत्। भारतीया वणिज एशिया-महाद्वीपस्य 'मेसोपोटामिया'दिदेशेषु सुमेरादिजनैः सह वाणिज्यं कुर्वते स्म इति ऐतिह्यविदः सम्यक्तया विदन्ति। तत्र लेखनकला समुन्नताऽऽसीत्। किं भारते निवसतामार्याणां मनसि लेखनद्वारा वैदिकसंहितानां स्वरूपसंरक्षणस्य विचारोऽपि नोदेत्, इति न श्रद्धास्पदम्। वर्ततां नाम गुरुशिष्यात्मिका मौखिकी परम्परा, कण्ठस्थीकरणपरम्परा, श्रुतीनां शुद्धतया संरक्षणार्थम्; किन्तु प्रथमतया तु तासां स्थिरीकरणं लेखनेन आवश्यकमासीदित्यस्माकमभिमतम्। शतपथब्राह्मणादि-विपुलकायानां ग्रन्थानां निर्माणमथ च तन्मौलिकस्वरूपस्थिरीकरणं प्रथमतया तेषां लेखनेन विना नैव सम्भवति। आदौ तावत् तेषां लिखितं रूपं, तेषां चक्षुर्ग्राह्यत्वमपेक्ष्यते।

पाणिनेः समयेऽपि प्राचीनानां भारतीयानां लेखनस्य लिपेर्वा ज्ञानं नासीदित्यपि केचिद्विद्वांसोऽभिप्रयन्ति। तर्ककर्कशधिया समीक्षणेन किन्तु एतदपि मतं समीचीनं नैव प्रतिभाति। गभीरायाः संस्कृतभाषायाः किमपि सम्पूर्णं व्याकरणं रचयितुं विपुलं सामग्रीसङ्कलनं, सामग्र्याः सविवेकं विश्लेषणं, क्रमबद्धरूपेण च विवेचनं, सूत्रनिर्माणप्रक्रियायां यत्र तत्र तेषां संशोधनं, विस्तृतीकरणं सङ्क्षिप्तीकरणं वा अपेक्ष्यते। तेषामानुपूर्वी अपि एकदा प्रथमवारं लिखितरूपं विना नैव स्थिरीभवितुं शक्नोति। अपरञ्च इदमप्यवधेयं यत् पाणिनिः अष्टाध्याय्याम् "अधिकृत्य कृते ग्रन्थे" (४।३।८७), अथ च "कृते ग्रन्थे" (४।३।११६) इति सूत्रद्वयनिर्माणेन तत्समये ग्रन्थानामस्तित्वं निर्भ्रान्ततया प्रमाणयति। ग्रथि-धातोर्निष्पन्नस्य 'ग्रन्थ'शब्दस्य आशयो लिखितं पुस्तकमेव भवितुमर्हति, नान्यत् किमपि। ग्रथनं नाम सूत्रेण केषाञ्चिद्वस्तूनां परस्परं सङ्घटनं निबन्धनं वा। "पुष्पाणि (मालारूपेण) ग्रथ्नाति""पत्राणि सङ्ग्रथ्नाति" इत्यादयो

भाषायां प्रयोगा भवन्ति। वैदिकोऽयं धातुस्तैत्तिरीयकाठकसंहितादिषु अस्मिन्नेवार्थे प्रयुक्तो दृश्यते। ग्रथनं नाम पुस्तकरचनाकर्म। "वाल्मीकिरादौ च ससर्ज काव्यं जग्रन्थ यन्न च्यवनो महर्षिः" इति बुद्धचरिते (१।४८) अश्वघोषवचनम्। 'अधिकृत्य' इत्यस्य अर्थो भवति-कमपि विषयमवलम्ब्य, अतः "अधिकृत्य कृते ग्रन्थे", "कृते ग्रन्थे" इति सूत्रयोस्तात्पर्यं कमपि एकं निश्चितं विषयमवलम्ब्य कृतेन, लिखितरूपेण चोपलब्धेन पुस्तकेन ग्रन्थेन वा एव भवितुं शक्नोति। एवमेव "स्वरितेनाधिकारः" (१।३।११) इति सूत्रेण स्वरितप्रकाशकेन केनचिच्चिह्नेन अङ्कनम्, अथ च "दिवाविभा.......लिपिलिबिबलिभक्ति......अरुःषु" (३।२।२१) इत्यादि-सूत्रे लेखनवाचिलिपिशब्दस्योल्लेखः स्पष्टतया पाणिनिना कृतः, अतः पाणिनिसमये लेखनकलायाः, ग्रन्थानां पाण्डुलिपीनां च अस्तित्वं निर्भ्रान्ततया प्रमाणितं भवति।

प्राग्वर्तिषु बौद्धजातकेष्वपि राजशासनपत्राणाम्, ऋणपत्रादीनां, धर्मनियमानां, व्यक्तिगतपत्राणां चोल्लेखेन लेखनकलायास्तत्समयेऽस्तित्वं सिद्ध्यति इत्येष विषयो नाधिकं प्रपञ्च्यते।

**लेखनाधाराः**

यवनाधिपतेः अलेक्साण्डरस्य सेनया सह भारतमागतेन तत्सेनान्या 'नेआर्ख़ेस्' इत्यनेनोल्लिखितं यद् भारतीया कार्पासं कुट्टयित्वा तेन कर्गदपत्राणि निर्मान्ति, ग्रन्थांश्च तदुपरि लिखन्ति। 'आउरेल स्टाइन्'-महाभागेन मध्यएशियाभागे प्राप्तेषु ग्रन्थेषु कतिचन एवंविधनिर्मितकर्गदस्योपरि एव लिखिताः सन्ति, राजस्थानस्य मेदपाटक्षेत्रे प्राचीनेभ्यो वस्त्रखण्डेभ्यः किञ्चित्कालात् प्राग् आधुनिके युगेऽपि एतादृशं कर्गदं निर्मीयते स्म इति गौरीशंकर-ओझाः स्वकीये 'प्राचीन-भारतीयलिपिमाला'ख्यग्रन्थे सूचयति। अनेन नेआर्ख़ेस्-महोदयस्य कथनं प्रतीतियोग्यं प्रतिभाति। सामान्यतस्तु मध्ययुगे कार्पासनिर्मितं पटं गोधूम-चूर्णनिर्मितश्लेषेण, शालिमण्डादिभिश्च छिद्रपूरणपुरस्सरं दृढीकृत्य, क्वथितचिञ्चा-बीजकल्कलेपनेन समतलं मसृणं च विधाय क्षौद्रमिश्रितखटिकादिलेपनेन श्वैत्यमानीय, शङ्खादिसङ्घट्टनेन चिक्कणं च कृत्वा लेखाधाररूपेण प्रयुञ्जते स्म जना इति बहुषु ग्रन्थागारेषु सुरक्षिताभिर्मातृकाभिर्ज्ञायते। एतादृशीनि पुस्तकानि प्रायः कुण्डलीरूपेण (Scrolls) वलितानि भवन्ति। जैनमतावलम्बिभिः एतादृशी लेखनसामग्री लेखनाधाररूपेण पर्युषणपर्वानन्तरं लिखितानां 'क्षमापन'-पत्राणां कृते, यदि वा साधूनामामन्त्रणार्थं प्रहितानां विज्ञप्तिपत्राणां कृतेऽद्यत्वेऽपि प्रयुज्यते।

उत्कलेषु पटोपरि शोभनानि चित्राण्यपि निर्मीयन्ते यानि तु पुरी-भुवनेश्वरादिस्थानेषु सर्वत्र क्रेतुं शक्यन्ते।

भारतीयानां प्राचीनतमौ ग्रन्थाधारौ भूर्जपत्रं तालपत्रं च स्तः। तत्रापि 'ग्रन्थ'-शब्दस्य व्युत्पत्तिलभ्यार्थस्यानुशीलनेन कदाचित् तालपत्रस्यैव प्राचीनतरत्वं सिद्ध्यति, यतः स्थूलत्वाद् मुख्यतस्तालपत्राण्येव छिद्राण्यासाद्य सूत्रेण सङ्ग्रथ्यन्ते। भूर्जपत्राणि तु उपरि अधस्ताच्च निहितेन काष्ठफलकद्वयेन सुरक्षितानि भवन्ति।अतिसूक्ष्मतया सहजभङ्गुरतया च भूर्जत्वचस्तस्यां छिद्रकरणं सूत्रेण सङ्ग्रथनं च प्रायशः पत्राणां विनाशायोपकल्पते।

भूर्जपत्र-तालपत्रातिरिक्तं 'योगिनीतन्त्रे' ग्रन्थाधाररूपेण तेजपत्रस्य अगुरुत्वचश्चाप्युल्लेखो विद्यते —

भूर्जे वा तेजपत्रे वा ताले वा ताडिपत्रके।
अगुरुत्वचापि देवेशि पुस्तकं कारयेत् प्रिये।।

इत्यस्मिन् श्लोके। किन्तु तेजपत्रेषु अगुरुत्वचि वा लिखितानि पुस्तकानि अद्यत्वे नैव दृष्टिगोचरीभवन्ति।

भूर्जवृक्षस्तु हिमालये प्राप्यते। शर्मण्यभाषायां स Birke इति शब्दवाच्यः। भारोपीयभाषासु अस्य उपलब्धेर्ज्ञायते यद् आर्याणां परिचयोऽनेन वृक्षेण अतिप्राचीनः। कालिदासः स्वकीये कुमारसम्भवे (१।७) अस्य वृक्षस्य त्वचः उल्लेखं पत्रादिलेखनार्थम् आधारसामग्रीरूपेण करोति। हिमालये बाहुल्येन वर्तमानाः भूर्जत्वचो विद्याधरसुन्दरीणामनङ्गलेखनार्थं प्रयुज्यमानाः सत्यः सार्थकत्वमुपयोगित्वं च भजन्ते—

न्यस्ताक्षरा धातुरसेन यत्र भूर्जत्वचः कुञ्जरबिन्दुशोणाः।
व्रजन्ति विद्याधरसुन्दरीणामनङ्गलेखक्रिययोपयोगम्।।

भूर्जवृक्षाणामान्तरिकी तन्वी त्वक् तीक्ष्णेन क्षुरेण लूना, काष्ठफलकेषु आस्तृता सती ऋजुतां प्रापिता अथ च छायायां शुष्का, लेखनार्थमुपयुज्यते स्म। भूर्जपत्रेषु लिखितं प्राचीनतमं पुस्तकं स्टाइन्महोदयैः खोतानतः प्राप्तं खरोष्ठीलिपिनिबद्धं प्राकृतभाषात्मकं 'धम्मपदं', यत्तु द्वितीयशताब्दीकं (तृतीयशताब्दीकं वा) विद्वद्भिराकलितं वर्तते। काश्मीरेषु नेपालदेशे च मध्ययुगे भूर्जपत्रेषु विलिखितानि बहूनि पुस्तकानि अद्यत्वेऽप्युपलभ्यन्ते। भूर्जपत्रेषु केवलं श्यामवर्णया, रक्तवर्णया वा मस्या एव लेखितुं शक्यते।

ताडपत्रं तु तालवृक्षस्य पत्रम्। तस्य श्रीताल-खरताल इति प्रकारद्वयं भवति। श्रीताल: मसृणश्चिक्कणो नम्य आयतश्च। खरतालस्तु किञ्चित् स्थूल: सारल्येन भङ्गुरश्च। अस्य पत्राणि क्षुद्राणि। प्राचीने भारते तालपत्रोपरि प्रायो मस्या लिखन्ति स्म पण्डिता:। शर्मण्यदेशीयविद्वद्भिर्मध्य-एशियास्थ-तुरफानत आसादितं, प्रो. ल्यूडर्समहोदयैश्च प्रकाशितमश्वघोषविरचितं शारद्वतीपुत्रप्रकरणाख्यं नाटकं ताडपत्रेषु मस्या एव लिखितम्। लिपिशास्त्रज्ञैरस्या: पाण्डुलिपे: कालनिर्धारण-मीशवीयद्वितीयशताब्द्यां कृतम्। कठिनतरे खरताले लौहलेखन्या अक्षराणि उट्टङ्क्यन्ते, तदनन्तरं तैलमिश्रितकज्जलेन, यदि वा शिम्बालताया: पत्राणां रसेन तत्तालपत्रमुपलिप्यते येन कज्जलं रसो वा अक्षररेखासु प्रविशति, तत्रैव च सन्तिष्ठते। पत्रोपरि वर्तमानमवशिष्टं कज्जलादिकं कार्पासेन चैलेन वा अपमृज्यते। उत्कलेषु दक्षिणावर्तगतेषु अन्येषु च प्रदेशेषु एषा एव प्रणाली पाण्डुलिपि-निर्माणस्य।

कर्गदपत्रेषु वर्तमान: प्राचीनतम: पाण्डुलिपिसङ्ग्रहो मध्य-एशिया-स्थिताद् 'यारकन्द'नगराद् महापण्डितेन वेबरेण आसादितो यस्य कालनिर्धारणं 'ह्योर्नले'-महोदयेन पञ्चमशताब्द्यामकारि। अत्र विद्यमानानां पाण्डुलिपीनां मध्ये काश्चन चैलखण्डकार्पासादिनिर्मिते कर्गदपत्रे लिखिता: सन्तीति तज्ज्ञा वदन्ति। दशमशताब्दीत: एकादशशताब्दीतो वा कर्गदस्य व्यापक: प्रयोगो उत्तरभारते दृश्यते, यद्यपि दक्षिणभारते ताडपत्रस्यैव प्राचुर्यम्। कर्गदोपरि लेखनार्थं प्राचीनकाले या मसी निर्मीयते स्म, सा अतीव स्थायिनी। निमज्जितेष्वपि जले पाण्डुलिपिपत्रेषु, लिखितं विवर्णं दुष्पाठ्यं वा नैव भवति। एषा मसी तु अक्षोटादीनां (Walnuss) कठोराणि शल्यकानि दग्ध्वा तत्समुत्थितेन अङ्गारेण, कज्जलं, कीकरवृक्षनिर्यासादिकं च विमिश्र्य निर्मीयते स्म। अस्माकं पितृचरणा अपि अस्मद्बाल्यकाले एतादृशीं मसीं निर्मान्ति स्म, इत्यस्माकं स्मृतिपथे वर्तते।

## पाण्डुलिपीनां संरक्षणम्

कर्गदानां ताडपत्राणां च संरक्षणं भारतीयायां जलवायुपरिस्थित्यामतीव दुष्करम्। कर्गदपाण्डुलिपीनां सदैव वम्रीभ्य: (उपदीकाभ्य:, Weisse Ameisen) भयं भवति। प्रायो वर्षाकाले ता: लक्षलक्षसंख्याका गृहेषु भूमितलाद् आविर्भूय कर्गदपत्राणि भक्षयित्वा तत्सर्वं मृत्तिकारूपेण परिणमन्ति। अत: कर्गदपाण्डुलिपीनां सुरक्षा वर्षर्तौ अवश्यं करणीया भवति। भारते पण्डिता: स्वकीयानि हस्तलिखितानि पुस्तकानि प्रायो रक्तवर्णरञ्जितेन पटेनावेष्ट्य धारयन्ति, भूमौ च

तानि नैव निक्षिपन्ति। पटं तु वम्र्यो नैव तादृशेन सारल्येनाभिपतन्ति। भाद्रमासे यदा सूर्यश्चकास्ति तदा पण्डिताः सर्वाणि वेष्टनानि उद्घाट्य हस्तलेखानां पत्राणि च शिथिलीकृत्य तेषामार्द्रतापसारणार्थं तानि 'भाद्रवरौद्रे' रविकिरणैः शोषयन्ति। सायं च पत्राणां मध्ये यत्र तत्र निम्बपत्राणि निधाय पुस्तकं पुनरपि दृढं बध्नन्ति।

तालपत्राणां भयं तु मुख्यतः क्षुद्रकीटेभ्यो भवति यानि पत्राणां मध्ये प्रविश्य तत्र दीर्घकालमुषित्वा च अण्डान्यादधति। एते कीटविशेषा नैरन्तर्येण संवर्धितपरिवाराः शनैः शनैः पत्राणि खादन्तस्तेषु छिद्राणि च कुर्वन्तः कालेन सर्वमपि पुस्तकं विनाशयन्ति। एतेषामपसारणार्थं मारणार्थं वा पत्राणि सम्यक्तया सम्मार्ज्य, धूल्यादिकं चापसार्य निम्बबीजतैलं लेपयन्ति पण्डिताः। केचिद् हरिद्रादिविविधौषधिमिश्रितं सर्षपतैलमपि कार्पासेन आरोपयन्ति पत्रेषु। तदपि कृमिनाशकम्। कर्पूरसारो यवानिकासारोऽपि कृमीन् विनाशयति। ताडपत्रीयकोषाणां संरक्षणार्थं दाक्षिणात्येष्वद्यत्वे निम्बूकशष्पतैलं (citronella ) प्राचुर्येण प्रयुज्यते।

विश्वस्मिञ्जगति मूषका एतादृशानां वस्तूनां जातशत्रवः। ते वेष्टनान्तर्गतानि पुस्तकानि प्रायो नैव कर्तयन्ति, किन्तु इतस्ततो गृहकोणेषु विकीर्णानि, बहुकाल-मुपेक्षितानि पुस्तकानि अवश्यमेव एकदा मूषकाणां भोजनं भवन्ति, अत एवैषा प्राचीना उक्तिः —

स्थलाद्रक्ष, जलाद्रक्ष, रक्ष मां श्लथबन्धनात्।
आखुभ्यः परहस्तेभ्य एवं वदति पुस्तकम्।।

पुस्तकानां भूमौ निधानेन भूमिगता आर्द्रता तान्युपसर्पति, येन उपदीकादीनामन्येषां च कीटानां तत्राक्रमणं भवति, मूषकादीनामपि तानि सारल्येन भक्ष्यं भवन्ति। श्लथबन्धनिवारणं कीटादिभ्यो रक्षणार्थम्। दृढतया बद्धे पुस्तके पत्राणां मध्ये कृमयो नैव प्रवेष्टुं शक्नुवन्ति। स्वकीयं पुस्तकं परहस्तेभ्यः प्रदाने महान्तं सङ्कोचमनुभवन्ति पण्डिताः। परहस्तगतं पुस्तकं महता आयासेन, वारं वारं याचनानन्तरमेव पुनः प्राप्यते, पुनरायातस्यापि प्रायस्तस्य पत्राणि भ्रष्टानि भवन्तीति तेषामनुभवः, अत एवोक्तिः —

लेखनी पुस्तकं दाराः परहस्तं गता यदि।
कष्टात्पुनरवाप्ताऽपि नष्टा भ्रष्टा विमर्दिताः।।

हस्तलिखितपुस्तकानां संरक्षणार्थं केचिदतीव उपयोगिनो निर्देशाः प्रदत्ताः केनचित्पण्डितेनास्मिन् पद्ये—

सम्भूष्यं सदपत्यवत्, परकराद् रक्ष्यं च सुक्षेत्रवत्
संशोध्यं व्रणिताङ्गवत् प्रतिदिनं, वीक्ष्यं च सन्मित्रवत्।
बन्ध्यं वध्यवदश्लथं दृढगुणैः, स्मर्यं हरेर्नामवद्
नैवं सीदति पुस्तकं बहुतिथं ह्येतद् गुरूणां वचः।।

स्निग्धपुत्रवत् पुस्तकं वाससा परिधापनीयम्, स्वकीयप्रियभार्यावत् परकरेभ्यो रक्षणीयम्, व्रणवद् धूल्यादिकमपसार्य संशोधनीयम्, मित्रवत् प्रतिदिनमुद्घाट्य स्निग्धेन चक्षुषा वीक्षणीयम्, दृढैः सूत्रैः अश्लथं निविडं बन्धनीयम्, अथ च कुत्र किंरूपेण तत् तिष्ठतीति सदैव स्मृतिपथे धारणीयम्, तस्योपेक्षणं नैव कार्यम्। यद्येवं क्रियते तदा पुस्तकं बहुकालं यावद् विनाशं नैव उपयाति, इति तत्संरक्षणकृते व्यावहारिका निर्देशाः कस्यचित् पाण्डुलिपिसंरक्षण-विशेषज्ञस्य।

**पुस्तकलेखनं लेखकाश्च**

ग्रन्थलेखकः कीदृशः स्यादित्यस्मिन् विषयेऽपि तन्त्रग्रन्थेषु, चाणक्यनीतौ च निर्देशाः प्राप्यन्ते। चाणक्यनीतिर्लेखकानां गुणान् एवं प्रकाशयति—

सकृदुक्तगृहीतार्थो लघुहस्तः स्फुटाक्षरः।
सर्वशास्त्रसमालोकी प्रकृष्टो ग्रन्थलेखकः।।

एकवारमेव श्रुत्वा यो ह्युक्तं गृह्णाति, धारयति च, स सकृदुक्तगृहीतार्थः। 'लघुहस्तः' इति शब्देन शीघ्रं जवेन वा लेखनकलाकौशलं व्यज्यते। जवेन लिख्यमानानामप्यक्षराणामाकारस्य आकृतेश्च व्यत्यासो मा भूद् इत्येवाशयः। 'सर्वशास्त्रसमालोकी' इति शब्देन सर्वेषां शास्त्राणां यत्किञ्चिद् ज्ञानं प्रत्येकं लेखकस्य कृतेऽपेक्ष्यते येन स पारिभाषिकशब्दान् शुद्धतया लिखेत्। राजशेखर-कृतायां काव्यमीमांसायामपि (दशमेऽध्याये) प्रायोऽस्यैवाभिप्रायस्यानुवादो दृश्यते—

"सर्वभाषाकुशलः शीघ्रवाक्, चार्वक्षरः, इङ्गिताकारवेदी,
नानालिपिज्ञो लाक्षणिकश्च लेखकः स्यात्"।

मत्स्यपुराणस्य १८९ तमेऽध्याये लेखकस्य योग्यता इत्थं वर्णिता —

सर्वदेशाक्षराभिज्ञः सर्वशास्त्रविशारदः।
बह्वर्थवक्ता चाल्पेन लेखकः स्यान्नृपोत्तम।।

शीर्षोपेतान् सुसम्पूर्णान् शुभान् श्रेणिगतान् समान्।
अक्षरान् वै लिखेद् यस्तु लेखकः स वरः स्मृतः।।

लेखकस्य बहुज्ञताऽत्रापि प्रशंसिता। विविधदेशेषु प्रयुज्यमानानां लिपीनां ज्ञानं, सर्वशास्त्रावलोकित्वं, मिताक्षरैर्बह्वर्थप्रकाशनसामर्थ्यम्, अथ च सुलेखलेखनक्षमत्वं तस्मादपेक्ष्यते। अक्षराणि सर्वाभी रेखाभिः समन्वितानि, समानाकृतीनि, एकश्रेणिगतानि भवितुमर्हन्ति। एवं लेखनीयं यथा द्वयोर्वर्णयोरन्तरा भूयान् अवकाशो न स्यात्। अत्र कस्यचित् सहृदयसमालोचकस्येदं प्राचीनं पद्यं स्मृतिपथमवतरति—

अक्षराणि समानानि वर्तुलानि घनानि च।
परस्परविलग्नानि तरुणीकुचकुम्भवत्।।

पुस्तकस्य आकारप्रकारः, दैर्घ्यादिकं मानं च कीदृशं भवेदित्यस्मिन् विषयेऽपि निर्देशाः प्राप्यन्ते, प्रायशस्तन्त्रग्रन्थेषु। योगिनीतन्त्रकारस्य मतानुसारं पुस्तकस्य दैर्घ्यं मुष्टिमानाद् आरभ्य बाहुपर्यन्तं भवितुं शक्नोति—षडङ्गुलं (मुष्टिः) अष्टाङ्गुलं, दशाङ्गुलं, द्वादशाङ्गुलम्, अष्टादशाङ्गुलं, हस्तमात्रं (चतुर्विंशत्यङ्गुलं), यदि वा बाहुमात्रं (षट्त्रिंशदङ्गुलम्) इति पुस्तकस्य मानानि। कुत्र, कियन्ति वा पुस्तकपत्रेषु छिद्राणि क्रियेरन् इत्यस्यापि विवेको विद्यते —

हस्तमात्रं मुष्टिमात्रमाबाहुद्वादशाङ्गुलम्।
दशाङ्गुलं तथाष्टौ च, ततो हीनं न कारयेत्।।
वेधद्वयं मुष्टिहस्ते बाहुमात्रे त्रिरन्ध्रकम्।
समभागे महेशानि हस्तादौ रूपरन्ध्रकम्।।
अष्टाङ्गुलं परित्यज्य मध्ये वेधं तु कारयेत्।
प्रादेशादौ भवेद् रन्ध्रं द्व्यङ्गुले वा समाचरेत्।।

'हयशीर्षपाञ्चरात्रस्य' तृतीये सङ्कर्षणकाण्डे, एकत्रिंशत्तमेऽध्याये पुस्तकानां प्रतिष्ठाविधिर्वर्ण्यते। कस्यापि महत्त्वावहस्य ग्रन्थस्य लेखनात् प्राग् वाग्देव्याः सरस्वत्याः पूजा कार्या। स्वस्तिवाचनपुण्याहवाचनानन्तरं लेखकः प्राङ्मुखमुपविश्य रजतपात्रे मसीं स्थापयित्वा स्वर्णलेखन्या प्रथमान् पञ्चश्लोकान् लिखेत्। अक्षराणि स्निग्धानि, नातिकृशानि, नातिस्थूलानि, ह्रस्वदीर्घादिमात्रासंयुतानि, सम्पूर्णावयवानि, यथास्थानं बिन्दुविसर्गदण्डादियुक्तानि, शुद्धानि च भवितुमर्हन्ति।

उत्तरभारते प्रणीतत्वाद् हयशीर्षसंहिता नागराक्षरैः शारदाक्षरैर्वा ग्रन्थस्य लेखनं वरं मनुते—

ततः पुण्याहघोषेण प्रारभेल्लेखनं बुधः।
प्राङ्मुखः पद्मिनीं ध्यायन्नालिखेच्छ्लोकपञ्चकम्।।
रौप्यपात्रे मषीं स्थाप्य लेखन्या हेमया शुचिः।
काश्मीरैर्नागरैर्वर्णैः समशीर्षैः समांशकैः।।
स्निग्धैर्नातिकृशैः स्थूलैर्ह्रस्वदीर्घादिलक्षितैः।
सम्पूर्णावयवैर्मात्राबिन्दुसंयोगलक्षितैः।
लेखयेल्लेखको धीमान् शब्दशास्त्रविशारदः।।

**पाठसंशोधनम्**

स्वयं लेखकेन वा पुस्तकस्य लेखनानन्तरं पण्डितास्तत्पुस्तकमतिसावधानतया निरीक्षन्ते स्म, तत्र वर्तमाना लेखनत्रुटीर्निरस्य भ्रष्टं पाठं च संशोधयन्ति स्म। योंऽशोऽधिकोऽशुद्धो वा, तं हरतालेन आच्छाद्य, तदुपरि शुद्धं पाठं लिखन्ति स्म। कुत्रचिद् अवशिष्टं च्युतं वा पाठं ते 'काकपद'-(V) चिह्नाङ्कनपूर्वकं पङ्क्तिसंख्यामुल्लिख्य तस्यैव पत्रस्य उपरि अधस्ताद् वा योजयन्ति स्म।

कस्यापि ग्रन्थस्य सामीक्षिकसम्पादनपूर्वकं मौलिकशुद्धपाठनिर्धारणस्य य आधुनिको विधिस्तस्यापि किञ्चित् परिज्ञानं प्राचीनानां पण्डितानामासीदित्यत्र नास्ति कापि संशीतिः। भाष्यटीकादिनिर्माणसमये ते आलोच्यग्रन्थस्य यथाशक्ति अधिकाधिकाः मातृकाः सङ्गृह्य, शुद्धं पाठं च सम्यक्तया विविच्य तत्पश्चादेव स्वकीयां टीकां विरचयन्ति स्म।

कालिदासस्य यशस्वी टीकाकारो मल्लिनाथः कालिदासकृतीष्टीकयन्ननेकशः पाठविवेचनं करोति, पाठस्य शुद्ध्यशुद्धिविषये च स्वाभिमतं प्रकाशयति। स्थालीपुलाकन्यायेन केवलमेकमेवोदाहरणमत्र प्रस्तूयते। मेघदूतस्य द्वितीये श्लोके 'आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुम्' इति तृतीयश्चरणः। अत्र 'प्रथम' इत्यस्य स्थाने 'प्रशम' इत्यपि पाठोऽनेकासु मातृकासु अवलोक्यते। केचिट्टीकाकारा अमुमेव पाठं साधुं मन्यन्ते, किन्तु 'प्रशमदिवसे' (अर्थात् पूर्णिमादिवसे आषाढमासस्य) इति पाठो मल्लिनाथस्य नोऽभीष्टः। सञ्जीवनीटीकायां

स्वकीयमभिमतं पक्षं च सविस्तरं पोषयन् स लिखति— ''केचिद् 'आषाढस्य प्रथमदिवसे' इत्यत्र 'प्रत्यासन्ने नभसि' इति वक्ष्यमाणनभोमासप्रत्यासत्त्यर्थं 'प्रशमदिवसे' इति पाठं कल्पयन्ति, तदसङ्गतम्, प्रथमातिरेके कारणाभावात्.......। प्रथमदिवसातिक्रमेण मेघदर्शनकल्पनायां प्रमाणाभावेन तदसम्भवात्......। इत्यादि।

महाभारतस्य ख्यातनामा टीकाकारो नीलकण्ठ उल्लिखति यद् महाभारतस्य शुद्धपाठनिर्धारणे तेन महत् काठिन्यमनुभूतम्। अतस्तेन विभिन्नेभ्यो देशेभ्यो विविधासु लिपिषु लिखिता बह्वीर्मातृका आनीताः, सर्वास्ताः सम्यगालोचिताश्च। समालोचनानन्तरं स्वविवेकपूर्वकं तेन शुद्धः प्रकृष्टश्च पाठोऽङ्गीकृतः। गुरवोऽपि तेन पाठनिर्धारणविषये पृष्टाः, प्राचीनाष्टीकाश्चापि दृष्टाः। एवं शुद्धतमं पाठं विनिश्चित्य तेन तदनन्तरमेव टीका विहिता—

बहून् समाहृत्य च भिन्नदेश्यान्
कोषान् विनिश्चित्य च पाठमग्र्यम्।
प्राचां गुरूणामनुसृत्य वाचं
प्रतन्यते भारतभावदीपः।।

आनन्दतीर्थोऽपि (१२३८-१३१७ ई.) स्वकीये 'महाभारततात्पर्यनिर्णये' पाठाविलत्वं प्रति स्वकीयमुद्गारमेवं प्रकटयति —

क्वचिद् ग्रन्थान् प्रक्षिपन्ति, क्वचिदन्तरितान्यपि।
कुर्युः क्वचिच्च व्यत्यासं प्रमादात् केचिदन्यथा।।

येन स्पष्टं प्रतिभाति यत् पाठाविलत्वमर्थात् पाठप्रक्षेपम् (अधिको, ग्रन्थकर्त्रा नैव रचितः पाठः), पाठभ्रंशं, पाठवैपरीत्यादिकं प्रति जागरूकाः प्राचीनाः पण्डिताः परिशील्यमानग्रन्थस्य शुद्धं मौलिकं च पाठं निर्धारयितुं सततं सचेष्टा आसन्। एतादृश्यस्त्रुटयस्तु प्रमादादपि भवितुं शक्नुवन्ति, दुराशयेनापि, इत्यपि ते जानन्ति स्म।

अस्मत्सविधे महेश्वरविरचितस्य 'शब्दभेदप्रकाश' इत्याख्यस्य कोशग्रन्थस्यैका वाराणसीतः समानीता मातृका विद्यते। एषा मातृका द्वे प्राचीनतरे मातृकेऽवलोक्य तयोः पाठं च परस्परं तुलयित्वा केनचित् पण्डितेन निर्मिता, यतः प्रायः प्रत्येकं पृष्ठस्य प्रान्तभागे उपरि अधस्ताद् वा पाण्डुलिपिलेखकस्य एवंविधा टिप्पणी वर्तते— ''द्वितीयमातृकायां तु.......पाठः''। एवं यदि कश्चिद् अंशः पाठे त्रुटितः (Lacuna) स्यात्तदा त्रुटिस्थाने 'काकपदं' दत्त्वा त्रुटितांशं प्रान्तभागे संयोज्य, तल्लेखनानान्तरं लेखकः त्रु. इति सङ्केतं प्रददाति।

संस्कृतग्रन्थलेखकाः स्वकीयानामन्यमनस्कत्वात्, प्रमादाद् वा सञ्जातानां त्रुटीनां कृते पाठकानां सविधे सर्वदैव क्षमाशीला आसन्। क्षमां याचमानास्ते पुस्तकस्यान्ते लिखन्ति —

यदतिहृदयवेगाल्लेखनीभ्रान्तिभावान्-
नयनचलनसङ्गाच्छ्रोत्रशब्दावलम्बात्।
लिखितमपकृतं यन्मामकीनात् प्रमादात्
करकृतमपराधं क्षन्तुमर्हन्ति सन्तः।।

ग्रन्थः शोधयित्वा पठनीयः, लिपिकाराय दोषो न दातव्यः, अयमेव सज्जनानां स्वभावो यत् क्वचित् स्खलने जाते दुर्जना हसन्ति; किन्तु सज्जनास्त्वरितमागत्य तं समालम्बन्ते, पुनरपि चोत्थापयन्ति —

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः।।

कष्टेन लिखितस्य ग्रन्थस्य स्वकीयपुत्रवत् सस्नेहं पालनं संरक्षणं च विधेयमित्यपि ग्रन्थलेखकेन प्राथ्यते—

भग्नपृष्ठकटिग्रीवं तुल्यदृष्टि ह्यधोमुखम्।
कष्टेन लिखितं ग्रन्थं पुत्रवत्परिपालयेत्।।

पर्यन्ते ग्रन्थशोधकानां, पाठकानां च कृते प्राय आशीर्वचनमपि प्राप्यते संस्कृतपाण्डुलिपिषु। सर्वेषां तद्ग्रन्थसम्बन्धिनामायुष्यमारोग्यं चिरञ्जीवितां च कामयमानो विद्वान् लेखको विरमति। वयमपि अस्मच्छ्रोतृणां मङ्गलं कामयमाना अनेनैव पद्येन विरमाम—

शोधकाः पाठकाश्चैव चिरं जीवन्तु पण्डिताः।
चिरं जीवन्तु विद्वांसो ये पठन्त्विह पुस्तकम्।। इति।।



# श्रीमद्भागवते दिक्कालानुसन्धानम्

**डॉ.विन्ध्येश्वरीप्रसादमिश्रो विनयः**

**वरिष्ठप्राध्यापकः**

उज्जयिनीस्थ-विक्रमविश्वविद्यालयस्य

संस्कृतप्राध्ययनकेन्द्रे (स्नातकोत्तरसंस्कृतविभागे)



पपीमपि निपीय यः स्वपिति शून्यतल्पे, क्वचित्
पिपर्ति परमाणुतां ननु परार्धवत्तां ततः।
कपिं त्वथ पिपीलिकां नयति च प्लुतिं मन्दतां
प्रचण्डकलनाकलोऽवतु स कालमूर्त्तिः प्रभुः।।१।।

ध्रुवामिह तु निम्नगामथ च पूर्वगां पश्चिमा-
मुदङ्मुखमयीमुमामपि विलक्षणां दक्षिणाम्।
सकोणसरलाकृतिं क्वचन वक्रचक्रात्मिकां
दिशन्ति बहुधा जना दशतनुं तु यां तान्नुमः।।२।।

यं भान्तमनुभान्त्यन्ये युष्मदर्थास्तदाश्रिताः।
तं दिक्कालकलातीतमहमर्थमहं श्रये।।३।।

जगज्जन्माद्युपक्रम्य परसत्यान्तमुज्जगौ।
स्वरूपं ब्रह्मणो यत्तच्छ्रीमद्भागवतं भजे।।४।।

श्रीमद्भागवतं पुराणमुकुटालङ्कारभूतं पुन-
र्विद्याम्भोजवनीविकासनपरः श्रुत्यन्तभानुर्नवः।
भक्तानां हरिपादसेवनजुषां सत्तत्त्वचिन्तामणि-
स्तद्वन्दे त्रिविधं बुधैर्हृदि धृतं पुण्यं शरण्यं महः।।५।।

शास्त्रेषु दर्शननिदर्शनतत्त्ववादे
दिक्कालकल्पनविधौ विविधा विकल्पाः।
तेष्वेवमस्त्यभिनवो विहितो विमर्शः
सन्तः परीक्ष्य सुतरां निगदन्तु सारम्।।६।।

ब्रह्मसूत्रकृतो भाष्यं स्वोपज्ञं रसविग्रहम्।
श्रीमद्भागवतं यस्मात्तस्माद् वेदान्तमुत्तमम्।।७।।

किन्त्वत्रास्ति पुराणत्वं बहुविद्यात्वमप्यतः।
संश्लिष्टं दर्शनं गूढं विवेक्तव्यं प्रयत्नतः।।८।।

परिश्रान्तं विमृश्यैतत्सर्वं रीत्या मयाऽनया।
ययाऽध्यात्माधिदैवञ्चाप्यधिभूतं स्फुटं भवेत्।।९।।

दिक्कालयोः स्वरूपं यद्ग्रन्थेऽस्मिन्नुपलभ्यते।
तत्राप्यस्ति त्रिधात्वं यत्प्रोक्तमाध्यात्मिकादिभिः।।१०।।

प्रत्येकं तु भिदा पश्चात्त्रिद्विरूपत्वमाश्रिता।
दृश्यते तत्त्वदृष्ट्या यत्तदग्रे वक्ष्यते क्रमात्।।११।।

अथ स्वसिद्धान्तनिरूपणात्प्राक् तैस्तैर्वादिभिरभ्युपगतं दिक्कालस्वरूपमुपस्थापनीयं सङ्क्षेपेणेति प्रथमं तार्किकाभिमतं मतमनूद्यते, यदाह केशवमिश्रः— "कालोऽपि दिग्विपरीतपरत्वापरत्वानुमेयः संख्यापरिमाणपृथक्त्वसंयोगविभागवान् एको नित्यो विभुश्च....। स चैकोऽपि वर्तमानातीतभविष्यत्क्रियोपाधिवशाद्-वर्तमानादिव्यपदेशं लभते। कालविपरीतपरत्वापरत्वानुमेया दिक्। एका नित्या विभ्वी च। संख्यापरिमाणपृथक्त्वसंयोगविभागवती। पूर्वादिप्रत्ययैरनुमेया तेषामन्यनिमित्तासम्भवात्। पूर्वस्मिन् पश्चिमे वा देशे स्थितस्य वस्तुनस्तादवस्थ्यात् सा चैकाऽपि सवितुस्तद्देशसंयोगोपाधिवशात् प्राच्यादिसञ्ज्ञां लभते"[१]। इत्येतेषां मते, दिक्कालौ द्रव्यविशेषौ, आकाशव्यतिरिक्तौ प्रमेयत्वेनाङ्गीकृतौ' तथाऽप्यनयोर्व्यवहारहेतुत्वमेवाङ्गीकारकारणम्। कालोऽत्र, अतीतादिव्यवहारहेतुः' कार्यावच्छिन्नं सर्वमप्यर्थजातं प्रत्यस्य निमित्तकारणता, नित्यत्वे विभुत्वेऽथ च सर्वकारणत्वेऽप्यस्य जडत्वं नाभ्युपगमनीयम्। एवमेव प्राच्याद्यापेक्षिक-व्यवहारमात्रसाधिका,

१. तर्कभाषा, प्रमेयनिरूपणम्।

कार्यमात्रे निमित्तकारणकथनान्तपरा, तद्वदेव जडरूपा च दिगपि समाम्नाता, उभयमप्यनुमानैकलब्धसत्ताकमित्यत्र नैके प्रश्ना वरीवृत्यन्ते, तद्यथा—

(क) ज्योतिर्विज्ञानमनुसृत्य पृथक् पृथग् भौतिकपिण्डेषु कालगतिर्भिन्नेति गण्यते, भवन्मते यत्परत्वापरत्वं कालस्य लक्षणं तेनास्य कथं सङ्गतिः?

(ख) ज्योतिर्विज्ञाने पुराणादिषु च 'लोकानामन्तकृत्कालः' इत्युक्त्या कालस्य कर्तृताप्युक्ता, लोकेऽपि कालविपर्ययातज्जडचेतनयोरुभयत्र तत्प्रभावं प्रत्यक्षमवगन्तुं न दुःशकमित्यत्र भवद्भिर्निरूपितो निमित्तकारणमात्रत्वादकिञ्चित्करः कालः, कथमुक्तकालेन कर्तृरूपेण सङ्गमनीयः?

(ग) कालश्चेज्जडो विभुरेकश्च, कथमस्य ज्योतिर्विदुक्तायाः परमाण्वाद्यारभ्य द्विपरार्धपर्यन्ताया गतेः सार्थक्यम्?

(घ) पूर्वस्मिन् हायने काश्यां दृष्टचरस्य अद्य चोज्जयिन्यां साक्षात्कृतस्य 'देवदत्तस्य', 'सोऽयं देवदत्त' इति प्रत्यभिज्ञाने, सत्यपि देवदत्तरूपपिण्डैक्ये तत्तेदन्तयोरन्तरं निरन्तरमनुभूयते काश्युज्जयिनीत्यन्तरवदित्यत्रोपाधिभेदाभावात्कथं कालद्वयस्य पार्थक्यानुभवसम्भवः, भवदभिमतकालस्यैकत्वप्रसङ्गात्।

(ङ) दिक्कालौ सूर्यसापेक्षौ, स्वशरीरान्तःकरणसापेक्षावपि भवतः, 'मत्तो पूर्वस्यां दिशि घटः', 'घटिकाद्वयं क्षणार्धमिवानुभवामी'ति च प्रायशः सर्वस्याप्यनुभवादित्यत्र तार्किकाभ्यूहितयोः परत्वापरत्वयोः कीदृशी सङ्गतिः सूर्यपिण्डस्वशरीरादिपिण्डद्वयापेक्षितकालयोरपि द्वैतापत्तेर्दुर्वारत्वात्।

इति तार्किकमतं न क्षोदक्षममभ्युपगच्छामः। सांख्यास्तु दिशःप्रदेशे कालस्य च क्षणरूपायामुपाधावन्तर्भावः स्वीकुर्वते।

'दिक्कालावाकाशादिभ्यः'[१] इति कपिलसूत्रस्य प्रवचनभाष्ये सांख्याचार्यो श्रीविज्ञानभिक्षुस्तु दिक्कालावाकाश एवान्तर्भवयति—''तत्तदुपाधिविशिष्टाकाशमेव खण्डदिक्कालौ। यौ नित्यौ दिक्कालौ तावाकाशप्रकृतिभूतौ प्रकृतेर्गुणविशेषावेव। खण्डदिक्कालौ तत्तदुपाधिसंयोगादाकाशादुत्पद्येत''[२] इत्येवमादिभिर्वचनैः।

आपातरमणीयोऽयमुपन्यासः स्वसिद्धान्तनिरूपणावसरे निरस्यत इति पर्यायेण योगदर्शनस्याभिमतिरनुसन्धेया। भगवता पतञ्जलिना—

---

१. सांख्यसूत्रे-२।१२;     २. तत्रैव, सांख्यप्रवचनभाष्यम्।

"स एष पूर्वेषामपि गुरुः कालेनाऽनवच्छेदात्''[१] इति सूत्रवर्णमुपन्यस्यता अवच्छेदकरूपात्कालस्य सङ्केतो व्यधायि। योगभाष्यकृद् भगवान् व्यासश्च—'पूर्वे हि गुरवः कालेनावच्छेद्यन्ते, यत्रावच्छेदार्थेन कालो नोपावर्तते स एष पूर्वेषामपि गुरुः' यथाऽस्य सर्गस्यादौ प्रकर्षगत्या सिद्धस्तथाऽतिक्रान्तसर्गादिष्वपि प्रत्येतव्यः''[२] इति विवृण्वन्, कालस्यावच्छेदकताम्[३], ईश्वरं व्यतिरिच्य निखिलप्रपञ्चे व्यापकताम्[४], गतिशीलताम्[५], अनादितां[६] चाभिव्यनक्ति। अत्रैव तत्त्ववैशारद्यां श्रीवाचस्पतिः, ''कालस्तु शतवर्षादिः'' इति वाक्येन एतस्य संख्यावत्वमपि सूचयति।

इत्थमानुषङ्गिकरीत्याऽपि योगदर्शनप्रतिपादितं कालस्वरूपं श्रीमद्भागवतप्रस्थानोक्तकालस्वरूपस्यैकदेशं परामृशतीति तत्प्रतिपादनावसरे निरूपयिष्यते, अधुना गुरुमतानुयायिनां मीमांसकचणानां हार्दमाविष्क्रियते विषयेऽस्मिन्, यथा—

परत्वमपरत्वञ्च कार्यमागन्तुहेतुजम्।
विना दिक्कालयोर्योगमन्यथा नोपपद्यते[७]।।

इत्यमीषां मते नैय्यायिकानामिवासज्जते दिक्कालधारणा। इमेऽपि दिक्कालयोरनुमानेनैव ग्रहणमुद्भावयाञ्चक्रुः, यथा—

'चिरादिविशिष्टप्रत्ययलिङ्गः कालः'[८] इत्यत्र लिङ्गसद्भावादनुमितिजनकता, नीरूपत्वाच्चास्य प्रत्यक्षपराङ्मुखता। कालसत्त्वे प्रयोगस्त्वित्थम्—

---

१. पातञ्जलयोगसूत्रे, समाधिपादे २६ तमं सूत्रम्।

२. तत्रैव (१।२६ सूत्रे) व्यासभाष्यम्।

३. कालेनावच्छेद्यन्त इति वाक्यात् कालस्यावच्छेदकता शक्तिमत्ता चाभिव्यज्यते।

४. पूर्वे हि गुरवः कालेनावच्छेद्यन्ते यत्रावच्छेदार्थेन कालो नोपावर्तते, स एष पूर्वेषामपि गुरुरित्यनेनेश्वरातिरिक्तसर्वप्रपञ्चव्यापित्वम्।

५. नोपावर्तते, प्रकर्षगत्या....अनेन गतिशीलता।

६. अतिक्रान्तसर्गादिष्वपीत्यनेन कालस्यानादिता स्फुटीभवति।

७. गुरुसम्मताः पदार्थाः (लघुग्रन्थोऽज्ञातकर्तृकः') योगीन्द्रानन्दस्वामिसम्पादित-मानमेयोदयस्य परिशिष्टभूतः (चौखम्बाविद्याभवनम्, वाराणसी १९९६, पृ. २९७) इत्यत्र।

८. तत्रैव।

१. स्थविरादौ परत्वं, तपनविप्रकर्षबुद्धिजन्यं तदनुविधायित्वात्कुविन्दपटवत्।

२. तपनपरिस्पन्दाः स्थविरशरीरसम्बद्धास्तदवच्छेदकत्वात् पटावच्छेदकमहारजतरागवत्।

३. तेषां तत्सम्बन्धस्तदाश्रयसंयुक्तद्रव्यद्वारकः प्रकारान्तरासम्भवे सति सम्बन्धत्वात् पटे महारजतरागसम्बन्धवत्। अन्यथा परत्वादिविशिष्टप्रत्ययानुपपत्तेः।

तस्मात् तपनपरिस्पन्दानां स्थविरादिसम्बन्धद्वारभूतं द्रव्यं कालः[१]।

एवमेव दिङ्लक्षणपूर्विका दिगनुमितिप्रक्रिया, यथा— इतः प्रागित्यादिविशिष्टप्रत्ययलिङ्गा दिक्।

तपनसंयोगानां मूर्त्तसम्बन्धे द्वारभूतं द्रव्यं दिक्। स्थविरादौ परत्वादेस्तपनादिक्रियाया असमवायिकारणत्वात्। इत्थमन्यत्र संयोगस्यासमवायिकारणत्वात् तेन तत्सिद्ध्यर्थं दिक्कालावाश्रयणीयौ तौ च प्रत्यक्षौ विशेषगुणरहितनित्यद्रव्यत्वान्मनोवत्।

अस्मिन् मते, परिणामपृथक्त्वसंयोगविभागाख्यचतुर्णामेव गुणानां स्वीकारात्संख्यासहितगुणपञ्चकाभ्युपयायिनां गौतमानुयायिनां मतेन किञ्चिद्व्यतिरेकः। गुरुमतावलम्बिनस्तु संख्यां पृथक्पदार्थत्वेन समामनन्तीत्यवधेयम्[२]। अत्र कौमारिलास्त्वेवं सङ्गिरन्ते—''दिक्कालाकाशाः प्रत्यक्षाः' अमनस्त्वे सति विभुत्वाद् आत्मवत्''[३]।

इमे दिक्कालयोरनुमेयत्वं साटोपमुत्कुर्वते। 'अस्यां दिश्ययं शब्दः' इत्यनुभवाच्छब्दस्य विशेषणत्वेन प्रत्यक्षत्वं मन्वानानामेषामियं वाचोयुक्तिः— ''यद्यपि न स्वातन्त्र्येण दिशः श्रोत्रग्राह्यत्वम्, तथापि रावे गृह्यमाणे तद्विशेषणतया दिगपि श्रोत्रेण गृह्यते''[४] इति। एवमेव, 'अस्मिन् क्षणे मयोपलब्धो घटः' इत्याद्यनुभवप्रसङ्गेषु घटादिविशेषणत्वेन — ''प्रातःकालोऽयं सायंकालोऽय''-

---

१. गुरुसम्मताः पदार्थाः (लघुग्रन्थोऽज्ञातकर्तृकः, योगीन्द्रानन्दस्वामिसम्पादितमानमेयोदयस्य परिशिष्टभूतः, चौखम्बाविद्याभवनम्, वाराणसी, १९९६, पृ. २९७) इत्यत्र।

२. द्रव्यजातिगुणाः कर्मसंख्यासादृश्यशक्तयः।
समवाय इतीमेऽष्टौ पदार्था गुरुसम्मताः।। (गुरसम्मताः पदार्थाः, पृ. २९३)

३. मानमेयोदये, प्रमेयपरिच्छेदे, द्रव्यनिरूपणम्, पृ. १७९।

४. शास्त्रदीपिकायाम्, कृष्णदास-अकादमी, वाराणसी, १९८८, पृ. १३९।

मित्यादिप्रत्ययानां सूर्योदयादिदर्शनानुगृहीतनयनजन्यत्वात्[१] कालस्यापि प्रत्यक्षवेदितामुद्भावयन्ति। भाट्टानां प्रत्यक्षलक्षणं तु विलक्षणमेव—

"न हि रूपिप्रत्यक्षमित्यस्माकं प्रत्यक्षलक्षणं किन्तु संविदेव परोक्षापरोक्षनिर्भासा जायमाना, इदं प्रत्यक्षमिदं प्रत्यक्षमिति विभजते"[२] इति।

अत्रापि तार्किकवद्दिक्कालयोरेकत्वं विभुत्वञ्चोररीकृत्योपाधिवशादेव क्रमशो निमेषादारभ्य संवत्सरान्ताः प्राच्योदीच्यादयश्च व्यावहारिकव्यपदेशाः सम्मता इति तन्नयसङ्क्षेपः[३]।

अद्वैतवेदान्तिनस्तु—दिक्कालयोरस्तित्वं नितरां प्रत्यवतिष्ठन्ते, यथाहुः श्रीचित्सुखाचार्याः—

प्रत्यक्षागोचरत्वेन परत्वादेरलिङ्गतः।
स्वरूपतोऽनिमित्तत्वादुपाधौ निष्फलत्वतः।।
दिवाकरपरिस्पन्दपिण्डसङ्गतिसम्भवात्।
व्यापिनश्चेतनादेव कथं कालः प्रसिद्ध्यति[४]।। इति।।

अपि च—

इन्द्रियानधिगम्यत्वान्नाध्यक्षं नानुमा दिशि।
वर्णैरर्थान्तरत्वेन साध्यासिद्धिर्निदर्शने[५]।।

इत्यत्र च रूपादिरहितद्रव्यत्वेन बाह्यत्वेन च बहिरन्तःकरणागोचरत्वात्प्रत्यक्षेण, परत्वादेस्तल्लिङ्गाभावादुपाधिनिष्फलत्वाच्चानुमानेनापि न कालसत्तासिद्धिः। एवमेव दिक्साधनेऽपि, इन्द्रियानधिगम्यत्वात्प्रत्यक्षस्य, अलिङ्गत्वाच्चानुमानस्याप्रसक्तित्वकारणान्न तत्सिद्धिरित्यमीषां राद्धान्तितमुपलभ्यते। श्रीमधुसूदनसरस्वतीपादा अपि—"आकाशातिरिक्ता च दिङ् नास्त्येव, कालश्च नेश्वरादतिरिच्यते, अतिरिक्ते वा दिक्कालशब्दावप्युपाधिविशेषप्रवृत्तिनिमित्तकाविति जातिशब्दावेव"[६]।

---

१. मानमेयोदये, प्रमेयपरिच्छेदे, द्रव्यनिरूपणम्, पृ. १८१।
२. शास्त्रदीपिकायाम्, पृ. ४६; ३. मानमेयोदये, पृ. १८३।
४. तत्त्वप्रदीपिकायाम्, द्वितीयपरिच्छेदे, ६०-६१ कारिके।
५. तत्रैव, द्वितीयपरिच्छेदे, ६२ कारिका।
६. श्रीमधुसूदनसरस्वतीकृत-गीताभाष्ये, १३।१२।

इत्युक्त्या, दिश आकाशे, कालस्य चेश्वर एवान्तर्भावं स्वीकुर्वन्ति। केचिच्चाचार्या 'अविद्यैव काल' इति मन्वते, यथाहुः श्रीनृसिंहाश्रमस्वामिनोऽद्वैतदीपिकायाम्—"वस्तुतस्तु अविद्यादिरेव काल इत्युक्तम्"[१]। इति।

विशिष्टाद्वैतिनां तत्त्वमीमांसायां कालस्य द्रव्यत्वं जडत्वञ्च निरूपितम्, यथेयं वेङ्कटनाथोक्तिः सर्वदर्शनसङ्ग्रहे—

"द्रव्यं द्वेधा विभक्तं जडमजडमिति प्राच्यमव्यक्तकालौ"[२] इति। व्याकरणदर्शने निमेषादिक्रियोपहिता परमेश्वरस्य स्वतन्त्रा शक्तिरेव कालशब्देन व्यपदिश्यते। इयं कालशक्तिर्जन्मादिषड्विकाराणां निमित्तभूता एकाऽप्युपाधिवशादनेकत्वं क्रमिकत्वञ्चाश्रित्य विराजते, यदुक्तं हरिणा वाक्यपदीये—

अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः।
जन्मादयो विकाराः षड् भावभेदस्य योनयः[३]।।

नास्तिकेष्वार्हता अस्तिकायत्वाभावेऽपि, गुणपर्यायवद्द्रव्यमिति[४] स्वाविष्कृतद्रव्यलक्षणाद् वर्तनाहेतुत्वगुणस्याभिव्यक्तिरूपस्य च पर्यायस्य तस्मिन् सद्भावात् कालस्य द्रव्यत्वमभ्युपयन्तीति कृतमसन्निबन्धनविस्तरेण।

अधुना ज्योतिर्विद्योपपादितकालसिद्धान्तमुपस्थाप्यते। सूर्यसिद्धान्ते कालस्य लक्षणं भेदाश्च यथा—

लोकानामन्तकृत्कालः कालोऽन्यः कलनात्मकः।
स द्विधा स्थूलसूक्ष्मत्वान्मूर्त्तश्चामूर्त्त उच्यते[५]।। इति।

अयमाशयः—अस्मिन् शास्त्रे कालो द्विधा, अखण्डदण्डायमानः शास्त्रान्तरेषु प्रसिद्धो लोकानां चेतनाचेतनानां विनाशकृदेकः, कलनात्मको व्यावहारिकः खण्डकालश्चान्यः। प्रथमः, "कालः सृजति भूतानि कालः संहरति प्रजाः" इत्युक्त्या उत्पत्तिस्थितिकृदपि सिद्ध्यति, विनाशकरत्वञ्चात्रोपलक्षणमात्रम्।

---

१. अद्वैतदीपिकायाम्, तृतीयपरिच्छेदे, पृ. ४४३, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयसंस्करणम्-१९८४।

२. सर्वदर्शनसङ्ग्रहे, रामानुजदर्शनम्, पृ. १८७, चौखम्बाविद्याभवनम्, वाराणसी, १९९४।

३. वाक्यपदीये, ब्रह्मकाण्डे, का. ३।

४. तत्त्वसूत्रे-५।३८।

५. सूर्यसिद्धान्ते-१।१० (खेमराज-श्रीकृष्णदास-वेंङ्कटश्वर-प्रेस, बाम्बे, १८९६ ई.)।

इत्थं कालस्य कर्तृरूपताऽत्र सुतरां सम्मता। द्वितीयः कलनात्मकः, पुनर्भेदद्वयेनोपलक्षितः स्थूलसूक्ष्मत्वान्महत्त्वाणुत्वाभ्यां वा। यः स्थूल इयत्तावच्छिन्नपरिमाणोऽसौ मूर्त्तः, सूक्ष्मस्तद्भिन्नश्चामूर्त्त इत्युच्यते ज्योतिर्विद्भिः। सूक्ष्मस्यैवामूर्तस्य त्रुट्यादिभिर्व्यपदेशो यथा—

सूच्या भिन्ने पद्मपत्रे त्रुटिरित्यभिधीयते।
तत्षष्ट्या रेणुरित्युक्तो रेणुषष्ट्या लवः स्मृतः।।
तत्षष्ट्या लीक्षकं प्रोक्तम्[१] ................।।इति।।

लीक्षकषष्टिगुणत्वेन[२] प्राणसञ्ज्ञा तत आरभ्य स्थूलत्वं मूर्त्तत्वञ्चाम्नायते, यदुक्तं तत्रैव— 'तत्षष्ट्या प्राण उच्यते' इति। अनेन क्रमेण, षट्प्राणाः पलम्, षष्टिपलान्येका नाडी, षष्टिनाड्य एकं नाक्षत्रमहोरात्रम्, त्रिंशदहोरात्राणि एको मासः, द्वादशमासा एकं मानुषं वर्षमिति व्यवहारः प्रवर्त्तते। एवञ्च दिव्यवर्षयुगचतुर्युगमन्वन्तरक्रमेण ब्रह्मणो दिनस्थानीयस्य कल्पस्य तदनु ब्राह्मदिवसमासवर्षादिगणनपद्धत्या ब्रह्मणोरायोरर्धभागस्य परार्धस्य परस्ताद्द्विपरार्धरूपस्य ब्रह्मणोरायुमानस्य व्यवस्थाऽत्र कल्प्यते। आगमशास्त्रेषु मायायाः पञ्चकञ्चुकेष्वन्यतम एकः परमशिवस्वरूपश्चान्यो महाकालसञ्ज्ञक इति द्विधात्वमुपलभ्यते कालतत्त्वस्येतिविस्तरभयात्प्रकृतावनुपयोगित्वान्नेह प्रतन्यते। सम्प्रति श्रीमद्भागवतमनुसृत्य दिक्कालावनुसन्धाय तल्लभ्यप्रमाणवचनैरनयोः स्वरूपं व्यवस्थाप्यते।

## श्रीमद्भागवते तत्त्वनिरूपणपद्धतिः

श्रीमद्भागवते आध्यात्मिकाधिदैविकाधिभौतिकमिति तत्त्वनिरूपणस्य त्रिधात्वमुपलभ्यते, तत्र पारिभाषिकपुरुषत्रयस्वीकारात्। एतदपि व्यवहारमूलं प्रातिभासिकमेव पारमार्थिक्यां सत्तायां तु त्रयश्चैते पुरुषा वस्तुतोऽभिन्ना एव मताः। पुरुषत्रयस्य यो निरुपाधिकः साक्षी स आत्मा परमात्मा वैतेषां त्रयाणामाश्रयः, यथोक्तं द्वितीयस्कन्धे—

य आध्यात्मिकोऽयं पुरुषो सोऽसावेवाधिदैविकः।
यस्तत्रोभयविच्छेदः पुरुषो ह्याधिभौतिकः।।

---

१. सूर्यसिद्धान्ते-१।१० (खेमराज-श्रीकृष्णदास-वेंकटेश्वर-प्रेस, बाम्बे, १८९६ ई.)।

२. लीक्षकषष्टिगुणपरिमितेनेत्यर्थः। एकः प्राणः ६०-लीक्षकात्मक-१० दीर्घाक्षरोच्चारणसमकालः, आधुनिकगणनया ४ 'सेकेण्ड' इत्यात्मक इति तज्ज्ञाः।

एकमेकतराभावे यदा नोपलभामहे।
त्रितयं तत्र यो वेद स आत्मा स्वाश्रयाश्रयः[१]।। इति।

अत्र विवृण्वन्ति भावार्थदीपिकाकृतः श्रीधरस्वामिनः—'योऽयमाध्यात्मिकः पुरुषश्चक्षुरादिकरणाभिमानी द्रष्टा जीवः, स एवाधिदैविकश्चक्षुराद्यधिष्ठाता सूर्यादिः। तत्रैकस्मिन्नेव द्विरूपो विच्छेदो यस्मात्स आधिभौतिकश्चक्षुर्गोलकाद्युपलक्षितो दृश्यो देहः पुरुष इति पुरुषस्य जीवस्योपाधिः......। तत्र तदा तत्त्रितयमालोचनात्मकेन प्रत्ययेन यो वेद, साक्षितया पश्यति, स परमात्मा आश्रयः''[२]।

इत्यनेन तत्त्वमीमांसायां प्रत्येकं त्रैविध्यमश्नुवान एव सन्तिष्ठतेऽस्मिन् श्रीमद्भागवताख्यवेदान्तप्रस्थाने। प्रागुक्तेष्वन्येषु शास्त्रेषु दिक्कालादीनां तत्त्वानां प्रतिपादनं क्वचित्केवलमाध्यात्मिकदृशा, क्वचिच्चाधिभौतिकदृष्ट्यैव तत्तद्वादिभिः साभिनिवेशमुपपाद्यते, स्वसिद्धान्तसरणिसङ्कीर्णतापारवश्यात्परमतं च सर्वथा तिरष्क्रियते। पुराणेष्वन्येषु प्रायः शास्त्रकृद्भिः परित्यक्ता आधिदैविकी पद्धतिरेवाश्रितेति मिथः सङ्गतिरेकवाक्यता वा कस्मिंश्चिदपि प्रसङ्गे सर्वथा खकुसुमायितैव परिदृश्यत इति न तिरोहितं तत्तद्राद्धान्तानुशीलनजुषां विदुषाम्।

श्रीमद्भागवते तु तिसृणामपि पद्धतीनां समाहारोऽधिकारभेदाद्रुचिभेदाद्वा समेषामपि समादर इत्यनतिसाधारण्यमस्य शास्त्रस्य, यथैकादशे, तत्त्वनिरूपणोपक्रमे उद्धवं प्रति विविधरीत्या तत्त्वप्रसंख्यानमुक्तवान्-भगवाञ्छ्रीकृष्णः[३], तदनन्तरं समेषामप्यौचित्यमप्याह युक्तिमत्वमार्षत्वञ्चोद्भावयन्, यथा—

इति नाना प्रसंख्यानं तत्त्वानामृषिभिः कृतम्।
सर्वं न्याय्यं युक्तिमत्वाद् विदुषां किमशोभनम्[४]।। इति।

इत्थं दिशः कालस्यापि निरूपणमत्र क्वचित्तत्त्वनिरूपणात्मिकयाऽऽध्यात्मिकरीत्या क्वचिद्देवचरित्रकथात्मिकयाऽऽधिदैविकपद्धत्या कुत्रचिच्च पदार्थ-विवेचनात्मिकया भौतिकसरण्या बहुधा विप्रकीर्णम्।

---

१. श्रीमद्भागवते-२।१०।८-९; २. तत्रैव 'भावार्थदीपिकाख्या' श्रीधरी टीका।
३. द्र. तत्रैव-११।२२।१-२५; ४. तत्रैव २५ तमे श्लोके।

सम्प्रति सम्प्रतिपाद्यते मुख्यं प्रतिपाद्यमस्मिन् दिक्कालयोः स्वरूपं भेदाः समन्वयश्च प्रतिपदं प्रमाणोपन्यासपुरस्सरम्।

## श्रीमद्भागवते दिक्स्वरूपं तद्भेदाः समन्वितिश्च

अत्र दिक्प्रसङ्गाः सङ्क्षिप्ताः कथाप्रसङ्गेष्वेव च निक्षिप्ता अवलोक्यन्ते। यद्यपि तत्त्वपरिगणनायां साक्षादस्याः समुल्लेखो न दृश्यते, तथापि—

भूपातालककुब्व्योम...............।

त्रैलोक्यमासीत्सह दिग्भिराप्लुतम्[१]।

दिशः प्रसेदुः[२]

भूः खं दिशो द्यौर्विवरापयोधयः[३]।

एवमादिभिः सन्दर्भैर्दिशः पृथग्द्रव्यत्वमाकाशाच्च भिन्नत्वं सुतरामवगम्यते। वस्तुतो दिङ्नामापेक्षिकत्वं, तच्च द्विधा, ब्रह्माण्डोपलक्षितं पिण्डोपलक्षितञ्च। ब्रह्माण्डे सूर्यस्थितिमवलम्ब्य दिशां व्यवस्थितिः पिण्डे च चक्षुषी समाश्रित्य, श्रीमद्भागवते—

भूतानां छिद्रदातृत्वं बहिरन्तरमेव च।
प्राणेन्द्रियात्मधिष्ण्यत्वं नभसो वृत्तिलक्षणम्[४]।।

इत्युक्तदिशा आकाशस्यावकाशत्वं सर्वाधारत्वमेव सिद्ध्यति। अत्रापेक्षिकत्वं नापादयितुं शक्यमेकत्वाद्विभुत्वाच्च। दिशश्चापेक्षाबुद्धिसम्प्रसूता भिन्ना बह्व्यश्चेत्यत्र प्रायः सर्वत्रैव तत्प्रसङ्गे बहुवचनप्रयोगदर्शनादिति परस्तादुदाहरिष्यते। अपेक्षाबुद्धिस्तु पुरुषतन्त्रा, कदाचन मनसोऽवस्थानाद्दिग्भ्रमानुभवदर्शनात्। न पुनः कस्यचनापि क्वाप्याकाशभ्रमः समुत्पद्यत इति दिशां पृथक्त्वं वक्तुमुचितमेव।

श्रीमद्भागवते त्वस्या दिशश्चैते भेदा इत्थमुपपादयितुं शक्याः। यथा—प्रथमतया, आध्यात्मिक्याधिदैविक्याधिभौतिकीति दिशस्तिस्रो भिदाः। आध्यात्मिकी दिगपेक्षाबुद्धिरूपा सूक्ष्मा, सापि व्यष्टिसमष्टिभेदात्पुनर्द्विधात्वं भजमाना प्रतिशरीर-पिण्डकेन्द्रिततत्वात्प्रतिब्रह्माण्डस्थसूर्यकेन्द्रिततत्वाच्च सम्भावयितुं शक्यते। आधिदैविकी श्रोत्रेन्द्रियाधिष्ठातृदेवतारूपा, इयमपि द्वैविध्यं व्यापृण्वाना

---

१. श्रीमद्भागवते, १२।९।१५; २. तत्रैव-८।१८।४,१०।
३. तत्रैव-८।२०।२१; ४. तत्रैव-३।२६।३४।

व्यष्टिसमष्टिरूपा। व्यष्टिर्जीवशरीरस्थश्रवणेन्द्रियाधिष्ठिता समष्टिश्च हिरण्यगर्भ-विग्रहस्थश्रोत्रेन्द्रियाधिष्ठानाधिष्ठिता, अनेनैव क्रमेणाधिभौतिक्यपि अधिष्ठान-(गोलक)रूपा व्यष्टिशरीरसमष्टिशरीरसन्निवेशवैलक्षण्येन द्विधैवेत्याहत्यास्याः षड्भेदाः सम्भवन्ति।

'श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम्'[1]।

इति स्वप्रस्थानाङ्गीकृतप्रमाणचतुष्टयस्यात्र इत्थमुपयोगः — प्रथमभेदस्य व्यष्टिरूपदिग्ग्रहणं समष्टिरूपदिग्ग्रहणञ्च प्रत्यक्षेणानुमानेन, द्वितीयस्य ग्रहणं श्रुत्या, ऐतिह्येन च तृतीयभेदगता व्यष्टिरूपा दिक्प्रत्यक्षग्राह्या, समष्टिरूपा चैतिह्यग्राह्येति चतुर्ण्णामपि मानानामत्र सार्थक्यम्। सुखबोधाय चेदं लेखावितानम्, यथा—

**श्रीमद्भागवते दिक्स्वरूपम्**




---

१. श्रीमद्भागवते-११।१९।१७।

अधुना विवेच्यग्रन्थात्क्रमशो निदर्शनसन्दर्भा यथा—

**१. अपेक्षाबुद्धिरूपाया आध्यात्मिक्या व्यष्टिस्वरूपम्**

प्रथमस्कन्धे—

तदा तदहमीशस्य भक्तानां शमभीप्सतः।
अनुग्रहं मन्यमानः प्रातिष्ठं दिशमुत्तराम्[१]।।

इत्यत्र व्यासं प्रति स्वपूर्वजन्मवृत्तान्तं वर्णयता देवर्षिणा 'प्रातिष्ठं दिशमुत्तरामि'ति यदुक्तम्, तस्य स्वपिण्डसापेक्षं, गमनाव्यवहितपूर्वकालावस्थित-शरीरस्य वामभागमुद्दिश्य प्रातिष्ठं प्रस्थितवानहमित्यर्थः। अथ किंप्रमाणकोऽयमर्थ-श्चेदुच्यते—अत्रैवाध्याये पूर्वं बालकस्य (नारदस्य) दिगादिज्ञानराहित्यवर्णनात्। यथा—'दिग्देशकालाव्युत्पन्नो बालकः पञ्चहायनः'[२]। एवमेव—'प्राङ्निषण्णं मृडं दृष्ट्वा'[३] इत्यादीन्युदाहरणान्यप्यन्वेष्टव्यानि[४]।

**२. आध्यात्मिक्या दिशः समष्टिरूपम्**

'सूर्येण हि विभज्यन्ते दिशः[५]' इति श्रीमद्भागवतवचनात् सूर्याश्रितास्तद-वस्थित्या समूह्या या अपेक्षाबुद्धयस्ता भेदमिममन्वर्थयन्ति, एतन्निर्देशो विस्तरेण पञ्चमे स्कन्धे, अत्र तु प्रादेशमात्रमुदाह्रियते, यथा—'यन्मध्यगतो भगवांस्तपतां पतिस्तपन आतपेन त्रिलोकीं प्रतपत्यवभासयत्यात्मभासा स एष उदगयन-दक्षिणायनवैषुवतसञ्ज्ञाभिः[६] इति।

'एवं नवकोटय एकपञ्चाशल्लक्षाणि योजनानां मानसोत्तरगिरि-परिवर्तनस्योपदिशन्ति तस्मिन्नैन्द्रीं पुरीं पूर्वस्मान्मेरोर्देवधानीं नाम दक्षिणतो याम्यां संयमिनीं नाम पश्चाद्वारुणीं निम्नलोचनीं नाम उत्तरतः सौम्यां विभावरीं नाम तासूदयमध्याह्नास्तमयनिशीथानीति भूतानां प्रवृत्तिनिवृत्तिनिमित्तानि समयविशेषेण मेरोश्चतुर्दिशम्[७]'। विद्वद्भिः स्वयमपि विभावनीयान्यन्यान्युदाहरणानि।

---

१. श्रीद्भभागवते-१।६।१०; २. तत्रैव-१।६।८।

३. तत्रैव-४।२।८।

४. दिग्भ्रमस्य कारणमप्येतदेव, दिग्भ्रमस्य निदर्शनं श्रीमद्भागवते, यथा—
यथाऽम्भसा प्रचलता तरवोऽपि चला इव।
चक्षुषा भ्राम्यमाणेन दृश्यते भ्रमतीव भूः।। (११।२२।५३)

५. तत्रैव-५।२०।४४; ६. तत्रैव-५।२१।३।

७. तत्रैव-५।२१।७।

### ३. आधिदैविकी दिक् श्रोत्रेन्द्रियाधिष्ठातृदेवतारूपा

तत्र व्यष्टिरूपा प्रथमा, यथा—

'एवं गदिः कर्मगतिर्विसर्गो घ्राणो रसो दृक् स्पर्शः श्रुतिश्च'।

अत्र जीवशरीरे श्रुतिपदोपलक्षिता आधिदैविकी दिगेव समाम्नाता। अथ च—

पितृहूर्नृप पुर्याद्वार्दक्षिणेन पुरञ्जनः।
राष्ट्रं दक्षिणपाञ्चालं याति श्रुतधरान्वितः।।
देवहूर्नाम पुर्याद्वारुत्तरेण पुरञ्जनः।
राष्ट्रमुत्तरपाञ्चालं याति श्रुतधरान्वितः[१]।।

इत्यत्र पुरञ्जनोपलक्षितजीवस्य शरीरस्थश्रोत्राधिष्ठाने पितृहूर्देवहूर्नाम दक्षिण-वामकर्णयोः श्रुतधराख्यो यः प्रतिपादितः सखा, स एवाधिदैविकदिगित्यवगन्तव्यम्।

समष्टिरूपा द्वितीया—हिरण्यगर्भपदोपलक्षिते प्रजापतौ विराट्पुरुषे च श्रोत्रसञ्ज्ञया अस्या दिशोऽवस्थानमित्थं वर्णितम्—

कर्णावस्य विनिर्भिन्नौ धिष्ण्यं स्वं विविशुर्दिशः[२]।
कर्णौ च निरभिद्येतां दिशः श्रोत्रं गुणग्रहः[३]।
श्रोत्रेण कर्णौ च दिशो...........[४]।
तत्कर्णयोः ककुभो द्यौश्च मूर्ध्नि[५]।
श्रोत्राद्दिशो यस्य.........[६]।
दिशश्च कर्णौ[७]।
इत्यन्येऽपि सन्दर्भा अनुसन्धेयाः।

---

१. श्रीमद्भागवते ४।२५।५०-५१; २. तत्रैव-३।६।१७।
३. तत्रैव-२।१०।२२; ४. तत्रैव-३।२६।६४।
५. तत्रैव-१२।२०।२६; ६. तत्रैव-८।५।३८।
७. तत्रैव-८।७।२६।

**४. आधिभौतिकी अधिष्ठान (गोलक) रूपा**

तत्र व्यष्टिसमाश्रिताया दिश उदाहरणं पूर्वोदाहृतं पुरञ्जनप्रसङ्गस्य पद्यद्वयम्[१]। अपि च तत्रैव एकोनत्रिंशाध्याये पद्यमिदम्—

पितृहूर्दक्षिणः कर्ण उत्तरो देवहूः स्मृतः[२]।

अथ समष्टेरुदाहरणानि श्रीमद्भागवते, तद्यथा हि—

चत्वारि लेभेऽनुदिशं मुखानि[३]।

प्रजापतिपतिस्तन्वं तत्याज व्रीडितस्तदा।
तां दिशो जगृहुर्घोरां नीहारं यद्विदुस्तमः[४]।।
कर्णौ दिशः प्रभोः[५]।

इत्थं श्रीमद्भागवते दिक्तत्त्वमाकाशात्पृथग्रूपेणोपगम्यते तत्र तत्र संश्लिष्टम्। श्रुतयोऽपि[६] बहुशोऽस्याः सुस्पष्टं निरूपणं विदधतीति दिगपलापिनां मतं तात्त्विकं न प्रतिभाति। श्रीमद्भागवते सर्वत्र स्वीकृताः प्रथिताः प्राच्यादयो दशसंख्याका दिश एव कक्षीकृताः सर्वास्वेतासु तात्त्विकमैक्यं पूर्वोक्तदृष्टिभेदाद् व्यावहारिकं प्रातिभासिकमेव पार्थक्यमिति न जातु भ्रमितव्यम्।

## श्रीमद्भागवते कालस्वरूपं, तद्भेदाः समन्वितिश्च

श्रीमद्भागवते मुख्यतया स्थलद्वये स्वप्रस्थानाभिमतानि तत्त्वानि परिगणितानीति प्राक्प्रतिपादितमेव, कालस्य तूभयत्र सन्निवेशो व्यधायि भगवता पुराणकृन्महर्षिव्यासेन, प्रथमं कपिलगीतायाम्। यथा—

महाभूतानि पञ्चैव भूरापोऽग्निर्मरुन्नभः।
तन्मात्राणि च तावन्ति गन्धादीनि मतानि मे।।
इन्द्रियाणि दश श्रोत्रं त्वग्दृग्रसननासिकाः।
वाक्करौ चरणौ मेढ्रं पायुर्दशम उच्यते।।

---

१. श्रीमद्भागवते-४।२५।५०-५१; २. तत्रैव-४।२९।१२।
३. तत्रैव-३।८।१६; ४. तत्रैव-३।१२।३३।
५. तत्रैव-१२।११।६;
६. द्रष्टव्यम्-कठोपनिषदि-२।३१, प्रश्नो. १।६, ऐतरेयोपनिषदि-१।४, २।४, छान्दोग्य. ३।२, १४।२, बृहदारण्यक. २।५।६ इत्यादि।

मनो बुद्धिरहङ्कारश्चित्तमित्यन्तरात्मकम्।
चतुर्धा लक्ष्यते भेदो वृत्त्या लक्षणरूपया।।
एतावानेव संख्यातो ब्रह्मणः सगुणस्य ह।
सन्निवेशो मया प्रोक्तो यः कालः पञ्चविंशकः[१]।।

इत्यत्र पञ्चविंशे पर्याये कालस्य समन्वयः। अपरत्र, एकादश-स्कन्धान्तर्वर्तिनि श्रीकृष्णोद्धवसंवादेऽपि —'गुणव्यतिकरः कालः स्वभावः सूत्रमेव च'[२]। इति कालस्याभ्युपगमो विहितः। किन्त्वत्र विविधरूपेण तत्र तत्र कालस्याविष्करणाद् भागवतप्रस्थाने किंस्वरूपकोऽयमित्यापाततो निश्चेतुं न शक्यत इति स्वोपकल्पितेन प्रमाणपुरस्सरं भेदनिर्देशद्वारेणात्र कालस्वरूपमपि व्यवस्थीयते।

श्रीमद्भागवतशास्त्रे दिग्वत्कालस्यापि मुख्यतस्त्रैविध्यमाध्यात्मिकाद्युपलक्षणेन, यथा—प्रथमम् आध्यात्मिकाधिदैविकाधिभौतिकरीत्या कालस्त्रिविधः, तदनु प्रत्येकं पारमार्थिकव्यावहारिकप्रातिभासिकसत्तानुरोधात्पुनस्त्रिविध इति सङ्कलनेन नव भेदानुपगच्छामः। सम्प्रति क्रमेण नवानामेव विशेषाभिधानानि स्वरूपाणि च निर्दिश्यन्ते, तद्यथा—

**१. आध्यात्मिक इति भेदे पारमार्थिकः कालः**

श्रीमद्भागवते बहुत्र कालस्य ब्रह्मापरपर्यायता भगवद्रूपता ईश्वरात्मकता च सुस्पष्टतयाऽऽम्नायते, यथैते सन्दर्भाः—

एतद्भगवतो रूपं ब्रह्मणः परमात्मनः।
परं प्रधानं पुरुषं दैवं कर्मविचेष्टितम्।।
रूपभेदास्पदं दिव्यं काल इत्यभिधीयते[३]।
योऽन्तः प्रविश्य भूतानि भूतैरत्त्याखिलाश्रयः।
स विष्ण्वाख्योऽधियज्ञोऽसौ कालः कलयतां प्रभुः[४]।।
कालस्येश्वररूपस्य...[५]।।

---

१. श्रीमद्भागवते-३।२६।१२-१५;    २. तत्रैव-१।२२।१३।
३. तत्रैव-३।२९।३६-३७;    ४. तत्रैव-३।२९।३८।
५. तत्रैव-३।२९।४।

न चास्य दयितः कश्चिन्न द्वेष्यो न च बान्धवः।
आविशत्यप्रमत्तोऽसौ प्रमत्तं जनमन्तकृत्॥
यद्भयाद्वाति वातोऽयं सूर्यस्तपति यद्भयात्।
यद्भयाद्वर्षते देवो भगणो भाति यद्भयात्॥
यद्वनस्पतयो भीता लताश्चौषधिभिः सह।
स्वे स्वे कालेऽभिगृह्णन्ति पुष्पाणि च फलानि च॥
स्रवन्ति सरितो भीता नोत्सर्पत्युदधिर्यतः।
अग्निरिन्धे सगिरिभिर्भूर्न मज्जति यद्भयात्॥
नभो ददाति श्वसतां पदं यन्नियमाददः।
लोकं स्वदेहं तनुते महान् सप्तभिरावृतम्॥
गुणाभिमानिनो देवाः सर्गादिष्वस्य यद्भयात्।
वर्तन्तेऽनुयुगं येषां वश एतच्चराचरम्॥
सोऽनन्तोऽन्तकरः कालोऽनादिरादिकृदव्ययः।
जनं जनेन जनयन्मारयन्मृत्युनान्तिकम्[1]॥

अपि च, कालेनेश्वरमूर्तिना[2]।

कालस्याव्यक्तगतेर्योऽन्तर्धावति जन्तुषु[3]।
अनाद्यन्तवतानेन कालेनेश्वरमूर्त्तिना।
अवस्था नैव दृश्यन्ते वियति ज्योतिषामिव[4]॥
कालस्तु हेतुः सुखदुःखयोश्चेत्
किमात्मनस्तत्र तदात्मकोऽसौ[5]।
कालो बलीयान् बलिनां भगवानीश्वरोऽव्ययः[6]।
मध्वादिषु द्वादशसु भगवान् कालरूपधृक्।
लोकतन्त्राय चरति पृथग् द्वादशभिर्गुणैः[7]॥

---

१. श्रीमद्भागवते-३।२९।४०-४५; २. तत्रैव-३।३२।१४।
३. तत्रैव-३।३२।३७; ४. तत्रैव-१२।४।३७।
५. तत्रैव-११।२३।५६; ६. तत्रैव-१०।५१।१९।
७. तत्रैव-१२।११।३२।

एभिर्वचनैरस्य भगवद्रूपता अव्यक्तमयता उत्पत्तिस्थित्यन्तकर्तृता सुतरामभिव्यज्यते। अयं कर्तृरूप इति विशेषेणावधेयम्। सर्वं खल्विदं ब्रह्मेति श्रुत्याऽस्य परमार्थता।

**२. आध्यात्मिकभेदे व्यावहारिकः कालः**

अद्वैतवेदान्तवद् भागवतप्रस्थानेऽपि सृष्टिलयादिप्रक्रिया व्यावहारिकी-तत्परत्वादस्यान्वर्थकता। अयं भगवत्सङ्कल्पात्मकः, सृष्टिपूर्वदशायां गुणत्रय-रूपप्रकृतेः साम्यावस्थायां भगवदिच्छया क्षोभमुत्पाद्य तेषु गुणत्रयेषु वैषम्यमादधात्यतः कारणरूपः करणरूपो वाङ्गीकर्तुमुचितः। श्रीमद्भागवत एतत्स्वरूपसाधकवचनान्येतानि—

कालाद् गुणव्यतिकरः[१]।

सन्नियच्छति कालेन घनानीकमिवानिलः[२]।

कालवृत्त्या तु मायायां गुणमय्यामधोक्षजः[३]।

आद्योऽवतारः पुरुषः परस्य कालः[४]।

कालमायांशयोगेन भगवद्वीक्षितं नभः[५]।

कालमायांशयोगतः[६]।

कालसञ्ज्ञां तदा देवीं बिभ्रच्छक्तिमुरुक्रमः[७]।

कालाख्ययाऽऽसादितकर्मतन्त्रः[८]।

गुणेन कालानुगतेन विद्धः[९]।

कालेन कर्मप्रतिबोधनेन[१०]।

इत्येतेषु कालस्य गुणक्षोभकत्वं भगवदिच्छारूपकरणत्वञ्चोपपादयितुं शक्येते।

---

१. श्रीमद्भागवते-२।५।२२; २. तत्रैव-२।१०।४३।
३. तत्रैव-३।५।२६; ४. तत्रैव-२।६।४१।
५. तत्रैव-३।५।३२; ६. तत्रैव-३।५।३४,३५।
७. तत्रैव-३।६।२; ८. तत्रैव-३।८।१२।
९. तत्रैव-३।८।१३; १०. तत्रैव-३।८।१४।

**३. आध्यात्मिककालभेदस्य प्रातिभासिकः प्रभेदः (विशेषद्रव्यरूपः)**

प्रतिभासो नामाज्ञानस्यावरणशक्तेरुत्पादितो भ्रमविशेषः। अज्ञानदशायामेव प्रमातुः कालस्य पृथक्पदार्थरूपत्वं भगवद्व्यतिरिक्तत्वञ्चेत्यभिमतिः सम्भाव्या, अत एवात्रैतद्व्यपदेशसामञ्जस्यम्। श्रीमद्भागवतशास्त्रेऽनयाऽपि दृष्ट्या कालस्यापदेशा विशेषणानि च दृष्टिपदवीमुपयान्ति, तेषु कानिचन प्रस्तूयन्ते—

द्रव्यं कर्म च कालश्च स्वभावो जीव एव च।
वासुदेवात्परो ब्रह्मन् न चान्योऽर्थोऽस्ति तत्त्वतः[१]।।

इत्यस्मिन् पूर्वार्द्धेन प्रातिभासिकदृष्टेरनुवादं विधायोत्तरार्द्धेन तत्परिहारो विनिवेशित इति नास्ति काचन विप्रतिपत्तिः। एवमेव—

कालं कर्म स्वभावञ्च[२]।
देशतः कालतो योऽसाववस्थातः स्वतोऽन्यतः[३]।
अथैषां कर्मकर्तॄणां भोक्तॄणां सुखदुःखयोः।
नानात्वमथ नित्यत्वं लोककालागमात्मनाम्।।

इत्यारभ्य—

कालावयवतः सन्ति भावा जन्मादयोऽसकृत्[४]।।

इत्यन्तः सन्दर्भोऽवलोकनीयः।

द्वादशेऽपि—

न तस्य कालावयवैः परिणामादयो गुणाः[५]।।
शक्तयः सम्प्रलीयन्ते विवशाः कालविद्रुताः[६]।।
इति बहुत्राऽस्योपलब्धिः श्रीमद्भागवते[७]।

एतत्त्रयमाध्यात्मिककालस्य प्रभेदरूपम्, आत्मानमधिकृत्य तात्त्विकममूर्तमव्यक्तविभुरूपमवलम्ब्यैतस्य प्रसरस्तस्मादस्मत्कृत 'आध्यात्मिक' इति व्यपदेशो नोपालम्भनीयः।

---

१. श्रीमद्भागवते-२।५।१४; २. तत्रैव-२।५।२१।
३. तत्रैव-३।७।५; ४. तत्रैव-११।१०।१४,१६।
५. तत्रैव-१२।४।१९; ६. तत्रैव-१२।४।२२।
७. अन्यदपि द्रष्टव्यम्, श्रीमद्भा. ३।११।३७, ६।१।४२, ६।१।४७, ७।२।४१, ७।२।५२, ७।२।५६।

### ४. आधिदैविकभेदे पारमार्थिक इति प्रथमः प्रभेदः

पौराणिकदेवशास्त्रे प्रत्येकं वस्तुजातं तत्तदधिष्ठातृदेवता दिव्यरूपेण व्याप्नोति, देवतायाः सैषा मूर्त्तिर्भावगम्या स्वर्गादिलोकस्थिता उपासनार्हा। श्रीमद्भागवतमहापुराणे अनयाऽपि दृष्ट्या उक्तपारमार्थिकादिभेदत्रयेण सह सङ्कलय्य कालमीमांसा विन्यस्ता, अत्र क्रमशः सङ्क्षेपेणैव तदुद्भाव्यते—

सोऽयमद्य महाराज भगवान् भूतभावनः।
कालरूपोऽवतीर्णोऽस्यामभावाय सुरद्विषाम्[१]।।

कालात्मना भगवता शक्रदर्पं जिघांसता[२]।

दुरत्ययः काल उपात्तदण्डः[३]

त्वमप्रमत्तः सहसाऽभिपद्यसे
क्षुल्लेलिहानोऽहिरिवाखुमन्तकः।
स एव कालेन दुरत्ययेन ते...[४]।

भगवाञ्ज्ञातसर्वार्थ ईश्वरोऽपि तदन्यथा।
कर्त्तुं नैच्छद् विप्रशापं कालरूप्यन्वमोदत[५]।।

नस्योतगाव इव यस्य वशे भवन्ति
ब्रह्मादयस्तनुभृतो मुहुरर्द्यमानाः।
कालस्य ते प्रकृतिपूरुषयोः परस्य
शं नस्तनोतु चरणः पुरुषोत्तमस्य[६]।।

कालो गभीररय उत्तमपूरुषस्त्वम्......[७]।

एको नारायणो देवः पूर्वसृष्टं स्वमायया।
संहृत्य कालकलया कल्पान्त इदमीश्वरः।।

एक एवाद्वितीयोऽभूदात्माधारोऽखिलाश्रयः।
कालेनात्मानुभावेन साम्यं नीतासु शक्तिषु[८]।।

---

१. श्रीमद्भागवते-१।१३।४८; २. तत्रैव-१०।२४।३१।
३. तत्रैव-१०।२७।६; ४. तत्रैव-१०।५१।५०-५१।
५. तत्रैव-११।१।२४; ६. तत्रैव-११।६।१४।
७. तत्रैव-११।६।१५; ८. तत्रैव-११।९।१५-१६।

भ्रूभङ्गमात्रेण हि सन्दिधक्षोः
कालात्मनो यस्य तिरोभविष्यति[१]।
विष्णौ त्र्यधीश्वरे चित्तं धारयेत्कालविग्रहे।
स ईशित्वमवाप्नोति क्षेत्रक्षेत्रज्ञचोदनाम्[२]।।
कालः कलयतामहम्[३]।
कालो देशः क्रिया कर्त्ता करणं कार्यमागमः।
द्रव्यं फलमिति ब्रह्मन् नवधोक्तोऽजयो हरिः[४]।।

इति सर्वत्र चिन्मयविग्रहवति भगवति श्रीविष्णौ तदवतारमूर्तौ श्रीकृष्णे च, कालत्वभावना कृता। भगवतः श्रीविग्रहस्य चिद्घनरूपत्वादथ च मायाविरहितत्वाद् दृष्टेरस्याः पारमार्थिकत्वम्, अत्रापि कालरूपो भगवान् सृष्टिस्थितिसंयमनकृद् दण्डपाणिः कर्तृरूपः किन्त्वत्र लीलामयत्वान्मूर्त्तत्वादाधिदैविकी सञ्ज्ञेति तद्रहस्यज्ञैरनुमोदनीयमेवास्मन्मतम्।

**५. आधिदैविकभेदे व्यावहारिको भेदो विष्णुचक्रसुदर्शनात्मकः करणरूपः**

श्रीमद्भागवते यत्र भगवच्चक्रस्य सुदर्शनस्य कालसञ्ज्ञा व्यपदिष्टा, तत्र आधिदैविकी व्यावहारिकी दृष्टिरेवोद्भावनीया पुराणकर्तुः श्रीद्वैपायनमहर्षेः। भगवतः श्रीविग्रहे तस्यायुधौ च भेदाभावाद् यद्यपि तात्त्विकी भिदाऽत्र नैव सङ्गच्छते, तथापि स्वयमेव कर्तुमकर्तुं समर्थो विग्रहवान् भगवान् हरिः लीलादृष्ट्या दुष्टानां संहारे स्वायुधं सुदर्शनमपेक्षत एव। निदर्शनानि तु—

'विष्णोश्चक्रात्परमाण्वादि द्विपरार्धापवर्गकालोपलक्षणा...कालचक्रं निजायुधम्'[५]।

'यस्यैकं चक्रं द्वादशारं षण्णेमित्रिणाभिसंवत्सरात्मकं समामनन्ति तस्याक्षो....'[६]।

---

१. श्रीमद्भागवते-९।४।५३; २. तत्रैव-११।१५।१५।
३. तत्रैव-११।१६।१०; ४. तत्रैव-१२।११।३१।
५. तत्रैव-५।१४।२९; ६. तत्रैव-५।२१।१३-१४।

अजस्य चक्रं त्वजयेर्यमाणं
मनोमयं पञ्चदशारमाशु।
त्रिणाभिविद्युच्चलमष्टनेमि
यदक्षमाहुस्तमृतं प्रपद्ये[1]।।

चक्रं युगान्तानलतिग्मनेमि
भ्रमन् समन्ताद् भगवत्प्रयुक्तम्[2]।

एकस्मिन् स्थले कालस्वरूपमिदं शार्ङ्गधनुरित्यप्युक्तम्, यथा— कालरूपं धनुः शार्ङ्गमिति[3]।

## ६. आधिदैविककक्षायां प्रातिभासिकः कालः सूर्यात्मकः

सूर्यमण्डलस्याधिष्ठाता कश्यपपुत्रत्वेन पुराणेषु प्रथितो विवस्वान्, भगवतो नारायणस्य प्रातिभासिक्यधिदैवतमूर्त्तित्वेन स्वीकृत इत्यस्मादेव सूर्यनारायणेत्यादि तस्य सञ्ज्ञा सङ्घाघटीति, सन्ध्याद्याह्निककृत्येषु गायत्र्यर्थरूपेण च "ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायण" इत्यसौ प्रत्यहमुपास्यते। एवमेवास्य मण्डलमपि कालमानोपलक्षणीकृतं कार्यरूपम्, यथाह मैत्रायणी-श्रुतिः— 'सूर्यो योनिः कालस्य'[4] इति वस्तुतोऽमूर्ते काले सूर्यगतिघटितायनादिमानजातं प्रातिभासिकमेव, अतोऽस्माभिः श्रीमद्भागवतोक्ता आदित्यसन्दर्भाः कालस्याधिदैवतकक्षायां प्रातिभासिकत्वेनाङ्गीकृतास्तदनुसृत्य एतान्युदाहरणान्युपन्यस्यन्ते, यथा—

"ॐ नमो भगवते आदित्यायाखिलजगतामात्मस्वरूपेण कालस्वरूपेण चतुर्विधभूतनिकायानां ब्रह्मादिस्तम्बपर्यन्तानामन्तर्हृदयेषु बहिरपि चाकाश इवोपाधिना व्यवधीयमानो भवानेक एव क्षणलवनिमेषावयवोपचितसंवत्सरगणेनापामादान-विसर्गाभ्यामिमां लोकयात्रामनुभवति[5]"।

अपि च—

एता भगवतो विष्णोरादित्यस्य विभूतयः।
द्वादशस्वपि मासेषु देवोऽसौ षड्भिरस्य वै[6]।।

---

१. श्रीमद्भागवते-८।५।२८; २. तत्रैव-६।८।२३।
३. तत्रैव-१२।११।१५; ४. मैत्रायण्युपनिषदि (षष्ठप्रपाठके)।
५. श्रीमद्भा. १२।६।६७; ६. तत्रैव-१२।११।४५-४६।

इत्यन्यान्यपि यथायथमनुसन्धेयानि[१]। आधिदैविकं त्वस्य ग्रहर्क्षतारामयमाधिदैविक[२] इति शुकोक्त्या तत्रैवाम्नायते।

आधिभौतिकः कालः—अस्याप्युक्तपूर्वास्त्रयो भेदाः—आधिभौतिकपारमार्थिकः, आधिभौतिकव्यावहारिकः, आधिभौतिकप्रातिभासिकश्चेति प्रथमं वत्सरपञ्चकात्मकः कर्तृरूपो, द्वितीयः परमाण्वाद्यारभ्य द्विपरार्धान्तःकरणरूपस्तृतीयो मनःकल्पनोद्भावितो यादृच्छिकः प्रत्यन्तःकरणभिन्नः कार्यरूपः। अस्यान्तिमस्य च दिव्यादिव्यत्वेन पुनर्भेदद्वयीति प्रकरणसङ्क्षेपः, विवरणं तु यथा—

**७. आधिभौतिकपारमार्थिकः कालः**

श्रीमद्भागवते संवत्सराद्यात्मकस्य कालस्य भौतिकत्वेऽपि भगवन्मूर्तित्वमुपपादितम्, यथा—

यः सृज्यशक्तिमुरुधोच्छ्वसयन् स्वशक्त्या
पुंसोऽभ्रमाय दिवि धावति भूतभेदः।
कालाख्यया गुणमयं क्रतुभिर्वितन्वं-
स्तस्मै बलिं हरत वत्सरपञ्चकाय[३]।।

अत्र च भगवती श्रुतिरपि— "द्वे वाव ब्रह्मणो रूपे कालश्चाकालश्चाथ यः प्रागादित्यात्सोऽकालोऽकालोऽकलोऽथ य आदित्याद्यः स कालः सकलः। सकलस्य वा एतद्रूपं यत्संवत्सरः। संवत्सरात्खल्वेमाः प्रजाः प्रजायन्ते संवत्सरेणेह वै जाता विवर्धन्ते संवत्सरे प्रत्यस्तं यान्ति, तस्मात्संवत्सरो वै प्रजापतिः"[४]। इति।

अत्रत्यः संवत्सरो वत्सरपञ्चकस्योपलक्षकः। वत्सरपञ्चकञ्च श्रीमद्भागवते—

संवत्सरः परिवत्सर इडावत्सर एव च।
अनुवत्सरो वत्सरश्च विदुरैवं प्रभाष्यते[५]।।

एतेषां संवत्सरादीनां मिथो भेदिका आदित्यस्य मन्दमध्यशीघ्रात्मिकाश्च गतयो यथोक्तं तत्रैव—"अथ च यावन्नभोमण्डलं सह द्यावापृथिव्योर्मण्डलाभ्यां कार्त्स्न्येन सह भुञ्जीत तं कालं संवत्सरं परिवत्सरमिडावत्सरमनुवत्सरं वत्सरमिति भानोर्मान्द्यशैघ्र्यसमगतिभिः समामनन्ति"[६] इति।

---

१. द्र.-श्रीमद्भा. ५।२०।३०, पञ्चमस्कन्धस्य एकोनविंशोऽध्यायो विंशतिप्रभृत्यध्यायाश्च।
२. श्रीमद्भा. ५।२३।९; ३. तत्रैव-३।११।१५।
४. मैत्रायण्युपनिषदि-६।१५; ५. श्रीमद्भागवते-३।११।१४।
६. तत्रैव-५।२२।७।

## ८. आधिभौतिकव्यावहारिककालः

श्रीमद्भागवते ज्योतिर्विदां पद्धतिमाश्रित्य परमाण्वाद्यारभ्य द्विपरार्धपर्यन्तं यस्याकलनं कृतमत एवासौ भौतिको व्यावहारिकश्चेति व्यपदिश्यमानः कालभेदोऽस्मदुपकल्पितस्तस्य मूलोद्धरणद्वारेणैव विवृतिरुपस्थाप्यते, सङ्क्षेपधिया प्रकरणस्य सुगमत्वादिति विशेषस्तु टीकाग्रन्थैरवगन्तव्यः—

चरमः सद्विशेषाणामनेकोऽसंयुतः सदा।
परमाणुः स विज्ञेयो नृणामैक्यभ्रमो यतः।।

सत एव पदार्थस्य स्वरूपावस्थितस्य यत्।
कैवल्यं परममहानविशेषो निरन्तरः।।

एवं कालोऽप्यनुमितः सौक्ष्म्ये स्थौल्ये च सत्तम।
संस्थानभुक्त्या भगवानव्यक्तो व्यक्तभुग्विभुः।।

स कालः परमाणुर्वै यो भुङ्क्ते परमाणुताम्।
सतोऽविशेषभुग्यस्तु स कालः परमो महान्।।

अणुर्द्वौ परमाणू स्यात्त्रसरेणुस्त्रयः स्मृतः।
जालार्करश्म्यवगतः खमेवानुपतन्नगात्।।

त्रसरेणुत्रिकं भुङ्क्ते यः कालः स त्रुटिः स्मृतः।
निमेषस्त्रिलवो ज्ञेय आम्नातस्ते त्रयः क्षणः।।

क्षणान् पञ्च विदुः काष्ठां लघुता दश पञ्च च।
लघूनि वै समाम्नाता दश पञ्च च नाडिका।
ते द्वे मुहूर्तः प्रहरः षड्यामः सप्त वा नृणाम्।।
द्वादशार्धपलोन्मानं चतुर्भिश्चतुरङ्गुलैः।
स्वर्णमाषैः कृतच्छिद्रं यावत्प्रस्थजलप्लुतम्।।

यामाश्चत्वारश्चत्वारो मर्त्यानामहनी उभे।
पक्षः पञ्चदशाहानि शुक्लः कृष्णश्च मानद।।

तयोः समुच्चयो मासः पितॄणां तदहर्निशम्।
द्वौ तावृतुः षडयनं दक्षिणं चोत्तरं दिवि।।

अयने चाहनी प्राहुर्वत्सरो द्वादशः स्मृतः।
संवत्सरशतं नृणां परमायुर्निरूपितम्।।
ग्रहर्क्षताराचक्रस्थः परमाण्वादिना जगत्।
संवत्सरावसानेन पर्येत्यनिमिषो विभुः।।इति।

मानुषोपभोग्य इतः परं दिव्यवर्षादारभ्य ब्रह्मणोरायुमानं द्विपरार्धं यावद्गणनाप्रायः सर्वत्र पुराणेषु ज्योतिर्ग्रन्थेषूपलब्धा सा देवादीनां ब्रह्मणश्चेति विस्तरभिया नेह प्रतन्यते।

श्रीमद्भागवते अध्यात्मपारोक्ष्यपद्धत्या अयमेव कालः पुरञ्जनकथायां चण्डवेग[१] इति नाम्ना श्रीकृष्णकथायाञ्च 'कालयवन'[२] (जवनो वेगवान् काल) इति नाम्ना च लक्षितो भगवद्व्यासपादैः।

आधिभौतिकः प्रातिभासिकः—कालस्यैकाऽभिव्यक्तिर्व्यक्तिवैशिष्ट्यमवलम्बमानाऽप्यनुभूयते तत्तदवसरेषु सर्वैरप्यस्मदादिभिरिति प्रागुक्तमप्यस्माभिः। यथा, प्रियजनप्रियवस्तुसंयोगरूपसुखे बंहीयानपि कालः साक्षिचैतन्यस्य सुखानुभवनिमज्जनोत्थवृत्तिरूपताताटस्थ्यात्कदाचिदल्पीयाननुभूयते क्वचिच्च प्रियवियोगादिजन्यदुःखप्रतीक्षादिप्रसङ्गेष्वल्पीयानपि निमेषो युगायितमिवासह्यतामापद्यत इत्ययं मानसोत्थः प्रातिभासिककालो भौतिकत्वावच्छिन्नः।

अस्यापि भेदद्वयी समुपकल्पयितुमुचिता पुराणकृन्निबन्धनमनुसृत्य। तत्र भगवल्लीलारूपस्वजनविमोहिनी योगमायाजन्या प्रथमा, भगवद्वैमुख्यकारिण्यविद्योत्था द्वितीया, पर्यायेण निदर्शनानि—

***(क) भगवल्लीला(योगमाया)जन्या कालस्य प्रातिभासिकी कालप्रतीतिः***

यथा ब्रह्मविमोहलीलाऽवसरे श्रीकृष्णसखायो गोपा वर्षमेकं क्षणार्धमिति भावयाञ्चक्रुः —

एकस्मिन्नपि यातेऽब्दे प्राणेशं चान्तरात्मनः।
कृष्णमायाहता राजन् क्षणार्धं मेनिरेऽर्भकाः।।

---

१. श्रीमद्भागवते, चतुर्थे स्कन्धे २७,२८ इत्यध्यायौ द्रष्टव्यौ।
२. तत्रैव दशमस्कन्धे, ५१ तमोऽध्यायोऽध्येयः।

किं किं न विस्मरन्तीह मायामोहितचेतसः।
यन्मोहितं जगत्सर्वमभीक्ष्णं विस्मृतात्मकम्[१]।।

अत्र कृष्णमायेति शब्दव्याख्याने वंशीधराचार्याः, यथा— 'योगमायैव बहिरङ्गमायात्वेनात्र ज्ञेया, अतो भगवदिच्छाबलायास्तस्यास्तादृशेष्वपि मोहनत्वं घटत एवेति भावः'[२]।

एवमेव, रासपञ्चाध्याय्यां कल्पपर्यन्ताया रजन्या गोपिकाभिरप्रतीतिरन्ये च प्रसङ्गा ऊहनीयाः।

***(ख) अविद्योत्था प्रातिभासिकी कालप्रतीतिः***

यथाऽविद्यावशगः पुरञ्जनः प्रमदोपलालननिरतो महान्तमपि कालं पराक्रान्तं नानुभूतवान्—

तयोपगूढः परिरब्धकन्धरो रहोनुमन्त्रैरपकृष्टचेतनः।
न कालरंहो बुबुधे दुरत्ययं दिवानिशेति प्रमदापरिग्रहः[३]।।

इत्थं श्रीमद्भागवते कालतत्त्वस्यानुसन्धानमस्माभिर्यथामति प्रत्यपादि विद्वज्जनमनोमोदाय, अधुना पूर्ववत्तस्य तस्य कालभेदस्य तेन तेन च प्रमाणेन ग्राहकताऽप्युपपाद्यते, तद्यथा—

१. आध्यात्मिककालस्य— श्रुत्यैतिह्ये।

२. आधिदैविकस्य— ऐतिह्यं योगजप्रत्यक्षञ्च।

३. आधिभौतिकस्य— परत्वापरत्वाद्युपाधिलिङ्गेनानुमानमात्रम्।

झटित्यवबोधसम्पादनाय एतस्यापि रेखाचित्रमित्थं प्रस्तवीमहि, यथा—

---

१. श्रीमद्भागवते-१०।१४।४३-४४।

२. तत्रैव, श्रीभावार्थदीपिकाप्रकाशः।

३. तत्रैव-४।२७।३।


श्रीमद्भागवते कालतत्त्वम्
कालः
आध्यात्मिकः
आधिदैविकः
आधिभौतिकः
पारमार्थिकः
(ब्रह्मसमीकृतो भगवद्रूपः कर्तृरूपश्च)
व्यावहारिकः
(भगवच्छक्तिरूपो भगवत्सङ्कल्परूपश्च करणरूपः)
प्रातिभासिकः
(विशेषद्रव्यरूपः कार्यकारणरूपः)
अव्यक्तता
अमूर्तता वा
अस्य
श्रुतिग्राह्यता
ऐतिह्यग्राह्यता
पारमार्थिकः
(श्रीविष्णुकृष्णादिविग्रहरूपः
मूर्तः कर्तृरूपश्च
ऐतिह्यग्राह्यता योगजप्रत्यक्षग्राह्यता च
व्यावहारिकः
(श्रीविष्णवायुधसुदर्शनचक्रशार्ङ्गधनूरूपः करणात्मकः)
प्रातिभासिकः
(सूर्यमण्डलाधिष्ठातृदेवतारूपः कार्यकारणरूपः)
पारमार्थिकः
(वत्सरपञ्चकात्मकःकर्तृरूपः)
परत्वापरत्वोपाधिलिङ्गेन अनुमानैकग्राह्यता
व्यावहारिकः
परमाण्वाद्यारभ्य परममहत्पर्यन्तः
(द्विपरार्धावसानः कलनात्मकः करणरूपः)
प्रातिभासिकः
मासरूपो मायाकृतः
कार्यात्मकः
योगमायाकृतः
अविद्याकृतः

## प्रदर्शितप्रकारकाणां दिक्कालभेदानां तात्त्विकसमन्वयः

दशलक्षणात्मिकाब्रह्मविद्याऽपरपर्यायः श्रीमद्भागवतग्रन्थः।

सर्ववेदान्तसारं यद् ब्रह्मात्मैकत्वलक्षणम्।
वस्त्वद्वितीयं तन्निष्ठं कैवल्यैकप्रयोजनम्[१]।।

इत्युपसंहारोक्त्याऽस्याद्वैतपरत्वेऽपि समेषां वेदान्तप्रस्थानानामभ्यर्णत्वं प्रत्यपीपदद् भगवान् कृष्णद्वैपायनो व्यासः, अथ च पुनस्तत्रैव—

सर्ववेदान्तसारं हि श्रीभागवतमिष्यते।
तद्रसामृततृप्तस्य नान्यत्र स्याद्रतिः क्वचित्।।

इत्युपश्लोकनभङ्ग्या भगवता तेनैव पुराणमुकुटमणेरस्य **'रसो वै सः'** इति श्रुत्युपलक्षितब्राह्मरसपरत्वमप्युपवर्णितमित्यत्र नैकेषां दार्शनिकपौराणिकादि-राद्धान्तानां तत्त्वज्ञानोत्थभगवद्भक्त्यनुगुणं समन्वयश्चकास्तीत्युपक्रम एवास्माभिः प्रादर्शि। एवं रीत्या यद्यप्यत्र दिक्कालयोः स्वरूपविषये वैविध्यं वरीवर्त्यथापि तात्त्विकदृष्ट्या संसृतेरवास्तविकत्वात्सर्वोऽपि भेदप्रपञ्चः वस्तुरूपिणं परमसत्य-पदेनोपलक्षितं श्रीकृष्णाख्यं भगवन्तं परं ब्रह्मैव वाऽन्वञ्चति समन्वेति च। अधिकारिभेदाद्रुचिभेदाद्दर्शनान्तरेषूपक्लृप्तायां तत्त्वमीमांसायां पृथग्द्रव्यरूपेण पठिता दिक्कालादयोऽत्र व्यावर्णितास्तत् तद्रीत्या, श्रीमद्भागवतदृष्ट्या तु—

मायामात्रमिदं राजन् नानात्वं प्रत्यगात्मनि।
यथा जलधरा व्योम्नि भवन्ति न भवन्ति च।।
ब्रह्मणीदं तथा विश्वमवयव्युदयाप्ययात्[२]।।

इति ब्रह्मैव सद्वस्तु दिगपरिच्छेद्यात् कालत्रयानवच्छिन्नत्वाच्चेति सर्वमपि समञ्जसम्।

शं बोभवीतु भुवने नववत्सरेऽस्मिन्,
राष्ट्रञ्च धर्मनिरतं बिभृयात्समृद्धिम्।
गावो विभान्तु बहुदुग्धभराः सवत्साः,
सन्तः सदैव सुखिनो विचरन्तु लोके।।इति।।



---

१. श्रीमद्भागवते-१२।१३।१२। २. तत्रैव-१२।४।२५-२६।

# वेदरक्षणं नाम वेदार्थानुशीलनम्

**डॉ. राममूर्तिचतुर्वेदी**

वेदविज्ञानसंकायाध्यक्षः
महर्षिमहेशयोगीवैदिकविश्वविद्यालयस्य
जबलपुरम् (मध्यप्रदेशः)



इह भारतभूमौ साक्षात्कृतधर्माणां तपःपूतचरितानामृषीणां समाधिसमनुभूतविषयो विशालो विमलश्च शब्दराशिः "वेद" इति ज्ञायते।

भारतीयवाङ्मये वेदानां स्थानमतीवमहत्त्वपूर्णमस्ति, सम्प्रत्यनेनेदं वक्तुं शक्यते, यदिदानीं वेदराशिं प्रति न केवलं भारतीयानामपि तु वैदेशिकानामपि मनांसि भूयोभूय आकृष्टानि दृश्यन्ते, अतो वेदा न केवलं भारतीयसाहित्येष्वपि तु वैश्विकवैभवेषु गौरवपूर्णं स्थानं लभन्ते। विश्वस्मिन् विश्वे सर्वविधस्य धर्मस्य मूलस्रोतांसि सनातनवैदिकधर्मस्य भारतीयसंस्कृतेश्चाधारभूता वेदा वर्त्तन्ते। तद्यथा—

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च।।
यः कश्चित्कस्यचिद्धर्मो मनुना परिकीर्तितः।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः।। (मनुस्मृतिः- २।६-७)

लौकिकवस्तूनां दर्शनाय यथा नेत्रस्यावश्यकता भवति, तथैव अलौकिकतत्त्वानां परिज्ञानाय वेदरूपं सनातनं चक्षुर्नितरामावश्यकीयते। तद्यथा—

पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम्।
अगम्यं चाप्रमेयञ्च वेदशास्त्रमिति स्थितिः।। (मनुस्मृतिः - १२।९४)

ऋग्वेदभाष्यभूमिकायां सायणाचार्येणापीदं प्रतिपादितं यद् वेदो हि मानवानामिष्टप्राप्तेरनिष्टपरिहारस्य चालौकिकमुपायं बोधयति, अपि च य उपायः प्रत्यक्षानुमानाभ्यां दुर्बोध्योऽविज्ञेयश्च भवति सोऽपि वेदेन सुतरां बोध्यते। तद्यथा—

इष्टप्राप्तिरनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति, स वेदः। अपि च—

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता।।

प्रत्यक्षानुमानोपमानैर्यस्तूपायो ज्ञातुं न शक्यते, तदलौकिकोपायो वेदेनैव परिज्ञातुं शक्यते। तद्यथा—'ज्योतिष्टोमेन स्वर्गकामो यजेत्, न कलञ्जं भक्षयेत्' इत्यनयोरेकत्र विधिः, अपरत्र निषेधो वेदोपदिष्टः। ज्योतिष्टोमयागस्य स्वर्गरूपं फलं प्रति कारणता न प्रत्यक्षविषया नाप्यनुमातुं शक्या, एवमेव कलञ्जभक्षणाभावेन अनिष्टपरिहारोपलब्धिर्जायत इति तार्किकशिरोमणिरपि नैवानुमातुं शक्नोति, तथापि वेदेन विधिनिषेधाभ्यामिष्टप्राप्तेरनिष्टपरिहारस्य चालौकिकोपायो बोध्यते। अत एव वेदा आर्यजातेः सर्वस्वं मन्यन्ते। भारतीया संस्कृतिः, भारतीये ज्ञानविज्ञाने चेति सर्वं वेदानेवाधारीकृत्य प्रवर्तते। एतादृशः शब्दराश्यात्मको वेदोऽद्यापि भारतेऽस्तीत्येवं स्वीयं गौरवं समग्रे जगति वयं समुद्घोषयितुं प्रभवामः।

**वेदानां नित्यत्वमपौरुषेयत्वञ्च**

पुरा गौतम-कपिल-कणाद-व्यास-जैमिनि-प्रभृतयो पारदृश्वानो महर्षयो विभिन्नदृष्ट्या वेदं निरूपयामासुः। तत्र न्यायवैशेषिकमतप्रतिष्ठापयितारो गौतम-कणादयो ''वेदम्'' ईश्वरीयवाक्यं नित्यञ्च मन्वते। तदनुसारेण— ''मन्त्रायुर्वेद-प्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्'' (न्यायसूत्रम् २।१।६८)' 'तद्वचना-दाम्नायस्य' (वै.सू. १।१।३)' 'बुद्धिपूर्वो वाक्यकृतिर्वेदे' (वै.सू. ६।१।१) इत्यादिभिः सूत्रैर्वेद ईश्वरप्रणीतत्वात् पौरुषेयः, तस्य नित्यत्वान्नित्यश्चेति। न्यायसूत्र-भाष्यकारेण वात्स्यायनेनेदं प्रत्यपादि यद् महाप्रलये नित्यः सर्वज्ञश्च परमेश्वरः स्वात्मनि वेदान् निलीय सृष्ट्यादौ स्वयमेव वेदाध्ययनसम्प्रदायं प्रवर्तयति, अत एव नित्यस्य परमेश्वरस्य बुद्धिपूर्वकप्रयासजन्यप्रवर्तकत्वाद् वेदः पौरुषेयो नित्यश्चेति मन्यते। परं सांख्यवेदान्तमीमांसादर्शनप्रवर्तकाः कपिलव्यासजैमिनिप्रभृतयो महर्षयो वेदानां नित्यत्वमपौरुषेयत्वञ्च स्वीकुर्वन्ति। तदनुसारम् ऋग्वेदादयस्तस्य महतो भूतस्य परमेश्वरस्य निःश्वासरूपा वर्तन्ते। तद्यथा— ''तस्यैतस्य महतो भूतस्य

निःश्वसितमेतद् यद् ऋग्वेदः" इति। निःश्वासो नाम मुखाद्बहिर्निर्गमनीयो वायुः, प्रश्वासो नाम अन्तःप्रविश्यमाणो वायुः, यथा मनुजस्यापि निःश्वासप्रश्वासे स्वत एवाविर्भूयेते, न तस्योत्पादने पुरुषेण कश्चित्प्रयासः क्रियते, तद्वद् निःश्वासरूपस्य वेदस्याप्याविर्भावे परमेश्वरस्य न कश्चिदायासँविशेषो जायते, किञ्च वेदेषु यथार्थज्ञानोत्पादिकायाः शक्तेर्विद्यमानत्वाद् वेदानां स्वतः प्रामाण्यं जायते, यथा हि सांख्यसूत्रमुपन्यस्यति—"निजशक्त्यभिव्यक्तेः स्वतःप्रामाण्यमिति, (सा.सू.५।५१)।

वेदानां नित्यत्वं श्रुतिवाक्यानुशीलनेनाप्यवगन्तुं शक्यते, तद्यथा—'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै। तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये"। (श्वेताश्वतरोपनिषदि - ६।१८) अत्र मन्त्रगतवचनेनेदं विज्ञायते यद् विधात्रा परमेश्वरेण सर्वतः प्रथमं ब्रह्मा विधीयते, न च वेदा विधीयन्ते, किन्तु नित्यसिद्धा एव ते वेदा ब्रह्मणो हृदि प्रहीयन्ते — प्रेष्यन्ते। एतेन वेदानां ब्रह्मण आविर्भावात् पूर्वमपि विद्यमानता प्रमाणीक्रियते, यतो हि पूर्वतो विद्यमानानामेव प्रेषणं सम्भवति। परमेश्वरेण ब्रह्मविधानवद् यदि वेदानामपि विधाननिर्माणप्रसङ्गः स्यात्, तर्हि मन्त्रे क्वचिद् ब्रह्मनिर्माणप्रसङ्गवद् वेदनिर्माण-प्रसङ्गोऽपि वक्तव्य एव स्यात्।

वेदैरेव ब्रह्मा सृष्टिं करोतीति प्रसिद्धिः श्रुतिस्मृतिपुराणेषूपलभ्यते, अत एव "भूरिति व्याहरत् तस्माद् भुवमसृजत्" इत्यादिभिः श्रुतिभिः शब्दव्याहरणपूर्विका सृष्टिः श्रूयते। तद्यथा—

सर्वेषां तु नामानि कर्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे।। (मनु. १।२)

यथा लोके कुलालो घटशब्देन घटार्थं कम्बुग्रीवादिमन्तं स्मृत्वा दण्डचक्रादिव्यापारेण तं निर्माति, तथैव विधाता ब्रह्माऽपि तैस्तैः शब्दै-स्तांस्तानर्थान् संस्मृत्य यथायथं समग्रं जगत् सृजति। तद्यथा—

चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक्।
भूतं भव्यं भविष्यञ्च सर्वं वेदात् प्रसिद्ध्यति।।
शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च पञ्चमः।
वेदादेव प्रसूयन्ते प्रसूतिगुणकर्मतः।। (मनु. १२।९७-९८)

## वेदाङ्गानां वेदरक्षकत्वम्

पुरा इह भारते वेदानामध्ययनमेव भारतीयानां मुख्यं शिक्षणमासीत्। वेदाक्षरग्रहणपूर्वकं तदर्थावबोधनं वेदाध्ययनं कथ्यते स्म। वेदाक्षराणां साधु समुच्चारणाय तदर्थावबोधनायैव शिक्षा कल्पोऽथ व्याकरणं निरुक्तं छन्दो ज्यौतिषमिति षडङ्गानि प्रवृत्तानि आसन्। यतो वेदानां भाषा तदर्थौ भावश्चेति उभावपि दुरूहावास्ताम्, अतः कानिचनाङ्गानि वैदिकभाषां साधुतरं बोधयितुं प्रवृत्तानि, कानिचन च भावं वेदार्थं निरूपयितुं प्रवृत्तानि। एवं प्रकारेण वेदाङ्गानि वेदानां शब्दात्मकं बाह्यकलेवरं तदर्थात्मकञ्चान्तःस्वरूपं परिरक्षन्ति स्म। अतो वेदानां सर्वतः संरक्षणार्थं वेदाङ्गानामप्यध्ययनं तदानीमनिवार्यमासीत्। वेदाध्ययनं तदङ्गाध्ययनपूर्वकमेव प्रवृत्तमासीत्, यथा हि महाभाष्ये पस्पशाह्निके भगवता पतञ्जलिना प्रोक्तमस्ति यत्—''ब्राह्मणेन निष्कारणो धर्मो षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति''। तदानीं ब्राह्मणानामिदं परमं प्रयोजनं मुख्यं कर्त्तव्यञ्चासीद्, यत्ते षडङ्गसहितं वेदाध्ययनं तदर्थावबोधनञ्चावश्यं कुर्युः। शिक्षाकल्पादिवेदाङ्गानां कया रीत्या वेदोपकारकत्वं वेदरक्षकत्वञ्चेति सम्प्रति समासेनाऽत्र किञ्चिदुपस्थाप्यते।

### शिक्षा

शिक्षासम्बन्धे सायणाचार्येण ऋग्वेदभाष्यभूमिकायामुक्तं यत् ''स्वरवर्णाद्युच्चारणप्रकारो यत्र शिक्ष्यते उपदिश्यते, सा शिक्षेति''। वेदमन्त्राणां पाठावसरे वर्णानां शुद्धोच्चारणम्, उदात्तादिस्वराणां यथानियमं हस्तप्रदर्शनञ्चावश्यकमासीत्। वेदमन्त्राणामशुद्धोच्चारणं भ्रष्टस्वरपाठश्चेति महते दुष्फलाय कल्पते स्म। श्रूयते यत् पुरा ''इन्द्रशत्रुर्वर्धस्व'' इत्येतन्मन्त्रस्याशुद्धोच्चारणमेव यजमानस्य वृत्रस्य विनाशकारकमभूत्। तद्यथा पाणिनीयशिक्षायामुक्तम्—

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्।।

''स्वाहेन्द्रशत्रुर्वर्धस्व'' इति तैत्तिरीया श्रुतिः।

अत्र इन्द्रशत्रुरित्यत्र इन्द्रस्य शत्रुरिति तत्पुरुषसमासाश्रयणाद् ऋत्विजा अन्तोदात्तत्वं प्रयोक्तव्यमासीद्; परन्तु प्रमादवशात् तेन इन्द्रशत्रुरित्यस्योच्चारणमाद्युदात्तस्वरेण प्रयुक्तम्, अत आद्युदात्तस्य ''इन्द्रःशत्रुर्यस्य'' इति बहुव्रीह्याश्रयणाद् अर्थान्तराभिधानं जातम्, तेन इन्द्र एव वृत्रस्य शमयिता सञ्जातः। अतः साधुशब्दोच्चारणोपदेशेन शुद्धस्वरप्रयोगोपदेशेन च शिक्षा वेदं भृशं रक्षति।

**कल्पः**

कल्पो हि वेदविहितानां कर्मणामानुपूर्वेण कल्पनाशास्त्रमुच्यते। अत्र वैदिकानां यागानां क्रमपूर्वकं व्यवस्थापनं प्रकल्पितमस्ति। इदं हि श्रौतसूत्रम्, गृह्यसूत्रम्, धर्मसूत्रम्, शुल्बसूत्रञ्चेति चतुर्विधं परिगण्यते। तत्र श्रौतसूत्रे ब्राह्मणग्रन्थे वर्णितानां श्रौताग्निसाध्ययागानां क्रमबद्धं वर्णनं वर्तते। गृह्यसूत्रे गृह्याग्नि-साध्ययागानामुपनयनविवाहादिसंस्काराणां सानुष्ठानप्रकारकं विवरणं कृतमस्ति। धर्मसूत्रे चतुर्णां वर्णानामाश्रमाणाञ्च कार्याणि तथा च राज्ञां कर्त्तव्यानि निर्दिष्टानि सन्ति। शुल्बसूत्रे श्रौतयागप्रयुक्तो विविधवेद्यादिनिर्माणप्रकारो विशेषतो वर्णितः। एतत्सर्वं तदानीं वेदार्थावबोधाय तदनुकूलयागानुष्ठानसम्पादनाय चानिवार्यतयाऽ-ध्येतव्यमासीत्।

**व्याकरणम्**

व्याकरणं नामाङ्गं वेदाङ्गेषु मुखस्थानापन्नं विद्यते। यथा—"मुखं व्याकरणं स्मृतमिति"। वेदेषु प्रकृतिप्रत्ययविचारस्य स्वरस्य च महन्महत्त्वं वर्त्तते, तत्र तदर्थं व्याकरणमेव साहाय्यमनुतिष्ठति। इदं हि प्रकृतिप्रत्ययोपदेशपुरस्सरं पदस्वरूपं तदर्थावबोधनञ्च करोति, अतो वेदार्थावबोधने व्याकरणं मुख्यं साधनं वरीवर्ति। पुरा वेदानां प्रतिशाखामाश्रित्य व्याकरणग्रन्था आसन्, ते प्रातिशाख्यग्रन्था उच्यन्ते स्म। साम्प्रतं केचनैव प्रातिशाख्यग्रन्थाः कमप्येकैकं वेदमाश्रित्योपलभ्यन्ते। तद्यथा—ऋग्वेदस्य शौनकप्रणीतम् ऋक्प्रातिशाख्यम्। शुक्लयजुर्वेदस्य कात्यायनविरचितं शुक्लयजुःप्रातिशाख्यम्। कृष्णयजुर्वेदस्य तैत्तिरीयप्रातिशाख्यम्। सामवेदस्य सामप्रातिशाख्यं पुष्पसूत्रं वा। अथर्ववेदस्य अथर्वप्रातिशाख्यम्। किमर्थं व्याकरणमध्येतव्यमिति जिज्ञासायां महाभाष्यकारेणोत्तरितम्—रक्षोहागमलघ्वसन्देहा व्याकरणप्रयोजनम्, रक्षार्थं वेदानामध्येयं व्याकरणमिति।

**निरुक्तम्**

निश्चयेनोच्यते, निश्शेषेणोपदिश्यते वा पदार्थो यत्र तन्निरुक्तमिति। वस्तुतो वैदिकपदानां व्युत्पादनं तदर्थावबोधनाय यया कयाऽपि रीत्या तेषां निर्वचनं निरुक्तशास्त्रस्य मुख्यं प्रयोजनमस्ति। वैदिकानां कठिनपदानां सङ्ग्रहात्मको ग्रन्थो "निघण्टुः" इति प्रसिद्धः, तस्यैव भाष्यरूपं व्याख्यानात्मकमनुपमं ग्रन्थरत्नं निरुक्तमिति। शब्दलक्षणपरिज्ञानं सर्वशास्त्रेषु व्याकरणाद् भवति, परन्तु वैदिकशब्दार्थनिर्वचनपरिज्ञानन्तु निरुक्तादेव जायते। एतन्निरुक्तशास्त्रं पञ्चधा शब्दान् निर्वक्ति, तद्यथा—

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्।।

**छन्दः**

"छन्दांसि छादनात्" इति यास्कोक्तनिर्वचनानुसारं वेदावरणकारित्वात् छन्द इति पदं छद्-छादने धातोर्निष्पाद्यते। प्रायशो वेदाः सन्ति छन्दोबद्धाः, अतस्तेषामुच्चारणाय छन्दोज्ञानं नितरामपेक्षितं भवति। विना छन्दोज्ञानं यो वेदाध्ययनाध्यापने यजनयाजनादि च कर्माणि करोति, तस्य सर्वाण्यपि कार्याणि निष्फलानि भवन्ति। उक्तञ्चात्र कात्यायनेन—"यो ह वा अविदितार्षेयच्छन्दो दैवतब्राह्मणेन मन्त्रेण याजयति वा अध्यापयति वा स्थाणुं वार्च्छति गर्ते वा पात्यते प्रमीयते वा पापीयान् भवति।

वैदिकानि छन्दांसि भेदोपभेदाभ्यां यद्यपि बहुलानि सन्ति, तथापि तत्रेमानि प्रधानतया परिगण्यन्ते, तद्यथा—गायत्री, उष्णिक् अनुष्टुप्, बृहती, पंक्तित्रिष्टुप्, जगती, अतिजगती, शक्वरी, अतिशक्वरी, कृतिः, प्रकृतिः, आकृतिः, विकृतिः, संस्कृतिः, अभिकृतिः, उत्कृतिश्चेति।

"यदक्षरपरिमाणं तच्छन्दः" इति कात्यायनीयसूत्रानुसारं वैदिकछन्दांसि अक्षरगणनया परिमितानि भवन्ति, तत्राक्षराणां गुरुलघुक्रमस्य कश्चिन्नियमविशेषो न भवति।

**ज्यौतिषम्**

वेदेषु बहुविधा यज्ञा विहिताः सन्ति, तत्र केचन यज्ञाः संवत्सरसम्बन्धिनः, केचन ऋतुसम्बन्धिनः, केचन तिथिमासपक्षनक्षत्रसम्बन्धिनश्च दृश्यन्ते। एतेषां विभिन्नकालेषु विहितानां यागानां यथाविध्यनुष्ठानं ज्योतिषज्ञानमन्तरा न भवितुमर्हति। अतो वैदिकयज्ञानां यथाकालमनुष्ठानसम्पादनाय वेदार्थोपकारितया ज्यौतिषं नाम वेदाङ्गमवश्यमध्येतव्यम्। यथा हि लगधप्रणीते वेदाङ्गज्योतिषग्रन्थे प्रोक्तम्—

वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानि पूर्वविहिताश्च यज्ञाः।
तस्मादिदं कालविधानशास्त्रं यो ज्योतिषं वेद स वेद वेदम्।।

भारतीयवाङ्मये ज्योतिषशास्त्रस्यायं ग्रन्थ आद्यग्रन्थरूपेण सम्मान्यते। गच्छता कालेन शास्त्रमिदं संहिता-गणित-जातकाख्येषु त्रिषु भागेषु स्वात्मानं

प्रकटीचकार। एतेन परोक्षं भाविनि भूयमानं च वृत्तं प्रत्यक्षतया ज्ञातुं शक्यते। यथा सत्यमेवोक्तम्—

वेदस्य निर्मलं चक्षुर्ज्यौतिःशास्त्रमकल्मषम्।
विनैतदखिलं श्रौतं स्मार्तं कर्म न सिद्ध्यति।।

अनेन प्रकारेण शब्दार्थरक्षणपराणि शिक्षादि वेदाङ्गानि यथायथं स्वात्मज्ञान-साधनेन वेदानुपकुर्वन्ति। एभिरेव साधनैरस्मदाचार्याः शाकल्यात्रेयगार्ग्याः सायणो-व्वटमहीधरप्रभृतयो मनीषिणश्च वेदेषु निगूढं सुधारसमधिगन्तुं प्रायतन्त। एतेषां प्रदर्शितेनैव मार्गेण वयमपि वैदिकरहस्यं तत्र निहितं हार्दञ्चाधिगन्तुं प्रभवामः।

## वेदानां विश्वानुग्राहकत्वम्

वेदा न केवलं भारतीयानामपि तु विश्वस्य सर्वासामपि मानवजातीना-मनुग्राहकाः पुरातनग्रन्था वर्तन्ते। भारतीयसंस्कृतेः सभ्यतायाश्च ते प्राणभूता वर्तन्ते। साक्षात्कृतधर्माणो महर्षयो वेदानाधारीकृत्यैव विश्वानुग्राहकं यज्ञीयं धर्मतत्त्वमुद्भा-वयामासुः। को हि धर्म? इति जिज्ञासायाम्—"धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः" (मनु. २।१३) इति स्मृतिवचनानुसारं वेदार्थानुशीलनमेवैकशरणमस्ति। सम्प्रति भारते वर्षे यावन्ति दर्शनानि मतानि, उपमतानि च प्रसृतानि सन्ति, सर्वाणि तानि वेदेभ्य एव निर्गतानि सन्ति। अद्यापि वैदिकज्ञानस्य विमला धारा न केवलं भारतभुवमाप्लावयति, अपि तु समस्ते क्षितिमण्डले सर्वास्वपि दिक्षु अजस्रं प्रवहन्ती तत्रत्यान् मनुजान् पावयति। अस्मदीयाः पूर्वजाः केन प्रकारेण जीवनं यापयामासुः? काभिः क्रीडाभिस्ते स्वकीयं मनो मोदयामासुः? का देवतास्ते पूजयामासुः? विवाहसम्बन्धस्योद्देश्यं किं ते निर्धारयामासुरित्यादिविषये जिज्ञासा जायते चेद् एतदर्थं वेदा अध्येतव्यास्तदर्थाश्चानुशीलयितव्याः।

## वेदरक्षणस्य साम्प्रतिकप्रयासः

सम्प्रति वेदानां रक्षणाय बहव उपायाः क्रियन्ते। तत्र वैदिकसंहिताकण्ठी-कृतेभ्यः कतिपयेभ्यो वेदविद्भ्यो भूयान् पुरस्कारराशिर्दीयते। स्व-स्ववेदशाखा-मन्त्रान् श्रावयितृभ्यो विविधाः पुरस्काराः प्रकल्प्यन्ते। परन्त्वत्रेदं विचार्यते, किम् एतेनैव वेदरक्षणं सम्भविष्यति? केवलं वेदाक्षरसंरक्षणमेव वेदरक्षणमस्ति? इति। तत्र मीमांसादर्शने प्रथमाध्यायस्य प्रथमपादस्य प्रथमाधिकरण एव एतद्विचारितं विद्यते यद् वेदाध्ययनं नाम किं वेदाक्षरराशिग्रहणमुताहो वेदार्थग्रहणमिति। तत्र

''स्वाध्यायोऽध्येतव्यः'' इत्यध्ययनविधिमाश्रित्य विचारः कृतो विद्यते, तत्र पूर्वपक्षो वेदाक्षरग्रहणमात्रं वेदाध्ययनमस्तीति वदति, तत्रैतादृशस्य वेदाध्ययनस्य किं फलमिति पृष्टेऽदृष्टं स्वर्गरूपं फलमुपजायत इति सतर्कं प्रतिपाद्यते; परन्तु सिद्धान्तपक्षो वेदाध्ययनस्य वेदार्थावबोध एव फलमिति सप्रमाणमुद्घोषयति, तन्मते ''लभ्यमाने फले दृष्टे नादृष्टपरिकल्पना'' इति न्यायेन वैदिकवाक्यानां निगमनिरुक्तव्याकरणादिज्ञानसहकारेण अर्थाः प्राप्यन्ते, अतो वेदार्थावबोध एव वेदाध्ययनस्य फलमिति विमृष्टो निर्णीतश्च पक्षः।

वेदाध्ययनप्रसङ्गे शतपथश्रुत्या एतत् सुस्पष्टं ज्ञायते यद् धनपरिपूर्णायाः पृथिव्या दानेन यावत्फलं प्राप्यते, ततोऽधिकं फलं वेदाध्ययनात्प्राप्यते, अतो नित्यं वेदोऽध्येतव्य इति। तद्यथा—

''यावन्तं ह वै इमां पृथिवीं वित्तेन पूर्णां ददत्, लोकं जयति, त्रिभिस्तावन्तं जयति, भूयांसं चाक्षय्यं च य एवं विद्वान् अहरहः स्वाध्यायमधीते, तस्मात् स्वाध्यायोऽध्येतव्यः''। (श.ब्रा. ११।५।६।१)

अत एव मनुर्वेदाध्ययनं द्विजातेः परमं कर्त्तव्यं मनुते, तदनुसारं वेदाध्ययनमुपेक्ष्य यदि कश्चिद् द्विजः शास्त्रान्तराध्ययनं कुरुते, स जीवन्नेव सपरिवारः शूद्रत्वमुपगच्छति। अथ च वेदार्थं जानन् पुरुषो यत्र कुत्रापि वसति आत्मनः कर्मजं दोषं दग्ध्वा ब्रह्ममयो भवति। तद्यथा—

योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः।। (मनु. २।१६८)

यथा जातबलो वह्निर्दहत्यार्द्रानपि द्रुमान्।
तथा दहति वेदज्ञः कर्मजं दोषमात्मनः।। (तत्रैव-१२।१०१)

वेदशास्त्रार्थतत्त्वज्ञो यत्र कुत्राश्रमे वसन्।
इहैव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते।। (तत्रैव-१२।१०२)

## वेदाध्ययनं वेदार्थपरिज्ञाने पर्यवसितम्

वैदिकसनातनधर्मावबोधयितुं भारतीयसंस्कृतेश्च विशुद्धं स्वरूपञ्चावगन्तुं शास्त्रान्तरापेक्षया वेदाध्ययनं तदर्थानुशीलनञ्च कदाचिदिह भारते महत्त्वपूर्णमासीत्, परन्तु हा! कष्टं, वेदाध्ययनं तदर्थानुशीलनञ्चात्र उत्तरोत्तरं ह्रासतामुपगच्छति।

संस्कृतज्ञा अपि वेदाध्ययनं प्रति रुचिं न दधते, तेषु बहवः पाणिनीयगौतमीयादिषु शास्त्रेषु रात्रिन्दिवं परिश्राम्यन्तोऽपि तत्र नवनवां कल्पनामाविष्कुर्वन्तोऽपि न जानन्ति वेदेषु किमस्ति अग्निहोत्रम्? कौ वा स्तः दर्शपूर्णमासौ? कानि वा सन्ति चातुर्मास्यानि, कश्च वर्तते सोमयाग इति।

यस्या वेदविद्याया परिपोषणार्थमेव पुरा सर्वा विद्याः सर्वाणि च शास्त्राणि प्रवर्तन्ते स्म, यस्या रहस्यमधिगमयितुं सिद्धान्तपक्षञ्च निर्णेतुं जैमिन्यादयः सर्वज्ञकल्पा महर्षयः सर्वप्रकारेण प्रायतन्त, यस्याः परिज्ञानं विना आत्मानं विद्यावन्तमेव न मन्वते स्म, प्राचीनतमा पण्डितानामेव वेदविद्यां सर्वाधारभूतां साम्प्रतं वयं परित्यजामः कृतघ्ना इव मातरमिति कियदस्माकं शोकस्थानमिति विचारयन्तु विद्वांसः।

साम्प्रतं हि यथाकथञ्चिदत्र काश्यां दक्षिणभारते च समाजस्य भूयसीमवहेलनां सहन्तोऽपि वेदाक्षररक्षणे नितरां परिश्राम्यन्तः केचन श्रुतिधरा वैदिका अद्यापि अनादिकालतोऽविच्छिन्नपरम्पराप्राप्तं वेदशब्दराशिं जटाद्यष्टविकृति-पाठपरिज्ञानपुरस्सरं परिरक्षन्तो दृश्यन्ते। ते नूनमस्माकं भारतीयानां वन्दनीयाः पूजार्हाश्च वर्तन्ते। एतेषां कण्ठेन इदानीमपि वयं तादृश्या एव स्वरलहर्य्या मन्त्रान् श्रोतुं प्रभवामः, यादृशा मन्त्राः कदाचित् सुदूरप्राचीनकालेऽस्माकमनूचानै-र्ऋषिभिरुच्चारिता भवन्ति स्म। परन्तु तत्रापि वेदानां स्वरमात्राऽनुस्वारविसर्गमपि कण्ठीकृतवन्तो विद्वांसो भूयांसः, तदर्थजानानोऽल्पीयांसो वर्तन्ते, वेदार्थं जानन्तोऽपि तदनुसारेण कार्यं कुर्वाणास्तदाचरणशीलास्तु द्वित्रा एव श्रूयन्ते। अत एव मनुना प्रोक्तम्—

अज्ञेभ्यो ग्रन्थिनः श्रेष्ठा ग्रन्थिभ्यो धारिणो वराः।
धारिभ्यो ज्ञानिनः श्रेष्ठा ज्ञानिभ्यो व्यवसायिनः।। (मनु. १२।१०३)

वेदानामक्षरज्ञाः सन्तोऽपि यदि ते तदर्थज्ञा अपि स्युस्तथा चार्थज्ञाः सन्तोऽपि तदनुकूलाचरणशीलाः स्युस्तर्हि नूनं ते देवकल्पा विश्ववन्द्या जगत्पूज्याश्च वर्त्तन्ते।

वेदज्ञेषु ब्राह्मणेषु सर्वा देवता वसन्ति, अतस्ते प्रतिदिनं नमस्कार्या भवन्तीति साक्षात् श्रुतिरेवोपदिशति। तद्यथा—

"यावतीर्ह वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति।
तस्माद् ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवे नमस्कुर्यात्।। (तैत्तिरीयसं.)

अतो वेदाध्ययनं नाम वेदार्थपरिज्ञानम्। वेदार्थपरिज्ञानवन्तो ब्राह्मणाः श्रेष्ठाः कथ्यन्ते, कस्मिंश्चिदपि धर्मसंशये तेषामेव वचनं प्रमाणं भवति। अत एव मनुना प्रोक्तम्—

धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः।
ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः।।
अनाम्नातेषु धर्मेषु कथं स्यादिति चेद्भवेत्।
यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मः स्यादसंशयः।। (मनु. १२।१०८।९)

अत एव निरुक्तकारेण यास्केन वेदार्थज्ञो विद्वान् प्रशंस्यते, अक्षरज्ञानसहितोऽपि तदर्थज्ञानरहितो विद्वान् भारवाहक इव भवति। तद्यथा—

स्थाणुरयं भारहारः किलाभूद् अधीत्य वेदं न विजानाति योऽर्थम्।
योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति विधूतपाप्मा।। (नि. ११६)

''वेदात् सर्वं प्रसिध्यति'' इति मनुस्मृत्युक्तेर्वेदार्थानुशीलनद्वारैव सर्वमवाप्तुं शक्यते। स्मृतिकारो मनुर्विश्वस्य सर्वासां प्रजानां पिता अस्ति, अतः प्रजापतिः कथ्यते। स एव विश्वमानवतां हस्तामलकवत् समानीय मानवजातेः समष्टिशो व्यष्टिशश्च सर्वोदयाय सर्वाङ्गीणसदाचारसंहितां प्रवर्तितवान्। सैव गच्छत्सु कालेषु ''मनुस्मृति''-नाम्ना प्रसिद्धिमगात्। वेदेष्वपि तपःपूता महर्षयो भगवतो मनोः लोकहितसमुदाचारप्रवर्तनेन प्रभाविताः सन्तो भूयिष्ठं प्रशसन्तो दृश्यन्ते। तद्यथा तैत्तिरीयसंहितायाम्—

यद्वै किञ्च मनुरवदत् तद्भेषजम्। (११।२।१०।२)

अपरञ्चान्यत्र स्थले—

मनुर्वै यत्किञ्चावदद् भेषजं भेषजतायै।। (२३।१६।१७)

ऋग्वेदेऽपि मनुः पितारूपेण वर्णितः। तद्यथा—

यच्छं चयोश्च मनुरायेजे पिता। (ऋ. १।११४।२)

अपरञ्च—

यानि मनुरवृणीता पिता नः। (ऋ. २।३३।१३)

शतपथब्राह्मणेऽपि—

मनुर्ह वा अग्रे यज्ञेनेजे। तदनुकृत्येमाः प्रजा यजन्ते।
(श.ब्रा. १।५।१।७)

मनुरेव वदति यद् वेदार्थानुशीलनपटीयान् विद्वान् न केवलमेकराज्यस्य; अपि तु समग्रस्य लोकस्य राष्ट्रस्य वा आधिपत्यं कर्तुं प्रभवति। तद्यथा—

सैनापत्यञ्च राज्यञ्च दण्डनेतृत्वमेव च।
सर्वलोकाधिपत्यञ्च वेदशास्त्रविदर्हति।।

अत एव तैत्तिरीया श्रुतिरस्मानुपदिशति—"स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यमिति"। अत्र स्वाध्यायो नाम अर्थज्ञानाय वेदशब्दराशिग्रहणं तथा प्रवचनं नाम तदर्थानुशीलनद्वारा लोकहितकथनम्। एवं रीत्या वेदार्थानुशीलनाय क्रियमाणं वेदाध्ययनं नूनं वेदरक्षणाय कल्पयिष्यत इति मे द्रढीयान् विश्वास इति शम्।



# वसोर्धारामन्त्रेषु यज्ञस्य विभावना कर्मयोगपरिकल्पिका

**प्रो. इन्द्रवदन-बी. रावलः**

संस्कृतविभागाध्यक्षः
वेरावलस्थ-श्रीसोमनाथमहाविद्यालयस्य
सौराष्ट्रे



शुक्लयजुर्वेदस्य माध्यन्दिनशाखाया अष्टादशेऽध्याये प्रारम्भिकाः २९ मन्त्रा 'वसोर्धारामन्त्राः' इति परिज्ञाताः। मन्त्रेष्वेतेषु यज्ञस्य या विभावना स्फुटीभवति, सा श्रीमद्भगवद्गीतायाः कर्मयोगस्य पीठिकां रचयति। एतदनुलक्ष्य काश्चिद् विचारकण्डिकाश्चात्र प्रस्तुताः।

वसोर्धारासम्बन्धे सुष्ठूक्तं शतपथब्राह्मणे—'अथातो व्वसोर्धारां जुहोति। अत्रैष सर्वोऽग्निः संस्कृतः स एषोऽत्र व्वसुस्तस्मै देवा एतां धारां प्रागृह्णँस्त-यैनमप्रीणँस्तद्यदेतस्मै व्वसव एतां धारां प्रागृह्णँस्तस्मादेनां वसोर्धरित्याचक्षते[१]।' यज्ञेन संस्कृतोऽग्निरेवात्र 'वसु' इति संज्ञितः। आहुतिष्वाज्य-धाराणां ग्रहणेन विस्तारेण च देवास्तं वसुमप्रीणयन्। तस्मादेता वसोर्धारा इत्युच्यन्ते। अग्रतश्चास्मिन्नेव ब्राह्मणे वृष्टे रूपकेनापि वसोर्धारा वर्णिता। यथा 'सैषा व्वसुमयी धारा यथा क्षीरस्य वा सर्पिषो वैवमारम्भायैवेयमाज्याहुतिर्हूयते, तद्यदेषा व्वसुमयी धारा तस्मादेनां व्वसोर्धरित्याचक्षते[२]।' यथा वा— 'तस्यै वा एतस्यै व्वसोर्धारायै द्यौरेवात्माभ्रमूधो विद्युत्स्तनो धारैव धारा दिवोऽधि गामागच्छति।। तस्यै गौरेवात्मा। ऊध एवोध स्तन स्तनो धारैव धारा गोरधि यजमानम्[३]।।, यथाकाशाद् वृष्टेर्धारा भूमिं सस्यादिसम्पन्नां कुर्वन्ति, तथैवाज्यस्य मन्त्राहुतियुक्ताभिर्वसुमयीधाराभिः सम्पन्नो यज्ञो याजकाय वाजादीनां सम्प्राप्तिं कारयतीत्यर्थः।

---

१. शत.ब्रा. ९।३।२।९;  २. तत्रैव - ९।३।२।४।
३. तत्रैव - ९।३।३।१५-१६।

एतेषु २७ मन्त्रेषु प्रत्येकस्यान्ते 'यज्ञेन कल्पन्ताम्' इति वाक्यांशस्य पुनरुक्तिः सविशेषं ध्यानास्पदा। एतादृशी निरपवादा पुनरुक्तिः केवलं वर्णनशैल्याश्चमत्काराय भवितुं नार्हति। सम्भवति यद् 'यज्ञेन कल्पन्ताम्' इति गीतात्मके शब्दावर्तने प्रातिभचक्षुर्गीताकारः काँश्चिद् विचारस्फुलिङ्गान् दृष्टवान्। अस्मिन् विषयेऽधिकमग्रतो विचार्यते। अत्र तु—

व्वाजश्च्च मे प्रसवश्च्च मे प्रयतिश्च्च मे प्रसितिश्च्च मे
धीतिश्च्च मे क्रतुश्च्च मे स्वरश्च्च मे लोकश्च्च मे
श्रुतिश्च्च मे ज्योतिश्च्च मे स्वश्च्च मे यज्ञेन कल्पन्ताम्।।१।।

ईदृश्येव परिपाटी २७ मन्त्रेष्वनुसृता विद्यते। 'आयुर्यज्ञेन कल्पताम्' इत्याद्यात्मको नवविंशतितमो मन्त्रः—एषु मन्त्रेषु सम्मिल्य प्रायः २५५ संख्यकानां पदार्थानां परिगणनं वर्तते। इदं पदार्थजातं '.....मे यज्ञेन कल्पन्ताम्' इत्यत्राभिलषितम्। मध्यान्तरस्य षोडशे सप्तदशे चेति मन्त्रद्वये—'अग्निश्च्च मऽइन्द्रश्च्च मे सोमश्च्च म इन्द्रश्च्च मे....' इति क्रमेण अग्निः सोमः सविता सरस्वती पूषा बृहस्पतिर्मित्रो वरुणो धाता त्वष्टा मरुतो विश्वेदेवा इति प्रत्येका देवता 'इन्द्र' इत्युल्लेखसंयुतास्ति। अष्टादशे मन्त्रे पुनरनेनैव क्रमेण 'पृथिवी अन्तरिक्षं द्यौः समा नक्षत्राणि दिश' इति प्राकृतिकतत्त्वान्यपि प्रत्येकं 'इन्द्र' इत्युल्लेखसंयुतानि। सर्वञ्चात्र 'इन्द्रसमन्वितम्' इति ज्ञायते।

'तेजः' आदीनां भूतानामधिष्ठातृभूता या अग्न्यादिदेवतास्ताश्चक्षुरादीन्द्रियाणामिन्द्रियविशिष्टशक्तीनां वा प्रतीकरूपेणावतिष्ठन्ति। इन्द्रियाणां केन्द्रं मनः, तस्य प्रतीकम् 'इन्द्रः'। पृथिव्यादयोऽपि 'इन्द्रसमवेताः' एव स्वसार्थक्यं भजन्ते। इदमत्राभिप्रेतमवगम्यते। (शुक्ल-) यजुर्वेदस्य चतुस्त्रिंशेऽध्याये शिवसङ्कल्पमन्त्रेषु मनसो यत्सर्वाश्लेषिचित्रमुपलभ्यते तेन विचारस्यास्य पुष्टिर्भवति। केनोपनिषदि 'उमा हैमवती' इत्यस्या आख्यायिकामालिखतः ऋषेः समक्षमपि 'इन्द्रस्य' ईदृग्विधं स्वरूपमस्ति। वसोर्धारामन्त्रेषु चतुर्विंशतितमे क्रमे 'एका च' तिस्रः च तिस्रः च पञ्च च, पञ्च च सप्त च' इति क्रमेण त्रयस्त्रिंशत्पर्यन्तं विषमसंख्यात्मकं परिगणनं कृतम्, तदनु पञ्चविंशतितमे मन्त्रे 'चतस्रः चाष्टौ च, अष्टौ च द्वादश च, द्वादश च षोडश च' इति क्रमानुसारमष्टचत्वारिंशत्पर्यन्तं चतुष्कसंख्यात्मकं परिगणनं विहितमस्ति। तत्सर्वमपि यज्ञेन प्राप्यमिति कृत्वा प्रार्थितम्।

सङ्क्षेपतः पर्याप्तमिदं वक्तुं यन्महतीयं परम्परा यस्यां भौतिकैः सहाभौतिकानां, नैसर्गिकैः सह मानवकल्पितानां, स्थूलैः सह सूक्ष्माणां, चेतनैः सहाचेतनानां चेत्यनेकविधानां द्रव्याद्यात्मकानां पदार्थानां कुसुमस्तबकवत् सङ्गुम्फनं दरीदृश्यते। 'यज्ञेन कल्पन्ताम्' इत्यनेन याचितेषु पदार्थेषु 'यज्ञ-क्लृप्त-क्लृप्ति' इत्येतेषामपि समावेशः किञ्चिदाश्चर्यमावहन्नपि साभिप्रायत्वाद् विशिष्यते।

'यज्ञेन कल्पन्ताम्' इति द्वे पदे नामाख्याते। यज्ञेनेति यज्ञशब्दस्य करणार्थकं रूपम्। 'यज्ञः कस्मात्? प्रख्यातं यजतिकर्मेति नैरुक्ताः'[१] इति यास्कानुसारं यज्ञः यज्धातुमूलकः। पाणिनिः 'देवपूजासङ्गतिकरणदानेषु' (यज् १।७२८उ.) पठित्वा 'यजयाचयतविच्छपृच्छो नङ्' (३।३।९०) सूत्रेण नङ्प्रत्ययात् 'यज्ञ'शब्दं साधयति। 'याच्ञो भवतीति वा' इत्यतः याच्धातोरप्यस्य निरुक्तिर्यास्केन विकल्पितास्ति[२]। दुर्गाचार्यष्टीकते—'याच्ञो भवति इति यज्ञः। याच्यते हि अत्र'। सत्यम्, वसोर्धारामन्त्रा एवात्रोदाहरणम्, याच्ञामूलत्वात्। द्वावप्यर्थावत्रोपपन्नौ[३]। तथापि प्रथमः प्रामुख्यं भजते, प्रख्यातत्वाद् व्यापकत्वाच्च। कोशकारैरपीदं[४] समर्थ्यते— अग्निष्वाहुतिपूर्वकं देवतापूजनरूपं वेदोक्तं कर्म, वैश्वदेवादिरूपं स्मार्तकर्म, विष्णुः, अग्निः, [५]पूजा, यत्किञ्चिदपि पावनं समर्पणात्मकं वा कर्म, इत्यादयो यज्ञशब्दस्य कोशगता अर्थाः। 'त्रिवृद् यज्ञः त्रिभिर्ऋग्यजुःसामभिर्वर्तते' इत्यप्युक्तम्। इष्टिः पशुबन्धः सौमिकश्च, अथवा नित्यो नैमित्तिकः काम्यश्चेत्याख्येन त्रिविधस्वरूपेणापि यज्ञः परिज्ञायते[६]।

'कल्पन्ताम्' इति 'क्लृप्-धातोः (लोट्-लकारे) आज्ञार्थकं रूपम्। क्लृपि सामर्थ्ये[७]। कार्यसामर्थ्यसाधनं, सम्प्रापणं, सम्पन्नीभवनं परिणमनम्—इत्यादयोऽर्थाः शब्दकोशे पठ्यन्ते। 'क्लृपि सम्पद्यमाने च' इत्यतेद्वार्तिकस्य सन्दर्भे

१. निरुक्तम् - ३।१९; २. तत्रैव।

३. यास्काचार्यप्रणीतं निरुक्तम्, प्रथमो भागः, सम्पा. वैजनाथ-काशीनाथ-राजवाडे, प्रका. भाण्डारकरप्राच्यविद्यासंशोधनमन्दिरम्, पूना, पृ. ५०९-५१० (आंग्लटीका)।

४. संस्कृत-गुजराती, विजीतकोश; पृ. ०३९१।

५. Sanskrit-English Dictionary, V.S.Apte.

६. संस्कृत-हिन्दी-इंग्लिश-कोश, सं. सूर्यकान्तः, पृ. ४७१।

७. तत्रैव, पृ. १६०।

श्रीभट्टोजीदीक्षितेन 'सम्पद्यते जायते' इति, तत्त्वबोधिनीकारेण च 'सम्पत्तिरिहाभूतप्रादुर्भावः सम्पद्यते प्रादुर्भवति' इति व्याख्यातम्[१]।

प्रस्तुतविषयं स्पष्टीकुर्वता भाष्यकारेणोवटेनोक्तम्[२]—'वाजप्रभृतीनि च शब्दसमुच्चितानि मम यज्ञेनानेन क्लृप्तानि भवन्तु। यज्ञोऽस्मभ्यमेतेषां दाता भवत्वित्यर्थः। भाष्यकारो महीधरो[३] व्याख्यामिमामधिकस्पष्टतया प्रस्तौति— "यज्ञेनानेन मया कृतेन वाजादयः पदार्थाः कल्पन्तां क्लृप्ताः सम्पन्ना भवन्तु।... यद्वा वाजादयः पदार्था मे मम यज्ञेन कल्पन्ताम्। विभक्तिव्यत्ययः। यज्ञेऽग्निं तर्पयन्तु अभिषिञ्चन्तु वा। 'अनेन च त्वा प्रीणाम्यनेन च त्वाभिषिञ्चामि।'..... एते मे मम यज्ञेन कल्पन्ताम्। कल्पन्तामिति कण्डिकान्तस्य समुदायापेक्षया बहुत्वम्। मे पदानामावृत्तिः प्रत्येकं प्राप्त्यर्था।" 'यज्ञेन कल्पन्ताम्' इत्यस्य 'अहमेतान् वाजादीन् पदार्थान् यज्ञेन प्राप्नुयाम्' इति सरलार्थः। सङ्क्षेपतः, यज्ञः साधनं, वाजादयश्च साध्याः प्राप्तव्याः सम्पाद्या इति स्थितम्।

जगत्यस्मिन् सम्भूताः प्रायः सकलाविष्कारा उपयोगमूलाः। साधूच्यते आङ्ग्लभाषायाम्— Necessity is the mother of invention. यज्ञविषयेऽपि नैषा स्थितिरपवादपरा। विचार्यते यद् आदिमानवस्तु गुहावासी बभूव। तत्कालीने परिवेशेऽकस्मादेवाग्निदर्शनात् कालक्रमेण च तस्य परिचयानन्तरं मानवो यथा यथा स्थिरजीवनः संज्ञातः, तथा तथा अग्निसकाशात् प्राप्यमाणानां प्रकाशोष्मणोः आश्चर्य-आह्लाद-उपयोग-शालिनां तत्त्वानामुपलब्ध्यर्थमग्नेर्महत्त्वमप्यनन्यत्वेन प्रस्थापितं भवेत्। फलतश्च अग्नेश्चयने पोषणे संवर्धने च जनः सन्ततायासो स्यात्। तादृशेषु प्रयासेषु शुष्केन्धनस्योपयोगस्तावत्प्रथमः, तदनन्तरं पशूनां वसायाः प्रयोगः (वसासम्पर्कादग्निरधिकं प्रज्वलतीत्यतो वसाया अग्नौ होमेन यज्ञीयहिंसायाः पशुबलेर्वा प्राकृतं स्वरूपमनुमातुं शक्यते), तदनु यदा घृतमाविष्कृतं तदा घृतहोमस्य दैनन्दिनी व्यवस्था प्रचलिता स्यात्। अग्नेश्चयनं संरक्षणं निर्वहणं चेति क्रमेण कालान्तरेऽग्निसम्बद्धानीमानि कर्माणि धर्मक्रियाया अङ्गत्वं भेजिरे। इयमेव प्रक्रिया यज्ञसंस्थामजनि। सर्वोऽयमुपयोगमूलो विकासक्रमः स्वाभाविको भाति प्रतीतिं चावहति। याजकस्य ज्ञानसंस्कारादीनां वृद्ध्या सह यज्ञभावनापि सपरिष्कारा

---

१. वैयाकरणसिद्धान्तकौमुदी बालमनोरमातत्त्वबोधिनीसहिता; मोतीलाल-बनारसीदासः' प्रथमो भागः, पृ.६५०-६५१।

२. शुक्लयजुर्वेदसंहिता (उवटमहीधरभाष्योपेता); मोतीलाल-बनारसीदासः पृ. ३४०।

३. तत्रैव।

भूत्वा विकासोन्मुखिनी स्थिता। सङ्क्षेपेण, यज्ञसंस्थाया उद्भवस्य विकासस्य चायमितिहासः।

वैदिकयुगस्य मन्त्रदर्शनाख्यः कालखण्डः समाप्तिं गतः, ब्राह्मणाख्यश्च कालखण्डः समायातः, तस्यापि यदा मध्याह्नो जातस्तावता कालेन तु 'यज्ञो वेदधर्मस्य सर्वस्वमिव' इति महतीं प्रतिष्ठां प्राप्तः। परिणामतः, यज्ञस्य क्रियात्मकः काम्यश्च योंऽशः, स चरमसीमां स्पृष्टवान्। यज्ञकार्यं वेदधर्मोपदिष्टत्वादनुष्ठेयं श्रद्धेयं चेति, अस्तु तावत्। अपि तु यज्ञः स्थूलस्वरूपेण (मन्त्रेषु याचितानां) सर्वेषां पदार्थानामुपादानं निमित्तं वा, इति मान्यतायां तु न केवलमन्धश्रद्धाऽतिश्रद्धा वा, काम्यताऽप्यस्ति। काम्यता वै प्रत्याघातस्य जननी। 'प्लवा ह्येतेऽदृढा यज्ञरूपाः'[१] 'येनाहं नामृता स्यां किमहं तेन कुर्याम्'[२], 'न वित्तेन तर्पणीयो मनुष्यः'[३] इत्यादिषु श्रुतिवचनेषु प्रत्यक्षं वा परोक्षं वा, इदमेव प्रतिध्वन्यते।

अन्यच्च, काम्यत्वात् 'यज्ञशाश्वतानन्द'योर्मध्ये प्रवर्तमानोऽनुबन्धो न प्रत्यायकत्वं निर्वहति। यज्ञो नाम मूलत एव कर्म। अत एव परमलक्ष्यस्यानन्दस्यावरोधि[४]। सृष्टिश्च सकलैव कर्ममयी। न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्। अतो यथा कर्मत्यागोऽशक्यस्तथा परमलक्ष्यस्य प्राप्तिरप्यशक्या। अतिविचित्रा गहना चेयं गतिः। यद्ययं विचार एतावतैव विरमति, तदानन्दरूपः परमात्मा, तस्य प्राप्तिः, इत्यादिकं विमर्शजातं निरर्थकमेव स्यात्। किन्तु विशुद्धसत्त्वे परमात्मनि 'आनन्दः' 'स्वाभाविकी क्रिया' च नैव निषिद्धे[५]। अतः परमात्मनि या क्रिया, मनुष्यगता च या क्रिया, तयोर्मध्ये विशुद्धिमालिन्ययोर्भेदः स्वीकरणीयः। अस्ति किञ्चित्कर्म यद्विगलितमालिन्यं भवेत्?

---

१. मुण्ड. उप. १।२।७; २. बृह. उप. २।४।३।

३. कठ. उप. १।१।२७।

४. ब्रह्म; उपनिषत्सु 'आनन्दः ब्रह्म' इत्यात्मकं वर्णनं प्रसिद्धम्, यथा—

आनन्दरूपममृतं यद्विभाति। (मुण्ड. उप. २।२।७)
अथैष एव परम आनन्दः। एष ब्रह्मलोकः। (बृह. उप. ४।३।३३)
आनन्द आत्मा। (तै. उप. २।५)
आनन्दो ब्रह्मेति व्यजानात्। (तत्रैव-३।६)
सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो.....। (मां.उप. १।५)

५. परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च। (श्वेता.उप. ६।२)

किं तद्वस्तु, यत् कर्म मलिनीकरोति? मन इति यावत्। ममत्वेन यत्र तत्रासञ्जनं मनसोऽतिबलिष्ठो भावः। स एवं मालिन्येन मनोऽवलिम्पति।

एतादृश्यामवस्थायां 'यज्ञो वै श्रेष्ठतमं कर्म'[१] 'यज्ञेन यज्ञमयजन्त देवाः'[२] 'यज्ञो यज्ञेन कल्पताम्'[३] इत्यादिषूक्तिषु परम्परितमर्थमतिक्रम्य किञ्चिद् विलक्षणं पश्यन् गीताकारस्तस्यां दिशि चिन्तनं प्रेरयामासेति नायुक्तिकं मन्तुम्। यज्ञः श्रेष्ठतमं कर्म। कर्म साधनमप्यस्ति। श्रेष्ठतमञ्च कर्म तदैव भवितुमर्हति यत् श्रेष्ठतमं साधयितुं क्षमम्। इत्थं यज्ञः श्रेष्ठतमस्य साधनक्षम इति स्थितम्। पदार्थसम्प्राप्त्यर्थे समुचितस्वरूपा स्तुतिप्रार्थनापि सैव स्याद् या वदति—श्रेष्ठतमं साधनं नः कल्पताम्। यज्ञ एवेदृक्साधनम्। अत्रैव यज्ञशब्दान्तर्निहितस्य निगूढार्थस्य प्रतीतेः प्रारम्भः। यज्ञशब्दे 'देवपूजासङ्गतिकरणदान' इत्येषां समन्वितोऽर्थः। यज्ञरूपेण क्रियमाणं कर्म 'आमूलात्' पूजारूपं पवित्रमिति। अतस्तस्मिन् मालिन्यक्षपयितृकं सामर्थ्यम्। अथ च, दानशब्दः 'दो अवखण्डने' (४।३९प.)[४] इत्यतोऽपि निष्पाद्यते, एतदपि सूचकमेव। कुतः सम्भवति 'सम्यक्-दानं' यदि पदार्थं प्रति स्वामित्वममत्वयोर्तन्तुर्न त्रुट्यति? अग्निस्त्वन्यथापि दोषदहनेन पावकत्वाय कल्पते। अतः 'ज्ञानाग्निः' ममत्वस्य मालिन्यं दग्ध्वा कर्मशुद्धिं सम्पादयितुं समर्थः। यतः 'न हि ज्ञानेन सदृशं पवित्रमिह विद्यते' इति गीताकारस्य विश्रम्भवचनम्[५]। सर्वथा कर्मत्यागस्याशक्यत्वे, आसक्तिं प्रज्वाल्य, कृते कर्मणि, कर्मणः श्रेष्ठत्वं निरूह्यते। इदमेव 'कर्मसु कौशलं'[६] नाम।

यज्ञस्थः सङ्गतिकरणस्य भावः समाजलक्षितां सूचयति। स भावः समष्टिहितसंवलितैः कार्यैः सम्मूर्तो भवति। एतादृशाः कार्यकलापाः समाजस्य स्वस्थधारणार्थमावश्यकाः; किन्तु नैव ते वित्तश्रमसमयकलाकौशलादिषु यस्य कस्यापि निरपेक्षं समर्पणं विना सम्पद्यन्ते—आम्, समर्पणस्य मात्रा लघ्वी गुर्वी वा या कापि भवतु। स्पष्टं यत्, जनमङ्गलस्य मूले पूजादानाद्यात्मिका यज्ञभावना विलसति। सम्प्रति श्रमयज्ञ-नेत्रयज्ञ-ज्ञानसत्र-आदिनामका बहुप्रचलिताः प्रयोगा

---

१. काठक-सं. ३०।१; कपिष्ठलकठ-सं. ४६।८; तै.सं. ३।२।१।४; माध्यं. शत. ब्रा. १।७।१।५।

२. शु.यजु.सं. ३१।१६;

३. तत्रैव-१८।२९।

४. पाणिनीयधातुपाठः;

५. श्रीमद्भगवद्गीता-४।३८।

६. तत्रैव—योगः कर्मसु कौशलम्।(२।५०)

अप्यनया दृष्ट्या यज्ञसंज्ञानुरूपाः। 'लोकसंग्रहे'[१] या कर्तव्यमुद्रा दृश्यते, सा यज्ञमूलैव।

यज्ञो यज्ञेन कल्पताम्— यज्ञोऽपि यज्ञेन सम्पन्नो भवत्विति प्रार्थना यज्ञस्योपर्युक्तं समन्वितमर्थमनुलक्षति। सर्वञ्चात्र यज्ञाधारम्। एकेन यज्ञभावितेन कर्मणाशेषमपि जीवनं यज्ञभावितं स्यात्। उक्तं च—योऽर्थशुचिः, स शुचिः। वैपरीत्ये, 'अयज्ञेन' अशुचिमार्गेण, यया कयापि प्रयुक्त्या भ्रष्टाचारेण वा लब्धेन धनेन क्रियमाणः (तथाकथितः) धर्मोऽप्युपरितः साधुदर्शनो यशोवर्धनो वा भवतु, तत्त्वतस्तु नैव स यज्ञः। यतः स धर्मः 'अल्पस्य' हितेन बहूनां हितं बाधते। यज्ञशब्दे यज्धातोर्दानमिति परम्परितोऽर्थोऽप्युपपद्यतेऽत्र। 'दानं संविभागः।'[२] विचारोऽयमद्यतनीयस्य समाजवादस्यार्थशास्त्रस्य चाप्यनुकूलो नास्ति किम्? यज्ञः स्वयमेव स्तेनवृत्तेर्विरोधी। साधनसाध्यविवेको 'यज्ञेन कल्पन्ताम्' इत्यस्य पारदर्शनम्।

'यज्ञो वै श्रेष्ठतमं कर्म' इति श्रुतिवचनं विपरीतक्रमेणापि सार्थकम्। श्रेष्ठतमं कर्म वै यज्ञः। अर्थात् पूजा-पावित्र्ययुक्तं स्वभावानुगतम्, अत एव कर्तव्यबुद्ध्या निरासक्ततया क्रियमाणं (यथा अर्जुनसन्दर्भे युद्धम्) लोकसङ्ग्रहक्षमं यत्कर्म, तदेव श्रेष्ठतमम्, तदेव यज्ञः। यज्ञस्येयं भावना कर्मयोगेऽनुस्यूता।

ब्राह्मणकालस्य मध्याह्ने व्यतीते क्रियाकाण्डस्य यन्त्रवद् बाहुल्यं जातम्। अनेन प्रामुख्येन यज्ञसंस्था निःसत्त्वप्राया सञ्जाता। तादृश्यां दुरवस्थायामपि यज्ञस्य विरोधेन तं नामावशेषं कर्तुं गीताकारो नैच्छत्। अतो नवपरिमाणेन व्यापकभाव-भूमेश्च सन्दर्भेण यज्ञस्य नवसंस्करणमिव कृत्वा स यज्ञसंस्थां पुनरुज्जीवयामासेति।



१. इत्याख्यो विचारोऽनन्यरूपतया श्रीमद्भगवद्गीतासु प्रस्तुतः।

२. श्रीमदादिशङ्कराचार्यः।

# वेदाङ्गेषु श्रौतकल्पाङ्गवैशिष्ट्यम्

**डॉ. देवेन्द्रनाथत्रिपाठी**
प्राध्यापकः, संस्कृतविभागस्य
स्वामी-देवानन्द-स्नातकोत्तर-महाविद्यालये
मठ-लार, देवरिया



निखिलं खलु दरीदृश्यमानस्य स्थावरजङ्गमात्मकस्य जगतो धारकोऽप्रतिहतशक्तिसम्पन्नश्च वेदः; यथोक्तं महर्षिणा मनुना—

'बिभर्ति सर्वभूतानि वेदशास्त्रं सनातनम्'[१]।

वेदो हि भारतीयवाङ्मयस्य नूनमेव प्रकर्षरूपः। भारतस्य सांस्कृतिकं दार्शनिकमाध्यात्मिकञ्च विश्वगुरुत्वं वेदमूलकमेव। विद्-ज्ञाने धातुना करणेऽर्थे घञ्प्रत्यये कृते सति वेदशब्दो निष्पद्यते। अतो हि धर्मादिपुरुषार्थचतुष्टयोपाया येन वेद्यन्ते ज्ञायन्ते, असौ वेद इति वेदशब्दस्य व्युत्पत्तिमूलकोऽर्थः। यथोक्तं सायणाचार्येण—''इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः''[२] इति। लौकिकपदार्थानां सम्यगवबोधनाय नयनस्य यदुपयोगित्वम्, अलौकिकानां तत्त्वानां रहस्यावगमाय तदेवोपयोगित्वं वेदस्य। अलौकिकानां तत्त्वानां निरूपणे लौकिकानां प्रमाणानां शक्तिस्तु प्रतिहता भवति। इदमेवोरीकृत्योक्तं श्रीमता शङ्कराचार्येण—

''चोदना हि भूतं भवन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवंजातीयकमर्थं शक्नोत्यवगमयितुमिति''[३]। तथा हि ज्ञा-विद्-धातुद्वयस्यार्थसाम्ये सत्यपि तन्निष्पन्नयोर्ज्ञानवेदशब्दयोरर्थपार्थक्यमस्त्येव। एको हि ज्ञानशब्दो लौकिकानां बाह्यपदार्थानामर्थावबोधकोऽपरश्च वेदशब्दोऽलौकिकानां तत्त्वानां विश्लेषणपरः। भौतिकविद्यावबोधकं ज्ञानम्, आध्यात्मिकत्वावबोधको वेदः। इदमेवानुमोदयन् निगदितम्, यत्—

---

१. मनु. १२।९९; २. ऋ.भा.भू., पृ. २; ३. ब्रह्मसू., शां.भा. १।१।२।

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
एवं विदन्ति वेदेन तस्माद्वेदस्य वेदता[१]।। इति।

मन्त्रसंहितानामाविर्भावादनन्तरं वेदषडङ्गानां समुदयो जातः। अयं नवीनस्य युगस्योदयो ह्युत्तरवैदिकयुगशब्देन विद्वद्भिर्व्यवह्रियते। अस्मिन्नेव युगे वैदिकरीतिव्यवहारयोराचारविचारयोः शिक्षादीक्षयोरविचला प्रतिष्ठा सञ्जाता। शिक्षाकल्पव्याकरणादीनां वेदषडङ्गानां प्रयोजनं तु वेदस्वरूपसंरक्षणं तदर्थज्ञानावबोधनञ्चैवास्ति। इदमेवानुमोदयन्—'वेदार्थावबोधयितुं शिक्षादीनि षडङ्गानि प्रवृत्तानी'त्युक्तं सायणाचार्येण ऋग्वेदभाष्यभूमिकायाम्[२]। यैरुपायैर्वेदा अङ्ग्यन्ते ज्ञायन्ते तानि वेदाङ्गानीति वेदाङ्गशब्दस्य व्युत्पत्तिमूलकोऽर्थो वेदार्थप्रतिपत्तये वेदाङ्गानामप्रतिमं महत्त्वं द्योतयति। षड्वेदाङ्गानां निर्धारणं त्वतिप्राचीनकालादेव जातम्। गौतमधर्मसूत्र-गोपथब्राह्मण-बौधायनधर्मसूत्र-रामायणप्रभृतिषु प्राचीनेष्ववार्चीनेषु च प्रामाणिकेषु ग्रन्थेषु वेदाङ्गानां माहात्म्यं विशदीकृतम्। अतोऽसन्दिग्धा खल्वेतेषां प्रामाणिकता। प्राक्तना ऋषयो हि साक्षात्कृतधर्माण आसन्, अतस्ते द्रष्टारः। परवर्त्तिभिश्च ऋषिभिर्ग्रन्थरूपेणार्थरूपेण च मन्त्राः श्रुताः। एवं श्रवणादनन्तरं तेषु धर्मदर्शनयोग्यतापादनात्ते श्रुतर्षित्वेन प्रथिताः। तैरेव श्रुतर्षिभिरल्पज्ञानां मानवानां कल्याणार्थं वेदार्थावबोधनोपयोगिशिक्षाकल्पादिषडङ्गानि विरचितानि। इदमेव समर्थयन् यास्काचार्येण निगदितं यत्—

''साक्षात्कृतधर्माणो हि ऋषयो बभूवुस्तेऽवरेभ्योऽसाक्षात्कृतधर्मेभ्य उपदेशेन मन्त्रान् सम्प्रादुः। उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणाय इमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि चेति''[३]।

एवं विश्रुतेषु वेदाङ्गेषु कल्पस्य महत्त्वं द्योतयन् महर्षिणा पाणिनिनोक्तं यत्—'हस्तौ कल्पोऽथ पठ्यते'। कथनस्यास्यायं हृदयस्पर्शी भावो यत्—यथा शारीरिकमानसिकदृष्ट्या च परिपुष्टोऽपि कश्चिज्जनो हस्तं बिना शक्तिप्रत्यायकं कर्मकौशलं व्यावहारिकोपयोगित्वं च न परिपुष्यति, तथैव कल्पसाहित्यं बिना अप्रतिहतशक्तिसम्पन्नोऽपि वेदः पुरुषार्थोपयोगित्वं न साधयति। अतो वेदाङ्गेषु कल्पस्य स्थानमतीवमहत्त्वपूर्णमस्ति। कल्पसाहित्यं वैदिककर्मकाण्डयज्ञानुष्ठानविधिप्रत्यायकम्। कल्प्यते समर्थ्यते यागप्रयोगोऽत्र, इति कल्पशब्दस्य

१. ऋ.भा.भू., पृ. १०५; २. ऋ. भाष्यम्, पृ. ११६।
३. पा.शि., श्लो. ४१।

व्युत्पत्तिमूलकोऽर्थो निगदति सायणाचार्यः स्ववेदभाष्यभूमिकायाम्। ब्राह्मणग्रन्थेषु यज्ञानुष्ठानविधिवर्णनमतीवविस्तृततरूपेण कृतमासीत्। कालान्तरे ब्राह्मणग्रन्थाना-मिदमतीवपरिपुष्टं विस्तृतञ्च यज्ञानुष्ठानवर्णनं क्षीणज्ञानवतां मानवानां मनो नानुरञ्जयति स्म। अत एव ब्राह्मणवर्णितानां यज्ञकर्मणामानुपूर्विक्रमबद्धञ्च सङ्क्षिप्तं तद्वर्णनमपेक्षितं जातम्। तदनन्तरं ह्युत्तरवैदिकयुगस्य युगधर्ममनुसृत्य एतेषां ग्रन्थानां रचना सूत्ररूपेण जाता। कल्पसूत्रं नूनमेव वैदिककर्मणां सुव्यवस्थितरूपेण कल्पनाशास्त्रम्। इदमेव समर्थयति ऋक्प्रातिशाख्यवृत्तिर्यथा—"कल्पो वेदविहितानां कर्मणामानुपूर्व्येण कल्पनाशास्त्रम्"[१]। अनेन प्रकारेण येषां यज्ञकर्मणां विवाहो-पनयनादीनाञ्च विस्तृतं विवेचनं ब्राह्मणेषूपलभ्यते, तेषामेव क्रमबद्धरूपेण सङ्क्षिप्तञ्च वर्णनं कल्पसूत्रेषु विद्यते। कल्पसूत्राणि ब्राह्मणैरारण्यकैश्च सह साक्षात् सम्बद्धानि सन्ति। अतस्तेषां प्राचीनताऽसन्दिग्धा। कल्पसूत्राणि प्रतिशाखाभिन्नानि सन्ति। ब्राह्मणयुगे वैदिकानामार्याणां यज्ञ एव प्रधानं धार्मिकं कर्म आसीत्। तेषां यज्ञानामतीवविस्तृतत्वाद् ऋत्विग्भ्यो यागोपयोगिव्यावहारिकाणां संक्षिप्तनियमाना-मावश्यकता जाता। अत एव तदानीं प्राक्तनैर्महर्षिभिः कल्पसूत्राणि रचितानि। कल्पसूत्राणि अत्यल्पेषु शब्देषु सारगर्भितमधिकाधिकं भावं प्रकटयन्ति।

कल्पसूत्राणां चत्वारो भेदाः सन्ति—श्रौतसूत्रं गृह्यसूत्रं धर्मसूत्रं शुल्ब-सूत्रञ्चेति। एतेषां विभागानां मध्ये श्रौतसूत्रस्य महत्त्वमतीवसमृद्धमस्ति। यतो हि श्रौतसूत्रेष्वेव ब्राह्मणग्रन्थेषु वर्णितानां देवाग्नौ सम्पद्यमानानां यागानुष्ठानानां साङ्गोपाङ्गं वर्णनं मिलति। गृह्यसूत्रेषु गृह्याग्नौ क्रियमाणानामुपनयनविवाहादि-संस्काराणां वर्णनम्, धर्मसूत्रेषु वर्णानामाश्रमाणाञ्च कर्तव्यतावर्णनम्, शुल्बसूत्रेषु च वेदिप्रमाणप्रतिपादनमस्ति। सर्वे वेदाः प्रधानरूपेण यज्ञकर्मैवाभिनन्दयन्ति। यथोक्तम्—'वेदा हि यज्ञार्थमभिप्रवृत्ताः' इति। यज्ञकर्मणि एव सृष्टिधारणस्य पोषणस्य चाप्रतिमं सामर्थ्यमस्ति। यज्ञस्य सृष्टिसाधकं सामर्थ्यं प्रतिपादयन् मनुनोक्तं यत्—

अग्नौ प्रास्ताहुतिः सम्यग् आदित्यमुपतिष्ठति।
आदित्यज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः[२]।।

इदं दृश्यमानं निखिलं जगद् यज्ञादेव प्रवर्तितम्। यज्ञं विना न कदापि सृष्टिः प्रभवितुं शक्नोति। यथोक्तं महाभारते—'अनुयज्ञं जगत्सर्वं यज्ञश्चानु-जगत्सदा"[३]। क्रियमाणे यज्ञकर्मणि ब्रह्मण एव सर्वतोभावेन प्रतिष्ठा भवति। अतो

---

१. ऋ.प्रा., वर्गद्वयवृत्तिः, पृ. १३; २. मनु. ३।७६।
३. महा., शा.प., २६७।३४।

हि ब्रह्मणः सर्वगतत्वेन यज्ञस्य प्राथम्यं सर्वत्रैव दुर्निवारं वेदोपबृंहितञ्च। श्रौतसूत्राणि जराजन्मपीडितानां मानवानां कृते सर्वतोऽभ्युदयसाधकानां यज्ञाग्नौ सम्पद्यमानानां कर्मणां सुव्यवस्थितं वर्णनं कुर्वन्ति। अतस्तेषां वैशिष्ट्यं सुतरां युक्तियुक्तम्। श्रौतसूत्राण्यतिरिच्य जन्मजरामृत्युबन्धनोच्छेदो न सहजरूपेण भवितुं शक्नोति। यतो हि ब्राह्मणग्रन्थानां सुविस्तृतमक्रमञ्च यागवर्णनं न क्षीणमेधाविनां बुद्धिमेति। यागफलविरहितानामल्पज्ञानां जनानां कृते उपनिषदां ज्ञानासिधाराचुम्बनं सर्वथैवाशक्यम्। अतो नूनमेव श्रौतसूत्राणि परमं पुरुषार्थं प्रति जननमरणपाशबद्धान् मानवान् सुपथा नयन्ति। इदमेव समर्थयन् आथर्वणिका आमनन्ति—

"एहि एहीति तमाहुतयः सुवर्चसः,
सूर्यस्य रश्मिभिर्यजमानं वहन्ति।
प्रियां वाचमभिवदन्त्योऽर्चन्त्य
एष वः पुण्यः सुकृतो ब्रह्मलोकः[१]।।

यद्यपि श्रौतकल्पसूत्राणामश्वमेधवाजपेयराजसूयादियज्ञानुष्ठानानां वर्णनमतीव-गहनं गभीरञ्च विद्यते, यत्र न सामान्यजनानामाकर्षणबन्धस्तथापि धार्मिकधिया स्वप्रतिपाद्ययागानुष्ठानदृष्ट्या च तानि सूत्राण्यद्वितीयानि सन्ति। यथा शरीरसौष्ठव-युक्तस्य सर्वाङ्गसंवलितस्यापि जनस्य हस्तं बिना स्वसामर्थ्यप्रदर्शनं व्यवहारो-पयोगित्वञ्च न सिद्ध्यति तथैव श्रौतकल्पसूत्रं विनाऽप्रतिमसामर्थ्ययुक्तस्यापि वेदस्या-शेषपुरुषार्थसाधनता न प्रसिद्ध्यति। एवमुपर्युक्तेन वर्णनेनेदं सुस्थिरीकृतं यत् श्रौतकल्पस्य वैशिष्ट्यं दुर्निवारमेवेति।



१. मु.उ., २।६।

# लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति

**डॉ. मुरलीधरपाण्डेयः**
निदेशकः
श्रीपट्टाभिरामशास्त्रिवेदमीमांसानुसन्धानकेन्द्रस्य
वाराणस्याम्



पुण्यश्लोकानां वन्दनीयचरितानां केषाञ्चन महावैयाकरणानां कानिचित् पदानि कानिचिद् वाक्यानि चैवं लभामहे। येन तेषां तत्र क आशय इति विज्ञातुं न पारयामहे। यथा— मनोरथः = मनसोऽर्थः अभिलाषः प्रयोजनं वा मनोऽर्थ इति पदम्। अस्यैवापभ्रंशो मनोरथ इति पदम्। अस्य विग्रहो मनसो रथ इति। मनसो रथस्तु न कश्चन प्रसिद्धोऽस्ति तथापि लक्षणया अभिलाषार्थे प्रयुज्यते। पूज्यैर्वैयाकरणैरेतदपभ्रंशपदं साधु मत्वा साधयितुं महान् प्रयासो विहितः। मनसः सकारस्य रुत्वे कृते 'हशि चे'ति सूत्रेण उत्वे प्राप्ते 'रोरि' इति सूत्रेण लोपे प्राप्ते 'विप्रतिषेधे परं कार्यमि'ति सूत्रानुरोधेन लोपस्यैव प्राप्तौ तैरुक्तम्— पूर्वत्रासिद्धमिति रोरीत्यस्यासिद्धत्वादुत्वमेव मनोरथ इति। मनोरथपदस्यापभ्रंशत्वस्वीकारे एतावान् प्रयासो न भवेत्।

यथा च— रामादित्यत्र वैयाकरणसिद्धान्तकौमुद्यामुक्तम्—जश्त्वं वावसाने रामात्, रामादिति। अत्र तत्त्वबोधिन्यामुक्तम्—अत्राहुः—जश्त्वे कृतेऽवसाने चर्त्वमिति न मन्तव्यम्; किन्तु येन नाप्राप्तिन्यायेनावसाने चर्त्वस्य जश्त्वापवादत्वाच्चर्त्वा-भावपक्षे जश्त्वमिति बोध्यम्; किन्तु लिट्प्रयोगसाधने उक्तम्—जश्त्वचर्त्वे=अर्थात् ढस्य पूर्वं जश्त्वं ततश्चर्त्त्वम् लिट् लिडिति। अत्र स्पष्टं पूर्वापरवैपरीत्यम्। अत्र केचनैव वदन्ति यद् जश्त्वचर्त्वे इत्यत्र पदच्छेदः— जश् तु अचर्त्वे इति; परन्तु इदमकिञ्चित्करमिव प्रतिभाति।

यथा च—राजा इति प्रयोगसाधने वैयाकरणसिद्धान्तकौमुद्याम्— हल्ङ्यादिलोपात् परत्वाद् नान्तलक्षणदीर्घः क्रियते; किन्तु दीर्घाहन्शब्दे तु प्रथमं हल्ङ्यादिलोपस्ततो नान्तलक्षणोपधादीर्घः क्रियते। अत्रापि पूर्वापरवैपरीत्यम्।

यथा च— पुरतः = रसगङ्गाधरे उपमालङ्कारप्रकरणे श्रीमता पण्डितराजेन जगन्नाथेन श्रीमदप्पयदीक्षितस्यैकं श्लोकमुद्धृत्य तत्र प्रयुक्तस्य पुरतः इति पदस्य विषये उक्तं यत् पुर्शब्दात् तसिल्प्रत्यये पुर् + तः = पुस्त इति भवितुमर्हति, न तु पुरत इति। अत एव श्रीकालिदासेन रघुवंशे द्वितीयसर्गे 'अमुं पुरः पश्यसि देवदारुमि'त्युक्तमित्यादि। अत्र श्रीमता नागेशभट्टेन रसगङ्गाधरस्य टीकायां पुरत इत्यस्य सिद्ध्यर्थं त्रय उपायाः प्रदर्शिताः = पुरत इति निपातनम्। अथवा पुर आदेशं कृत्वा सर्वविभक्तिभ्यस्तसिल्, अथवा पुर्अग्रगमने चौरादिकाद्धातोर्ण्यन्ताभावे पुरशब्दं संसाध्य पुरत इति साधनीयम्; किन्तु पुर्-अग्रगमन इति धातुस्तुदादिगणे पठितो न तु चुरादिगणे। वस्तुतस्तु पुरशब्दोऽकारान्तोऽपि दृश्यते, यथा—'पुरः पाटलिपुत्रेऽङ्गे गुग्गुलौ तु पुमानयमिति रभसः, स्यात् पुरः पुरतोऽग्रतः' इत्यमरकोषः, 'यं यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वचः' इति नीतिशतके भर्तृहरिः।

यथा च मीमांसा— मीमांसेति पदं मान्-धातोर्निष्पद्यते। अत्र त्रयो मान्-धातवः-मान्-पूजायामिति भ्वादौ, मान्-स्तम्भे इति चुरादौ, मान्-पूजायामित्यपि चुरादौ; किन्तु मान्-पूजायामिति ३०१ संख्याकेऽङ्किते चौरादिके धातौ श्रीमता भट्टोजीदीक्षितेनोच्यते—'विचारणे तु भौवादिको नित्यसन्नन्तः' इति। एतेन प्रतीयते यद् भ्वादौ मान्-विचारणे इत्यपि कश्चन धातुरासीत्। केनापि कारणेन भ्वादावस्य पाठोऽधुना नोपलभ्यते।

वञ्चयति वञ्चयते = 'गृधि-वञ्चोः प्रलम्भने' (१।३।६९) इति सूत्रानुसारं वञ्चनेऽर्थे वञ्चयते भवति, वर्जनेऽर्थे वञ्चयति भवति। यथा अहिं वञ्चयति वर्जयतीत्यर्थः। किन्तु 'लियः सम्मानशालिनी करणयोश्च' (१।३।७०) इति सूत्रे बालमुल्लापयते वञ्चयतीत्यर्थो वैयाकरणसिद्धान्तकौमुद्यामुच्यते। वस्तुतोऽत्र वञ्चनमर्थो वञ्चयते इत्यात्मनेपदेन स्यात्।

भूवादयो धातवः (१।३।१)—अस्य सूत्रस्यार्थः = क्रियावाचिनो भ्वादयो धातुसंज्ञकाः स्युः। अस्यार्थस्य निष्पत्तये भूश्च वाश्चेति भूवौ आदिश्च आदिश्चेति आदी भूवौ आदी येषां ते भूवादयः। अत्र आदिशब्दे श्लेषः एकशेषश्च। एक आदिशब्दः प्रभृत्यर्थकः, अपरः सदृशार्थकः। तेन भूप्रभृतयो वासदृशा इत्यर्थः। सादृश्यं च क्रियावाचित्वेन। अतः क्रियावाचिनो भ्वादयो धातुसंज्ञकाः स्युरित्यर्थः सम्पद्यते।

किन्त्वत्र भूश्च वाश्चेति इतरेतरयोगद्वन्द्वप्रयासोऽकिञ्चित्कर इव प्रतिभाति। यथा आदिशब्दे एकशेषः श्लेषमूलकस्तथैव भूशब्देऽपि एकशेषः श्लेषमूलको भवितुमर्हति, भू + आदिशब्दयोर्यणि कृते भ्वादय इति स्यात्, भूवादय इत्यपि

स्यात्। प्राचीनकाले यणि कृते स्वराणामपि श्रवणमासीत्। यथा— सु + अर्णम् = स्वर्णम्, सुवर्णमिति च। यथा च-सु + अ: = स्व:, सुवश्चेति। श्रीपिङ्गलाचार्यकृते पिङ्गलसूत्रे 'इयं वा' (२।२) इति सूत्रमपि वर्तते। उदाहरणं च—त्रि + अम्बकम् = त्र्यम्बकम्, त्रियम्बकं च-स्वर्ग: सुवर्गश्चेत्यादि। इयङुवङा-देशोऽप्यस्यैवैकरूपम्। तथैव भगवता पाणिनिना भ्वादय:, भूवादय इत्युभयपद-प्रयोगार्हतायां भूवादय इत्येवाङ्गीकृतं भवेत्। यद्यपि श्रीपाणिनिनये पिङ्गलच्छन्द:-सूत्रमियं वा इतिवद् यणि कृते स्वरश्रवणमूलकं किमपि सूत्रं नास्ति किन्त्वेवं-विधमन्यदपि सूत्रं न वर्तते, यथा-रेफशब्दसिद्ध्यर्थं रादिफ इत्यौणादिकं सूत्रम्। यथा च हरिर्गच्छतीति सिद्ध्यर्थं वाक्यसंस्कारपक्ष आश्रीयते; किन्तु चान्द्रव्याकरणे 'नामिनो र' इति सूत्रमेव विद्यते। अत्र क्रियावाचिवाशब्दाभावे पृथिवीवाचिभू-शब्दग्रहणशङ्का नोचिता। यतो हि यथा—'अदिप्रभृतिभ्य: शप:' (२।४।७२), 'दिवादिभ्य: श्यन्' (३।१।६९) चेत्यादौ अदादि-दिवादिगणपठितानामेव ग्रहणं भवति, तथैव भ्वादिगण पठितानामेवात्रापि ग्रहणं स्यात्। सर्वत्रैव गणपाठेषु गणपठितानामेव स्वरूपत: शब्दानामेव ग्रहणं भवति, न तु तत्तच्छब्दार्थवाच्यन्य-शब्दानाम्। एवमेव वाशब्दाभावे भूशब्दार्थवाचिपृथिव्यादिग्रहणं न भविष्यति। यथा-'भृशादिभ्यो भुव्यचेर्लोपश्च हल:' (२।१।१२) इति पाणिनिसूत्रे भृशादिभ्य इति कथनेन भृशादिगणपठिता भृश-शीघ्रचपलमन्दादिशब्दा एव गृह्यन्ते, न तु 'भृशु अध:पतने' (१२२४) भ्वादिगणपठितो धातु:, 'भृशि-आप्यायने' (१७८८) इति चौरादकिश्च गृह्येते। एवमेव भ्वादि इत्युक्ते भ्वादिधातुगण एव ग्रहीष्यते।

एवमेव वैयाकरणसिद्धान्तकौमुद्यां कारकप्रकरणं, लघुसिद्धान्तकौमुद्यां विभक्त्यर्थप्रकरणं, परमलघुमञ्जूषायां कारकार्थविचारप्रकरणं, वैयाकरणभूषणसारे च सुबर्थनिर्णयप्रकरणं सन्ति। अत्रेदं विचारणीयं यत् षष्ठ्या: कारकत्वं नास्तीति स्वीकुर्वतां कारकप्रकरणे षष्ठ्यर्थविचार: कथं सम्भवति? विभक्तिश्च (१।४।१०४) पाणिनिसूत्रेण सुप्तिङोर्विभक्तिसंज्ञायां विभक्त्यर्थप्रकरणे तिङर्थ-विचारोऽपि सम्भवति। एवमेव परमलघुमञ्जूषायामपि। वैयाकरभूषणसारोक्तं सुबर्थनिर्णयप्रकरणमिति नाम रोचते।

अत एवंविधानां शब्दानां वाक्यानां च प्रयोगे तेषां तेषां पूज्यानां परममहावैयाकरणानां चेत:सु किमासीदिति त एव विदाङ्कुर्वन्तु। यतो हि लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हतीति।

●

# धात्वर्थसिद्धान्तविमर्शः

**डॉ. रामकिशोरत्रिपाठी**

व्याकरणविभागाध्यक्षः
श्रीमाथुरचतुर्वेदसंस्कृतमहाविद्यालयस्य
डैम्पियरनगरम्, मथुरा



शब्दमूलं जगत्सर्वं स्मृतं व्याकरणे नये।
शब्दाश्च धातुजाः सर्वे मन्यते शाकटायनः।।
धातुर्द्रव्यमयो लोके शुक्रादयश्च भैषजे।
क्रियारूपश्च मन्यन्ते पदवाक्यप्रमाविदः।।
फलव्यापाररूपोऽयमर्थः कैश्चन मृग्यते।
कृतिरेव प्रमाविज्ञैः फलं वाक्यविशारदैः।।
व्याकरणेऽप्ययं भेद आचार्यैरनुमन्यते।
पृथक् शक्तिधराः केचित् खण्डशो वादिनोऽपरे।।
शास्त्राणि वै प्रभिन्नानि तेषाञ्च विविधं मतम्।
तत्तच्छास्त्रविदैः सर्वैर्धात्वर्थोऽपि विखण्ड्यते।।
अन्यन्मतं समाख्याय शब्दशास्त्रमतं मुदा।
वच्मि धात्वर्थसंवादे सर्ववादप्रधानकम्।।

लोके सुवर्णादिद्रव्याणि धातुपदवाच्यानि। चरकसुश्रुतादिचिकित्साशास्त्रेषु शुक्रादिकं धातुः। अथ च गन्धकः, अभ्रकमादीनि गिरिसमुद्भवानि वस्तून्यपि धातुपदेनैव व्यवहृतानि। तथा चाह लक्ष्मीकारः —

[१]सुवर्णरूप्यताम्राणि हरितालं मनःशिला।
गैरिकाञ्चनकासीससीसलोहाः सहिङ्गुलाः।।

---

१. सिद्धान्तकौमुद्यां लक्ष्मीटीकायां संज्ञाप्रकरणे।

गन्धकोऽभ्रकमित्याद्या धातवो गिरिसम्भवाः।
श्लेष्मादिरसरक्तादिमहाभूतानि तद्गुणाः।।
इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः।।

यद्यप्येष्वर्थेषु धातुशब्दः प्रसिद्धस्तथापि आर्षपरम्परया सङ्केतानुरोधेन पाणिनिना 'भूवादयो धातवः[1]' इति सूत्रमाध्यमेन भू-आदिषु क्रियावाचकशब्देषु सङ्केतितः, स एवार्थो न्यायमीमांसादिशास्त्रज्ञैः शब्दशास्त्रविज्ञैर्वैयाकरणैश्च सादरं समादृतः। पाणिनेः पूर्वाचार्या अपि धातुपदं क्रियावचनेषु व्यवहरन्ति स्म। उक्तञ्च काशिकावृत्तौ-'धातुशब्दः पूर्वाचार्यसंज्ञा। ते च क्रियावचनानां संज्ञां कृतवन्तः। तदिहापि पूर्वाचार्यसंज्ञाश्रवणात् क्रियावाचिनामेव भूवादीनां धातुसंज्ञा विधीयते[2]'। एवं महाभाष्येऽपि-क्रियावचनो धातुरित्येतल्लक्षणं क्रियते। का पुनः क्रिया? ईहा। का पुनरीहा? चेष्टा। का पुनश्चेष्टा? व्यापारः[3]'। प्रदीपे तु 'ईहा-चेष्टाशब्दयोरन्यत्र व्यापारविशेषवचनत्वेऽपि इह व्यापारमात्रवचनत्वं बोद्धव्यम्[4]'। लघ्वर्थं हि संज्ञाकरणमिच्छन्त्याचार्या इत्येकाक्षरायां संज्ञायां कर्त्तव्यायां महत्याः पूर्वाचार्यसंज्ञाया यदाश्रयणं तस्यैतत्प्रयोजनम्— यथाविधानां ते धातुसंज्ञां कृतवन्तः, तथाविधानामेवैषा संज्ञा यथा स्यादिति। ते च क्रियावचनानामेव धातुसंज्ञां विहितवन्तः। तदिहापि पूर्वाचार्यसंज्ञाश्रयणात् क्रियावचनानामेव धातुसंज्ञा विधीयते। तेन या वा दिव् इत्येवमादीनां धातुसमानशब्दानामक्रियावचनान्न भवतीति भावः।

'भूवादयो धातवः' इति सूत्रे क्रियावाचित्वरूपार्थविषये भाष्यकारेण पक्षत्रय-मुपवर्णितम्। तत्र प्रथमपक्षे भूवासङ्घातेन क्रियावाचित्वलाभः। तद्यथा — भूश्च वाश्च भूवौ आदिश्चादिश्चादी। भूवौ आदी येषां ते भूवादयः। अत्र भूशब्देन सम्बद्ध आदिशब्दो व्यवस्थावाची अवयववाचीति यावत्। वाशब्देन सम्बद्धः प्रकारवाची सदृशवाचीति यावत्। तदुक्तं भाष्ये—'भू इत्यत्र य आदिशब्दः स व्यवस्थायां वर्तते। वा इत्यत्र य आदिशब्दः स प्रकारे वर्तते[5]'।

न चैवं प्रत्येकमन्वये द्वन्द्वानुपपत्तिः, भूवासमुदायस्य आदिसमुदायेऽन्वयं स्वविशिष्टसम्बन्धेन कृत्वा समासे पुनर्यथासंख्यसूत्रसामर्थ्येन यथासंख्यमन्वयः। यथासंख्येनान्वयस्थले द्वन्द्वस्योक्तरीत्यैवोपपाद्यतया पुनर्यथासंख्येनान्वयाभावे यथासंख्यसूत्रवैयर्थ्यापत्तिस्तादृशद्वन्द्वघटितसूत्रवैयर्थ्यापतिश्च स्पष्टैव। सम्बन्ध-

---

१. पा.सू. १।३।१; २. काशिकावृत्तौ, पा.सू.१।३।१।
३. महाभाष्ये, पा.सू. १।३।१; ४. महाभाष्यप्रदीपे, पा.सू. १।३।१।
५. महाभाष्ये, पा.सू. १।३।१।

घटकवैशिष्ट्यञ्च प्रकृते स्वघटकाभिन्नघटितत्वस्वघटकप्रतियोगिकसादृश्यवद्घटितत्वोभयसम्बन्धेन। स्वम्— भूवासमुदायस्तद्घटकाभिन्न आदिस्तदघटितत्वम्, स्वघटको वाशब्दस्तत्प्रतियोगिकसादृश्यमादिस्तद्घटितमपि आदिसमुदाये सुलभम्। तथा च एकधर्मावच्छिन्नस्यैकधर्मावच्छिन्नसम्बन्धेनैकधर्मावच्छिन्नेऽन्वयरूपसाहित्यस्य सत्त्वेन साहित्ये एव द्वन्द्व इति नियमस्यापि न व्यभिचारः। पुनर्यथासंख्येनान्वये वादय इत्यस्याभेदेन भ्वादय इत्यत्रान्वये वासदृशाभिन्ना भ्वादयो धातुसंज्ञका इत्यर्थः सिध्यति।

तत्र सादृश्यस्य साधारणधर्मसाकाङ्क्षत्वेन लक्ष्यानुरोधात् क्रियावाचिनो धातुरिति भाष्यादिप्रामाण्याच्च क्रियावाचित्वेनैव सादृश्यमिति क्रियावाचिनो भ्वादय इति फलितार्थमाह—क्रियावाचिन इति। यदि त्वेकेन समस्तेन वा पदेन उपस्थितयोरर्थयोः परस्परमुद्देश्यविधेयभावेनान्वयोऽनुपपन्नः, काव्ये विधेयाविमर्शदोषवत्, तदा तन्त्रेण भूवादय इत्यस्यावृत्त्या वा पदद्वयं विधायोक्तार्थः साधनीयः।

नन्वेवमपि क्रियावाचित्वेन सादृश्यमसङ्गतम्, सादृश्यप्रतियोगितावच्छेदकधर्मव्यापकधर्मेणैव सादृश्यमिति नियमः। अन्यथा कतिचिद् ब्राह्मणगतधनिकत्वमादाय 'ब्राह्मणवत् क्षत्रियो धनिकः' इति प्रयोगापत्तेः। व्यापकधर्मेण सादृश्ये तु ब्राह्मणत्वव्यापकत्वं धनिकत्वे नास्तीति न तादृशप्रयोगः। एवं प्रकृते वात्वव्यापकत्वं क्रियावाचित्वे नास्ति, अव्ययवाशब्दे वात्वसत्त्वेऽपि क्रियावाचित्वाभावात्। साध्यरूपक्रियावाचित्वं धातोरेवासाधारणधर्म इति चेत्, न, भूवाशब्दयोः परस्परसाहचर्येण क्रियावाचिन इत्यर्थलाभात्। तथा हि वाशब्दोऽपृथिवीवाचीति तत्साहचर्येण भूशब्दोऽपि अपृथिवीवाच्येवात्र, अपृथिवीवाची भूशब्दश्चानव्ययमिति वाशब्दोऽपि अनव्ययमेव, अनव्ययवाशब्दश्च क्रियावाचीति भ्वादयोऽपि क्रियावाचिन एव गृह्यन्त इति क्रियावाचिन इत्यस्य लाभः। इत्ययमेव पक्षः सिद्धान्तरूपेण कौमुद्यामुक्त इत्येकः पक्षः।

अत्र क्रियावाचिनो भ्वादय इत्यत्र भ्वादिपदेन धातुपाठस्थभूशब्दादारभ्य कण्ड्वादिस्थ-संवरान्ता २०१८ धातवो गृहीतव्याः। न त्वदादितः पूर्व एव भ्वादयश्चुराद्यन्ता एव वा अदादीनां कण्ड्वादीनाञ्च धातुत्वानापत्तेः। किञ्च भ्वादिगणपठिता धातुसंज्ञका इत्यपि नार्थः, गणे पठितानां स्वरूपबोधकत्वेन क्रियावाचकत्वाभावात्, लक्ष्यस्थस्य गणस्थत्वाभावेन धातुत्वानापत्तेश्च; किन्तु भ्वादिगणपठितवृत्त्यानुपूर्वीमन्तः क्रियावाचिनो धातुसंज्ञका इत्येवार्थः। क्रियाबोधकास्तु लक्ष्यस्थाः 'भवति, पचति, एधते' इत्यादयो न च गणपठिता भू-

पच्-एधित्यादयः। न कश्चित् सत्तार्थं भू, विक्लित्त्यनुकूलव्यापारार्थञ्च पचिति प्रयुङ्क्ते। अतो लक्ष्यस्थं भवति, पचति आदिगतं क्रियावाचित्वं तत्तद्गणपठितेषु भू-पच्-आदिष्वारोप्यते। उक्तञ्च भाष्ये—'धातोश्चार्थभेदात्प्रत्ययान्तरेषु मन्यामहे, धातुरेव क्रियामाहेति पक्तिः पचनं, पाक इति। प्रत्ययश्चार्थोऽन्यान्यश्च भवति प्रकृत्यर्थः स एव[१]'।

एवं गणेऽपठितानां सौत्राणां शिष्टप्रयोगे उपलब्धानाञ्च भ्वादिषु पाठं प्रकल्प्य धातुसंज्ञा विधेया। भूरादिर्येषां ते भूवादयः। न च यणि भ्वादय इति वाच्यम्, मङ्गलार्थं वकारागमनिपातनात्। न च वकारेण मङ्गलं दुर्वचम्, 'मङ्गलार्थं वकारागमं प्रयुङ्क्ते[२]' इति भाष्यस्यैव मानत्वात्। तच्च भाष्यं वकारागमेऽविकलभूशब्दश्रवणेन व्याहृतिस्मारकतया मङ्गलप्रयोजकता वस्येत्यभिप्रायकम्। अत्र पक्षे क्रियावाचिन इत्यस्य लाभस्तु पूर्वाचार्यैः क्रियावाचिनां धातुसंज्ञा कृता तस्या महासंज्ञाया आश्रयणस्य उद्देश्यदले क्रियावाचित्वनिवेशतात्पर्यकत्वादिति द्वितीयः पक्षः।

यद्वा, भुवं जायमानमर्थं ये वदन्ति ते भूवादयः। वदेरौणादिक-'वसि वपि......[३]'। इति सूत्रेण इञ् क्रियावाचिनो धातव इत्यर्थः। धातुत्वे सति क्रियावाचित्वं क्रियावाचित्वे सति धातुत्वमित्यन्योन्याश्रयस्तु न, शब्दानां नित्यत्वात्। इति तृतीयः पक्षः। तदुक्तं भाष्ये—'नेदमादिग्रहणम्। वदेरयमौणादिक इञ् कर्तृसाधनः। भुवं वदन्तीति भूवादय इति[४]'।

अपरश्च भवनं भूः, वा आदिर्येषां ते, वा गतीत्यारभ्य कण्ड्वाद्यन्ता वादयः। तथा वा गतीत्यस्यादयो भ्वादयो वापर्यन्ताः। वादयश्च वादयश्च वादयः, बहुव्रीहितत्पुरुषयोरेकशेषः। भुवो वादयो भूवादयः। वाच्यवाचकभावः षष्ठ्यर्थः। क्रियावाचका भूप्रभृतयो वाप्रभृतयश्च धातुसंज्ञका इति चतुर्थः पक्षः। क्रियात्वं नाम फलव्यापाररूपम् —

'फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः।
फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्[५]'।।

इत्यभियुक्तवचनात्। फलव्यापारयोरित्यत्र द्विवचननिर्देशेन, द्वन्द्वनिर्देशाद्वा, फलबोधिका व्यापारबोधिका च शक्तिः पृथगस्तीति सूच्यते। पृथक्शक्तिस्वीकारेणैव

---

१. महाभाष्ये, पा.सू. १।३।१; २. तत्रैव-१।३।१।
३. उ.सू. ४ पा. १२५; ४. महाभाष्ये, पा.सू. १।३।१।
५. वैयाकरणभूषणसारे, धात्वर्थनिरूपणे, का. २।

'स्तोकं पचति' इत्यत्र फलरूपस्तोकपदार्थस्य पचति-क्रियायामभेदेनान्वयः। 'ईषद्धसति' इत्यत्र च ईषदिति क्रियाविशेषणस्य हास्यरूपफलेऽभेदेन संसर्गेणान्वयः। 'देवदत्तो ग्रामं गच्छति' इत्यत्र देवदत्तस्योत्तरदेशसंयोगानुकूलव्यापारे तथा च ग्रामस्य संयोगरूपफले भेदेन वृत्तित्वसम्बन्धेनान्वयः। एकत्वविशिष्ट-पुंस्त्वविशिष्ट-देवदत्तकर्तृको ग्रामकर्मक उत्तरदेशसंयोगानुकूलो व्यापार इति शाब्दबोधः।

'स्वरितञितः कर्त्रभिप्राये क्रियाफले[१]' इति सूत्रे फलपदं प्रवृत्त्युद्देश्यमुख्य-फले प्रसिद्धम्। तथा च तादृशफलस्य धातुवाच्यत्वे विक्लित्त्यनुकूलव्यापारदशायां तण्डुलस्य धात्वर्थतादृशफलाश्रयत्वाभावात् कर्मत्वानुपपत्तिः। तज्जन्यतादृशफला-श्रयस्य तदापत्तिश्चेत्यत आह—'फलं विक्लित्त्यादि[२]'। विक्लित्तिर्विक्लेदनम् (अवयवानां शिथिलीभवनम्)। अयमाशयः—फलपदस्य लोके रूढ्या तादृशार्थो-पस्थापकत्वेऽप्यत्र पारिभाषिकार्थपरतयैव। अन्यथा सकर्मत्वादिव्यवहारो दुरुपपादः स्यादिति। ननु धातुवाच्यत्वमेव फलत्वं तर्हि व्यापारस्यापि फलत्वापत्तिरिति चेत्, न, धातुविशिष्टत्वं फलत्वम्, वैशिष्ट्यञ्च स्वनिष्ठशक्तिप्रयोज्योपस्थितिविषयत्वं स्वनिष्ठशक्तिप्रयोज्योपस्थितिविषयनिष्ठजनकतानिरूपितजन्यत्वप्रकारतानिरूपक-प्रतीतिविषयत्वोभयसम्बन्धेन। परे तु धातुवाच्यत्वे सति धातुवाच्यव्यापारजन्यत्वमेव फलत्वं परिष्कुर्वन्ति। तदुक्तं हरिणा —

'यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः।
तत्प्रधानं फलं तेषां न लाभादिप्रयोजनम्[३]'।।

व्यापारस्तु भावनाभिधा साध्यत्वेनाभिधीयमाना क्रिया। सा च मीमांसकनये लिङादिवाच्या शाब्दी भावना, तिङ्वाच्या चार्थी भावना। सैवार्थी भावना चास्माकं शाब्दिकानां व्यापारः। स च धात्वर्थ एव, न तु तिङर्थ इति भेदः। नव्यास्तु धात्वर्थफलजनकत्वे सति धातुवाच्यत्वं व्यापारत्वमिति स्वीकुर्वन्ति। अयञ्च व्यापारः फूत्कारत्वाधःसन्तापनत्वयत्नत्वादितत्तद्रूपेण वाच्यः। तथा चोक्तम्—

'यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते[४]'।।

सिद्धं वा भवत्वसिद्धं वा, शब्देन तु यद्वस्तु साध्यत्वेनाभिधीयते सा क्रिया, साध्यत्वे चाश्रितक्रमरूपत्वात्पूर्वापरीभूतावयवत्वं विततरूपत्वं यत्तद्रूपमभिधीयते

---

१. पा.सू. १।३।७२; २. वैयाकरणभूषणसारे धात्वर्थनिरूपणे।
३. वाक्यपदीये-३।८।४; ४. तत्रैव-३।८।१।

तस्यैकस्मिन् क्षणेऽनवस्थानम्,, यदाह— क्रियानामेयमत्यन्तापरिदृष्टाऽशक्या च सा पिण्डीभूता निदर्शयितुमिति। एकैकस्य क्रियाक्षणस्य प्रत्यक्षत्वेऽपि समूहरूपा धातुवाच्या क्रिया न प्रत्यक्षेत्यर्थः। क्रमवन्त एव क्षणा एकफलोद्देशेन सम्पाद्यमानत्वाद् ऐक्यमिवापन्ना धातुवाच्याः। तद्यथा— पचतीत्यधिश्रयणादयोऽधः-श्रयणान्ताः। सिद्धमिति भूकालावच्छिन्नम्, "अपाक्षीदित्यादौ। असिद्धमिति वर्तमानभविष्यत्कालावच्छिन्नम्, पचति, पक्ष्यतीत्यादौ। आख्याते श्रियैकत्व-व्यवस्थाऽप्यवच्छेदकबुद्धिविशेषैक्यमादायैव। उक्तञ्च वाक्यपदीये —

'गुणभूतैरवयवैः समूहः क्रमजन्मनाम्।
बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते[१]'।।

अत्र नागेशः— पृथक्शक्तिस्वीकारे फलव्यापारयोरुद्देश्यविधेयभावेनान्व-यापत्तिः। 'पृथगुपस्थितयोस्तथा अन्वयस्यौत्सर्गिकत्वात्[२]'। किञ्च तत्पक्षे फल-विशेषणकव्यापारबोधे कर्तृभावप्रत्ययसमभिव्याहृतधातुजन्योपस्थितेर्व्यापार-विशेषणकफलबोधे कर्मप्रत्ययसमभिव्याहृतधातुजन्योपस्थितेः कारणत्वमिति कार्यकारणभावद्वयकल्पनं धातोरर्थद्वये शक्तिद्वयकल्पनं धातोर्बोधजनकत्व-सम्बन्धद्वयकल्पनं चेत्यतिगौरवम्। तस्मात् फलावच्छिन्ने व्यापारे व्यापारावच्छिन्ने फले च शक्तिः। कर्तृकर्मार्थकतत्तत्प्रत्ययसमभिव्याहारश्च तत्तद्बोधे नियामकः।

न च फलावच्छिन्नव्यापारत्वस्य व्यापारावच्छिन्नफलत्वस्य च शक्यता-वच्छेदकद्वयकल्पनप्रयुक्तं गौरवमेतेषामिति वाच्यम्, भिन्नशक्तिवादिनां फल-विशेषणकव्यापारविशेष्यकावान्तरवाक्यार्थबोधे कर्तृप्रत्ययसमभिव्याहृतधातुजन्य-समूहालम्बनात्मकोपस्थितिः कारणम्, व्यापारविशेषणकफलविशेष्यकबोधे कर्मप्रत्य-यसमभिव्याहृतधातुजन्यसमूहालम्बनात्मकोपस्थितिः कारणमिति, कार्यकारणभाव-द्वयकल्पनेऽतिगौरवात्। विशिष्टशक्तिवादिनां तु तत्तत्समभिव्याहारवशादवान्तर-वाक्यार्थबोधस्थानीयविशिष्टोपस्थितिरेकैवेति न तेषामुक्तकार्यकारणभावद्वयम्। एवं धातोः फलव्यापारसमूहार्थे उपस्थितिशक्तिद्वयकल्पनं, विशिष्टार्थे शाब्दबोध-शक्तिकल्पनं शक्तेर्बोधजनकतायाश्चासम्बद्धे धातावनुपपत्त्या विशिष्टार्थनिरूपित-सम्बन्धद्वयकल्पनं च विशिष्टधातावित्यतिगौरवमित्येतत्परमलघुमञ्जूषारीत्या सिद्धान्तितम्। वस्तुतस्तु विशिष्टे शक्तिकल्पने शक्यतावच्छेदकत्वं फलावच्छिन्न-व्यापारत्वस्य व्यापारावच्छिन्नफलत्वस्य च कल्पितमिति गौरवम्। फलव्यापारयोः पदार्थैकदेशत्वेन तत्र कर्तृकर्मादीनामन्वयासम्भवोऽपि 'पदार्थः पदार्थेनान्वेति, न तु

---

१. वाक्यपदीये-३।८।९; २. परमलघुमञ्जूषा, धात्वर्थनिरूपणम्।

पदार्थैकदेशेने'ति न्यायस्य जागरूकत्वात्। प्राचां सिद्धान्ते एकवृन्तावलम्बित-फलद्वयवत् उभयांशे एका खण्डशः शक्तिरिति न शक्तिद्वयकल्पनम्, न वा बोध-जनकत्वसम्बन्धद्वयकल्पनमस्ति। तथा च कर्तृप्रत्ययसमभिव्याहारे फलविशेषणक-व्यापारविशेषकः, कर्मप्रत्ययसमभिव्याहारे व्यापारविशेषणकफलविशेष्यकश्च शाब्दबोधोऽपि शाब्दिकानां सिद्धान्तविरुद्धः। शब्दशास्त्रनये व्यापारमुख्यविशेष्यक-शाब्दबोधस्यैवादरात्। उक्तञ्च मञ्जूषायाम्—'अस्तु वा फलव्यापारयोः पृथगेव शक्तिः। तत्र फलांश उत्सर्गतो व्यापारं प्रति विशेषणम्, जन्यत्वं संसर्गः प्रायेण। क्वचित्तु विषयत्वं संसर्गः'[१]। यत्तु परमलघुमञ्जूषायामुक्तं न तत्सिद्धान्तप्रमाणकम्, स्वसिद्धान्तविरोधकत्वात्। अत एव परमलघुमञ्जूषा नागेशस्य कृतिरेव नास्तीति केचन मन्यन्ते। सिद्धान्तमञ्जूषोक्तसिद्धान्तविरुद्धविषयप्रतिपादनमेव तत्र हेतुः। पदे पदे पदार्थवैपरीत्यं विषयभेदश्चावलोक्येते।

वैयाकरणानामिव मीमांसकानामपि नये धात्वर्थविषये वैमत्यमवलोक्यते। तत्र नव्यमीमांसकाः फलव्यापारौ धात्वर्थः। उभयत्र खण्डश एका शक्तिः। तत्र जन्यजनकभावः संसर्गः। व्यापारमुख्यविशेष्यकश्च बोधः, तत्रैव कर्मातिरिक्त-कारकाणामन्वयः, कर्मकारकस्य च कर्तृपदसमभिव्याहारे फलेऽन्वयश्चेति मन्यन्ते। अत्र पक्षे 'गुणानां च परार्थत्वादसम्बन्धः समत्वात् स्यात्'[२] इति जैमिनीयसूत्रमेव मानम्। यथा सर्वे सेवका राजानमेवाश्रयन्ति, तथैव परस्परनिरपेक्षपदार्थाः प्रधानभूतां भावनामेवाश्रयन्ति। 'न हि भिक्षुको भिक्षुकान्तरं याचितुमर्हति सत्यन्यस्मिन्नभिक्षुके'[३] इति न्यायेनापि कर्मातिरिक्तकारकाणां भावनायामेवान्वयः। सा च भावना व्यापाररूपैव। तथा चोक्तम्—'भावना नाम भवितुर्भवनानुकूलो भावयितुर्व्यापारविशेषः'[४]।

प्राभाकरास्तु फलमेव धात्वर्थः, भावना तु वाच्यैव। जातौ शक्तिं स्वीकुर्वन्तस्ते आश्रयमन्तरा जात्यन्यथाऽनुपपत्त्या समवायेन स्वाश्रयीभूतां व्यक्तिमाक्षिप्य यथा तस्याः शाब्दबोधविषयत्वं प्राधान्यञ्च मन्यन्ते, तथापि लिङ्त्वाख्यातप्रत्ययाभ्यामाक्षिप्तभावनाया एव प्राधान्यं स्वीकुर्वन्ति। सा च भावना द्विधा—शाब्दी भावना, आर्थी भावना चेति। तत्र प्रवृत्त्यनुकूलो भावयितु-

---

१. वैयाकरणसिद्धान्तमञ्जूषायां धात्वर्थनिरूपणे।

२. जै.सू. ३।१।२।

३. वै. भूषणसारे धात्वर्थनिरूपणे पठितोऽयं न्यायः।

४. अर्थसङ्ग्रहे, लक्षणपरिच्छेदे।

व्यापारविशेषः शाब्दी भावना। सा च लिङ्त्वांशेनोच्यते। लिङ्श्रवणेऽयं मां प्रवर्तयति, मत्प्रवृत्त्यनुकूलव्यापारवानिति नियमेन प्रतीतेः। प्रयोजनेच्छाजनित-क्रियाविशेषो व्यापार आर्थी भावना। सा चाख्यातत्वांशेनोच्यते, आख्यातसामान्यस्य व्यापारवाचित्वात्। साऽप्यंशत्रयमपेक्षते। साध्यं साधनमितिकर्तव्यतां च। किं भावयेत्, केन भावयेत्, कथं भावयेदिति।

मण्डनमिश्रानुयायिनस्तु फलमेव धात्वर्थः, अनुकूलव्यापारस्तु आख्यातार्थः, लडाद्यर्थवर्तमानत्वादीनां व्यापारेऽन्वयः, एकपदोपात्तत्वात् फलस्याख्यातव्यापारं प्रति विशेषणमिति मन्यन्ते। तेषां मते प्रत्ययार्थव्यापारव्यधिकरणफलवाचकत्वं सकर्मकत्वम्। तत्समानाधिकरणफलवाचकत्वञ्चाकर्मकत्वम्। व्यापारेणाश्रयस्याक्षेपाद् व्यापारमात्रं प्रत्ययार्थः,व्यापारस्य प्रत्ययेनैव लाभाच्च। 'अनन्यलभ्यः शब्दार्थः'[1] इति न्यायात् फलमात्रं धात्वर्थ इति सिद्धान्तः।

अथ च 'सोमेन यजेत' इत्यत्र सोमपदस्य सोमवति लक्षणायां लक्ष्यार्थस्य धात्वर्थयागेऽभेदेनान्वयः। सोमवता यागेनेष्टं (स्वर्गादिकं) भावयेदित्याकारकस्य शाब्दबोधस्यानुभवसिद्धत्वात्। यागरूपायां भावनायां सोमस्य न करणतयाऽन्वयः, तथा सति यज्धात्वर्थफलस्यापि करणत्वेनान्वयात्। सोमेन यागं भावयेत्, यागेनेष्टं (स्वर्गादिकं) भावयेदिति वाक्यभेदापत्तेश्च। सोमपदार्थोऽपि याग एव सोमादिपदानां 'स्वर्गकामो ज्योतिष्टोमेन यजेत' इत्यादौ नामधेयपरत्वाच्च।

एवञ्च प्रत्ययवाच्यभावनायाः समानपदोपात्तत्वाद्धात्वर्थफलेनैव करणतयाऽ-न्वयेन करणाकाङ्क्षायाः शान्तौ सत्यां भिन्नपदोपात्तसोमस्य तत्र करणतयाऽ-न्वयानुपपत्तेश्च। सोमपदस्य धात्वर्थफलेऽभेदेनान्वयस्वीकारे हि सोमपदात्तृतीया-विभक्तेरनापत्तिः, क्रियाविशेषणानां कर्मत्वाद् द्वितीयाविभक्तेरापत्तेश्च। ननु यत्र फलस्य कर्मतयाऽन्वयस्तत्रैव तद्विशेषणवाचकाद् द्वितीया, यत्र तु फलस्यैव भावनायां करणतयाऽन्वयस्तत्र तत्समानाधिकरणपदात्तृतीया स्यादिति वाच्यम्, कुत्र कर्मत्वेनान्वयः, कुत्र च करणत्वेनेति विनिगमनाभावात् सिद्धान्तानुपपत्तेश्च।

फलमात्रं धात्वर्थ इति पक्षेऽपि 'लः कर्मणि च भावे चाकर्मकेभ्यः'[2] इति सूत्रविरोधापत्तेः। यतश्च तेन सूत्रेण सकर्मकेभ्यो धातुभ्यो लकाराः कर्तरि कर्मणि, अकर्मकेभ्यो धातुभ्यश्च कर्तरि भावे च विधीयन्ते। फलसमानाधिकरणव्यापार-वाचकत्वरूपाकर्मकत्वस्य तद्व्यधिकरणव्यापारवाचकत्वरूपसकर्मकत्वस्य च

१. वै.भू., धात्वर्थप्रकरणे न्यायोऽयम्; २. पा.सू. ३।४।६९।

फलस्य धात्वर्थत्वे व्यापारस्य च प्रत्ययार्थत्वे उच्छेदापत्तिः स्पष्टैव। अत एवाह— न हि तेन व्यापारस्य प्रत्ययार्थता लभ्यते, अथ च भूतभविष्यद्वर्तमानादिभेदेन भिन्नस्य फूत्कारादिव्यापारस्य प्रत्ययेऽनेकशक्तिकल्पनापत्तेश्च[1]। तथा चोक्तम्— 'किञ्च पचति, पक्ष्यतीत्यादौ फूत्कारादिप्रतीतये तत्रानेकप्रत्ययानां शक्तिकल्पना-पेक्षयैकस्य धातोरेव शक्तिकल्पनोचिता[2]'।

एवञ्च फलमात्रस्य धात्वर्थत्वे भावार्थकप्रत्ययस्यापि फलमेवार्थः स्यात्तथा सति गम्धातोरुत्तरदेशसंयोगरूपोऽर्थः, गमनमित्यस्याप्युत्तरदेशसंयोग एवार्थस्तद्वान् ग्राम इति प्रयोगापत्तिश्च। तथा चाह—'भावविहितघञादीनां व्यापारवाचकत्वाच्च न ग्रामो गमनवान्[3]' इत्याद्यापत्तिः। अथ च प्रयोज्यप्रयोजकोभयविधव्यापारस्थे णिजर्थ-व्यापारस्य विशेषणीभूते प्रत्ययार्थव्यापारस्य प्राधान्यात् तदाश्रयस्यैव कर्तुरभिधानं स्यात्। अत एवोक्तम्—'गुरुः शिष्याभ्यां पाचयति[4]' इत्यादौ 'हेतुमति च' इति सूत्रबलात् प्रयोजकव्यापारस्य णिजर्थत्वे स्थिते प्रयोज्यव्यापार आख्यातार्थो वाच्यः। एतच्च संख्यायाः स्ववाचकाख्यातार्थव्यापारेऽन्वयिन्येवान्वयाच्छिष्याभ्यामिति द्विचनानापत्तिः, पाचयतीत्यत्रैकवचनानापत्तिश्च, गुरोरनभिधानेन तत्र प्रथमाया अनापत्तेश्च, शिष्यशब्दात्तदापत्तेश्च।

भावनाया अवाच्यत्वेऽपि दोषानाह— तत्र भावनाया धातोरवाच्यत्वे 'घटं भावयति'[5] इत्यत्रेव 'घटो भवति' इत्यत्रापि द्वितीया स्यात्, धात्वर्थफलाश्रयत्वस्य द्वितीयोत्पत्तिप्रयोजकस्य सत्त्वात्। व्यापारस्यापि धातुवाच्यत्ववादिमते तु परया कर्तृसंज्ञया बाधान्न द्वितीयेति भावः। तथा चोक्तम्—''घटं भावयतीत्यादौ कर्मणोऽपि घटस्य 'घटो भवति' इत्यादौ कर्तृत्वमेव'। अथ च धातोः फलमात्रमर्थस्वीकारे यती-प्रयत्ने, डुकृञ्-करणे इत्यनयोः समानार्थापत्तिश्च स्यात्। यथोक्तं भूषणे—

> 'व्यापारो भावना सैवोत्पादना सैव च क्रिया।
> कृञोऽकर्मतापत्तेर्नहि यत्नोऽर्थ इष्यते[6]'।।

---

१. परमलघुमञ्जूषायां धात्वर्थनिरूपणे; २. तत्रैव;

३. तत्रैव।

४. पा.सू. ३।१।२६।

५. वै.सि.मञ्जूषायां धात्वर्थनिरूपणे।

६. वै.भूषणसारे धात्वर्थनिरूपणे।

न च पचति, पाकं करोतीति यत्नार्थककरोतिना विवरणदर्शनाद् यत्न एवाऽऽख्यातार्थ इति वाच्यम्, रथो गमनं करोति, बीजादिना अङ्कुरः कृत इति दर्शनात्कृञो यत्नार्थकताया अप्रसिद्धेः। अतः फलव्यापारौ धातुवाच्यौ। भावना तु सा व्यापार एव। नैयायिकेषु नव्यनैयायिकाः फलव्यापारौ धात्वर्थः, आख्यातार्थः कृतिः प्रथमान्तमुख्यविशेष्यकश्च शाब्दबोध इत्यामनन्ति। प्राचीननैयायिकास्तु अनेकधातूनां फले शक्तिकल्पनस्य गौरवमिति मत्वा व्यापारमात्रं धात्वर्थः फलञ्च द्वितीयाविभक्तेरर्थ इति स्वीकुर्वन्ति। तत्पक्षं दूषयता नागेशेनोक्तम्—'धातोः केवलं व्यापार एव शक्तिः, फलं कर्मप्रत्ययार्थः, कर्मप्रत्ययापेक्षया बहूनां धातूनां फले शक्तिकल्पनस्य गुरुत्वात्'[१]। तच्च फलं कर्मणि लकारपक्षे तिङर्थः, कर्तरि लकारपक्षे च विभक्त्यर्थः। कृतिर्नाम चेष्टा, यत्नविशेषः। तस्याश्च 'रथो गच्छति' इत्यत्र अचेतनस्य रथस्य यत्नशून्यत्वेन व्यापारे आश्रयत्वे वा लक्षणा मन्तव्येति गौरवम्। वैयाकरणनये कृतेरनन्तत्वेऽपि एकस्यामेव कृतित्वजातौ तत्कल्पनाल्लाघवम्।

अथ च व्यापारमात्रस्य धात्वर्थत्वे संयोगानुकूलव्यापारार्थकस्य गम्धातोर्विभागानुकूलव्यापारार्थकस्य त्यज्धातोश्च समानार्थताऽऽपत्तिः संयोगनाशात्मकविभागस्य प्रत्ययार्थत्वात्। उक्तञ्च—'न चैवं त्यागो गमनमित्यनयोरविशेषापत्तिः, एकस्या एव संयोगविभागजनकत्वादिति वाच्यम्, अनादितात्पर्यवशेन कर्मपदासमभिव्याहृततादृशप्रयोगे विभागाद्यवच्छिन्ने व्यापारे धातोर्लक्षणास्वीकारेणादोषात्'[२]। स्वान्वितप्रत्ययार्थफलव्यधिकरणव्यापारवाचित्वं सकर्मकत्वम्। कर्मत्वञ्च धात्वर्थान्वितप्रत्ययबोध्यफलवत्त्वमेव। अकर्मकत्वञ्च तदभाव एव कर्मणि तादृशफलकृतविशेषवत्त्वमेव।

किञ्च यत्नोऽपि व्यापारसामान्यं धातुत एव लभ्यते, स्थालीस्थे यत्ने पचिना कथ्यमाने स्थाली पचतीति 'कारके'[३] इत्यधिकारसूत्रभाष्यप्रयोगादनन्यलभ्यस्यैव शब्दार्थत्वात् कृतौ शक्तेरुक्तिसम्भव एव न। तथा च भाष्यम्—'एवं तर्हि स्थालीस्थे यत्ने कथ्यमाने स्थाली स्वतन्त्रा, कर्तृस्थे यत्ने कथ्यमाने परतन्त्रा। अथ च लकाराणां कृतौ शक्तिस्वीकारे सामानाधिकरण्याभावात्पुरुषव्यवस्थाऽनुपपत्तिः स्यात्'[४]। 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः'[५] इति सूत्रे स्वलकारवाच्यकारकवाचित्वरूपसामानाधिकरण्यस्य स्वीकारेण कृतिवाच्यत्वादिना

१. वै.सि.मञ्जूषायां धात्वर्थनिरूपणे; २. तत्रैव।
३. पा.सू. १।४।२३; ४. महाभाष्ये, पा.सू. १।४।२३।
५. पा.सू. १।४।१०५।

तार्किकाणां मते तदसम्भवात्। एवञ्च प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधविषयेऽपि 'पश्य मृगो धावति' इत्यत्र अन्यदेशसंयोगानुकूलधावनानुकूलकृतिमन्मृगकर्मकं प्रेरणाविषयीभूतं यद्दर्शनं तदनुकूलकृतिमांस्त्वमिति शाब्दबोध इति। शाब्दबोधे विशेष्यभूतार्थवाचकस्य मृगशब्दस्य प्रातिपदिकसंज्ञायां धावन्तं मृगं पश्येतिवत् पश्य मृगं धावतीत्यापत्तिः स्यात्।

शाब्दिकमते पश्य मृगो धावतीत्यादौ मृगकर्तृकं धावनं दृशिक्रियाया कर्म, प्रधानं दृशिक्रियैव। तथा च मृगकर्तृकधावनकर्मकं प्रेरणाविषयीभूतं त्वत्कर्तृकं दर्शनमिति बोध:। तत्र मृगो धावतीत्यत्र विशेष्यभूतधावनरूपार्थवाचकस्य धावतीत्यस्य प्रातिपदिकत्वाभावान्न द्वितीया। कर्मत्वन्तु संसर्गमर्यादया भासते। एवं पचति भवतीत्यत्र पचिक्रियाकर्तृका सत्तेति बोध:। उक्तञ्च भाष्ये—'पच्यादय: क्रिया भवति-क्रियाया: कर्त्र्यो हरिरप्याह—'भवन्ति'[१] इति।

'सुबन्तं हि यथाऽनेकं तिङन्तस्य विशेषणम्।
तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणम्'[२] ।।

ननु व्यापारस्य धात्वर्थत्वेऽस्ति-विद्यतीनां धातुत्वं न स्यादिति चेत्, न, तेषां सत्तामात्रस्यैव व्यापारत्वात्। उक्तञ्च—'अस्ति-भवति-वर्तते-विद्यतीनामर्थ: सत्ता। सा चानेककालस्थायिनीति कालगतपौर्वापर्येण क्रमवतीति तस्या: क्रियात्वम्'[३]। आत्मधारणानुकूलो व्यापार: सत्ता। सा च यद्यप्यनेककालस्थायिनी तथापि यावता कालेन आत्मधारणं तावत: कालस्य अवयवान् परिकल्प्य तेषां पौर्वापर्यस्य प्रसिद्धतया तद्गतं क्रमिकत्वं तत्रारोप्य क्रियात्वमिति बोध्यम्। अत एवाह—

'अस्त्यादावपि धर्म्यंशे भाव्येऽस्त्येव हि भावना।
अन्यत्राशेषभावात्तु सा तथा न प्रकाशते'[४] ।।

धर्मो विशेषणं प्रकृते सत्तादिरूपं फलं तदस्यास्तीति धर्मी विशेष्य:, स च प्रकृते कर्तृरूप:, अकर्मकधातुस्थले फलाश्रयस्य कर्तृत्वात्। यो यो धर्मी, स धर्मघटित इति नियमात् फले धर्म्यंशत्वव्यवहार:। भाष्येऽपि—'एवं हि कश्चित् कश्चित् पृच्छति, किमवस्थो देवदत्तस्य व्याधिरिति ? स आह—वर्द्धत इति। अपर

---

१. महाभाष्ये, पा.सू. १।३।१; २. वै.सि. मञ्जूषास्थहरिकारिकेयम्।
३. परमलघुमञ्जूषायां धात्वर्थनिरूपणे; ४. वै. भूषणसारे कारिकेयम्।

आह—अपक्षीयत इति। अपर आह—स्थित इति। स्थित इत्युक्ते वर्द्धते-श्चाऽपक्षीयतेश्च निवृत्तिर्भवति। अथवा नान्तरेण क्रियां भूतभविष्यद्वर्तमानाः काला व्यज्यन्ते। अस्त्यादिभिश्चापि भूतभविष्यद्वर्तमानाः काला व्यज्यन्ते'[१]। 'स ततो गतो न वा इति प्रश्ने महता यत्नेन तिष्ठतीति प्रयोगे सत्तारूपफलानुकूला भावना प्रतीयत एव, उत्पत्त्यादिबोधने तु सुतराम्। रोहितो लोहितादासीद् धुन्धुस्तस्य सुतोऽभवदित्यत्र सत्तारूपफलानुकूला भावना सिद्धैव'[२]।

ज्ञाधात्वर्थविषये वैयाकरणेष्वपि वैमत्यम्। तत्र प्राचीना विषयावच्छिन्ना-वरणभङ्गादिफलवाचित्वं ज्ञाधातोरर्थ इति स्वीकुर्वन्ति। कर्मवद्भावनिवृत्तये तु—

'निर्वर्त्त्ये च विकारे च कर्मवद्भाव इष्यते।
न प्राप्ये कर्मणीति सिद्धान्तो व्यवस्थितः'[३]।।

इति कारिकामाश्रयन्ति। प्राप्यं कर्म हि—

'क्रियाकृतविशेषाणां सिद्धिर्यत्र न दृश्यते।
दर्शनादनुमानाद्वा तत् प्राप्यमिति कथ्यते'।। इति।

नव्यास्तु ज्ञाधातोर्ज्ञानमेव फलं तदनुकूल-आत्ममनःसंयोगात्मको व्यापारः। उक्तञ्च—'नन्वेवं जानातेः सकर्मकत्वानापत्तिः, धात्वर्थज्ञानव्यधिकरणव्यापारस्य देवदत्तादौ बाधादिति चेत्, न, फलतावच्छेदकविषयतासम्बन्धेन ज्ञानानधिकरण-वृत्तित्वरूपस्यैव वैयधिकरण्यस्य व्यापारे सत्त्वेनाक्षतेः'[४]। अत एव मनो जानातीत्यु-पपद्यते आत्माऽत्रान्तःकरणम्, मनोऽपि तद्वृत्तिविशेषरूपम्। आत्मा आत्मानं जानातीत्यादौ अन्तःकरणावच्छिन्नः कर्ता शरीरावच्छिन्नं कर्मेति 'कर्मवत् कर्मणा तुल्यक्रियः'[५] इति सूत्रे भाष्ये स्पष्टम्। 'द्वावात्मानौ अन्तरात्मा शरीरात्मा च। अन्तरात्मा तत्कर्म करोति येन शरीरात्मा सुखदुःखेऽनुभवति। शरीरात्मा तत्कर्म करोति येनान्तरात्मा सुखदुःखेऽनुभवति'[६]।

यत्तु आवरणभङ्गो विषयता वा फलम्, व्यापारस्तु ज्ञानमेवेति। तत्र, कर्मस्थक्रियकत्वापत्तेः। घटादिविषयेषु आवरणभङ्गस्य सम्भवेन सौकर्याति-शयद्योतनाय कर्तृव्यापारस्याविवक्षायां कर्मण एव स्वातन्त्र्यविवक्षायां च कर्मणो घटादेरेव कर्तृसंज्ञायां कर्मवद्भावापत्तौ 'ज्ञायते घट' इत्यनुव्यवसीयमानोऽर्थ इति प्रयोगापत्तिः स्यात्। तद्व्यवस्था चेत्थमुक्ता हरिणा—

---

१. महाभाष्ये, पा.सू. १।३।१; २. वै. भूषणसारे धात्वर्थनिरूपणे।
३. वै.सि.मञ्जूषा, धात्वर्थनिरूपणे। ४. तत्रैव।
५. पा.सू. ३।१।८७; ६. महाभाष्ये, पा.सू. ३।१।८७।

'विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता।
क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता'[१]।।

सा च क्रिया सिद्धभावेन साध्यभावेन च विभज्यते, उक्तञ्च भूषणे—

'साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना।
सिद्धभावस्तु यस्तस्या: स घञादिनिबन्धन:'[२]।।

ननु कृत्तद्धितसमासादिवृत्तिषु समुदाये शक्तिं स्वीकुर्वतां शाब्दिकानां मते घञन्ते शक्तेरावश्यकतया घञन्तानुपूर्व्या: शक्ततावच्छेदकत्वमपि स्वीकार्यमिति चेत्, सत्यम्, समुदाये शक्तिस्वीकारेऽपि 'कर्तरि'[३] कृत्' भावे'[४] इत्याद्यनुशासनात् 'कृदभिहितो भावो द्रव्यवत्प्रकाशते'[५] इति भाष्याच्च प्रक्रियादशायां घञादीनामपि शक्तिस्वीकारात्। द्रव्यञ्च सत्त्वरूपमेव। शब्दशास्त्रे सत्त्वशब्दस्योभयार्थपरतया व्यवहारात्। तथा चाह भाष्यकार: —'अयं सत्त्वशब्दोऽस्त्येव द्रव्यपदार्थक:। तद्यथा — सत्त्वमयं ब्राह्मण:, सत्त्वमियं ब्राह्मणीति। अस्ति क्रियापदार्थक:। सद्भाव: सत्त्वमिति'[६]। प्रदीपेऽपि 'अर्थद्वयेऽपि सत्त्वशब्दस्य प्रयोगदर्शनाद्विशेषावगतौ प्रमाणाऽनुपलम्भात्प्रश्न:'[७]। तत्र सीदन्त्यस्मिञ्जातिगुणक्रिया इति सत्त्वं द्रव्यमुच्यते। यदा तु सतो भाव: सत्त्वमिति, तदा साध्यमानतया क्रियारूपापन्ना सत्ता सत्त्वशब्देनोच्यते।

द्विधा हि क्रिया—सिद्धा साध्या चेति। तत्र सिद्धभावा क्रिया घञादिकृत्प्रत्ययनिबन्धनेति पूर्वमेवोक्तम्। सा च घञादिकृत्प्रत्ययनिबद्धत्वेन द्रव्यरूपत्वाल्लिङ्गकारकसंख्याद्यन्विता सती क्रियान्तरमपेक्षते। साध्या तु पचतिभवतीत्यादिधातुरूपनिबन्धनेति। अत्रापि प्राच्यनव्यसिद्धान्तयोर्वैमत्यमवलोक्यते। तत्र प्राच्या: क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकवैजात्यवत्त्वे सति कारकत्वेन क्रियान्वयित्वे सति कारकान्तरान्वयायोग्यत्वं सिद्धत्वम्। साध्यत्वञ्च क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकं सत् कारकान्तरान्वययोग्यतावच्छेदकरूपवत्त्वम्। तथा चोक्तं भूषणे— 'साध्यत्वं क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपवत्त्वम्। साधनत्वं कारकत्वेनान्वयित्वम्'[८]। ननु हरिं नमेच्चेत्सुखं यायाद् इत्यत्र क्रियाया अपि क्रियान्तराकाङ्क्षत्वेन सिद्धत्वमस्तीति चेत्, न, चेच्छब्दसमभिव्याहारेणाकाङ्क्षोत्थापनादिति।

---

१. परमलघुमञ्जू. हरिकारिकेयम्;
२. वै.भूषणसारे धात्वर्थनिरूपणे।
३. पा.सू. ३।४।६७;
४. तदेव-३।३।१८।
५. महाभाष्ये, पा.सू. ३।३।१८;
६. तत्रैव-१।४।५७।
७. महाभाष्यप्रदीपे, पा.सू. १।४।५७;
८. वै. भूषणसारे धात्वर्थनिरूपणे।

नागेशस्त्वत्र—'सिद्धत्वम् उद्देश्यत्वावधित्वाभ्यामन्वययोग्यतावच्छेदकम्। लिङ्गाद्यन्वययोग्यतावच्छेदकञ्च यद्वैजात्यं तद्रूपम्। इदमेव च क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकम्। साध्यत्वञ्च पूर्वापरीभूतावयवत्वसमानाधिकरणं कारकान्वयादियोग्यतावच्छेदकं यद्वैजात्यम्, तद्रूपम्'[१]। तत्र 'पाकः' इत्यादौ घञा बोध्यते, साध्यत्वं तु सर्वत्रैव धातुप्रतिपाद्यम्। स्पष्टम्। 'उपपदमतिङ्'[२] इति सूत्रे 'कृदभिहितो भावो द्रव्यवद्भवतीति'[३] यथा घटादेर्द्रव्यस्य लिङ्गसंख्यासाधन-सम्बन्धस्तथा कृदभिहितस्य भावस्यापीति।

भावार्थकातिरिक्तकृदन्तप्रत्ययसमभिव्याहारे कारकाद्यर्थोऽप्यनुभूयते। तथा हि 'कर्तरि कृत्'[४] इति सामान्येन कृत्प्रत्ययानां विधानात् समेषां कर्त्र्यर्थोऽनुगम्यते। तत्तत्कारकविशेषार्थे विहितानान्तु धात्वर्थान्विततत्तत्कारकार्थप्रत्ययोऽपि। तद्यथा—'तयोरेव कृत्यक्तखलर्थाः'[५] इति सूत्रेण कृत्यप्रत्ययस्य क्तप्रत्ययस्य खलर्थप्रत्ययस्य च सकर्मकधातुसमभिव्याहारे कर्मार्थावगतिः। एवञ्च—'करणाधिकरणयोश्च'[६] इति सूत्रेण विहितप्रत्यया धात्वर्थान्वितकरणाधिकरणार्थप्रत्यायकाः। अथ च 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्'[७] इति सूत्रेण विहितस्तुमुन्प्रत्ययः क्रियार्थकक्रियां बोधयति। 'समानकर्तृकयोः पूर्वकाले'[८] इत्यनेन विहितः क्त्वाप्रत्ययः पूर्वव्यापारबोधकः। अत्रेयान् भेदो भावार्थकप्रत्ययस्थले भावातिरिक्तं सत्त्वमवभासते। कारकविशेषार्थे विहितप्रत्ययस्थे कारकाण्यप्यवभासन्ते।

शास्त्राण्यनेकानि विचिन्त्य तत्त्वं धात्वर्थसिद्धान्तविमर्शभूतम्।
प्रख्यापितं लोकहितैकबुद्ध्या कल्याणभाजं भवताद्बुधानाम्।। इति।

●

---

१. वै.सि.मञ्जू. धात्वर्थनिरूपणे; २. पा.सू. २।२।१९।
३. महाभाष्ये, पा.सू. २।२।१९; ४. पा.सू. ३।४।६७।
५. तदेव-३।४।७०; ६. तदेव-३।३।११७।
७. तदेव-३।३।१०; ८. तदेव-३।४।२१।

# व्याकरणस्य महत्ता

**डॉ. मङ्गलारामः**
सहायकाचार्यः, संस्कृतविभागस्य
जयनारायणव्यासविश्वविद्यालये
जोधपुरम्



आदिकालाद् अद्यतनसमयं यावद् भारते ये केऽपि विद्वांसः सञ्जाताः सन्ति वा, तेषां सर्वेषामपि मतमिदं यत् संसारे यावदपि ज्ञानं प्रावर्तत तावतः सर्वस्यापि आदिस्रोतोऽस्ति श्रुतिः। एतेन व्याकरणशास्त्रस्यापि आदिमूलं वेद इति निष्पन्नम्। व्याकरणं हि वेदपुरुषस्याननं स्मृतम्, उक्तञ्च पाणिनीयशिक्षायाम् —

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते।।

शिक्षा घ्राणन्तु वेदस्य मुखं व्याकरणं स्मृतम्।
तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते[1]।।

किं नाम व्याकरणमित्यपेक्षायामुच्यते— व्याक्रियन्ते शब्दा अनेनेति व्याकरणम्। व्याकरणं नाम प्रकृतिप्रत्ययविभागेन शब्दसाधुत्वविवेचकं शास्त्रम्। भगवान् पतञ्जलिस्तु व्याकरणं शब्दानुशासनशब्देन व्यवहरति[2]। पतञ्जलिना व्याकरणशब्दस्य अर्थः सूत्रं मन्यते[3]। यतः सूत्रत एव शब्दान् प्रतिपद्यन्ते। यो हि उत्सूत्रं कथयेन्नादो गृह्येत।

---

१. पाणिनीयशिक्षा (महालक्ष्मीप्रकाशनम्, आगरा, सन् १९९१), कारिका-४१-४२, पृ.४०।
२. शब्दानुशासनं नाम शास्त्रमधिकृतं वेदितव्यम्। (पतञ्जलिः, व्याकरणमहाभाष्यप्रथमाह्निके, मोतीलालबनारसीदासप्रकाशनम्, दिल्ली, सन् १९८४, पृष्ठे १-२)
३. अथ व्याकरणमित्यस्य शब्दस्य कः पदार्थः? सूत्रम्। (तत्रैव, पृष्ठे ४०)

यदा हि कापि भाषा व्यवहारातीततां प्रयाति, तदा तस्या भाषाया ज्ञानं व्याकरणमन्तरेण न प्रतिपत्तुं शक्यं भवति। व्याकरणमेव भाषाया: स्वरूपसङ्घटनं सर्वात्मना कुरुते, तस्माद् व्याकरणमेव भाषाज्ञानलाभाय सर्वेषामप्यष्टानां शक्तिग्राहकाणां[1] मध्ये मूर्धन्यं स्थानमध्यास्ते। व्याकरणस्य नितान्तमेवोपादेयतां श्रेष्ठताञ्च तत्र तत्रावलोक्यैव तन्महिम्नि बुधैरभिहितमिदम्—

यद्यपि बहुनाधीषे तथापि पठ पुत्र व्याकरणम्।
स्वजन: श्वजनो मा भूत् सकलं शकलं सकृच्छकृत्।।

शब्दशास्त्रमनधीत्य य: पुमान् वक्तुमिच्छति वच: सभान्तरे।
बन्धुमिच्छति वने मदोत्कटं हस्तिनं कमलनालतन्तुना।।

सर्वस्त्रष्टु: प्रणवरूपवेदस्य व्याकरणशिक्षानिरुक्तकल्पज्यौतिषच्छन्द:-शास्त्राण्यङ्गानि सन्ति, पुराणन्यायमीमांसाधर्मशास्त्राणि चोपाङ्गानि सन्ति। इमानि अङ्गोपाङ्गानि सम्यज्ज्ञानरूपसंस्काराणां कारणानि भवन्ति, तस्मादेव व्याकरणादयो विस्तृता भवन्ति। महर्षयो वेदाख्यस्य ब्रह्मण: साक्षादुपकारकमदृष्टफलजनकानां तपसां श्रेष्ठं तपो वेदानां प्रधानमङ्गं व्याकरणं प्राहु:। वाचकत्वाद् अभ्युदयहेतुत्वाच्च सक्रमाया वाचो य: परम: सार:, यच्छ्रुतिप्रसिद्धं पुण्यतमं प्रकाशाप्रकाशयो: प्रकाशकं शब्दाख्यं ज्योति:, तस्य साधुशब्दसमूहस्य ज्ञाने सामान्यविशेषलक्षणवान् व्याकरणरूप: सरल उपाय:। घटाद्यर्थस्य व्यवहारे निमित्ततत्त्वानां शब्दा एव बोधका:, सर्वव्यवहारशब्दमूलकत्वात्। तेषां शब्दानां साधुत्वनिश्चयो व्याकरणादेव भवति, न तु श्रोत्रादिभ्य:। व्याकरणं मोक्षस्योपायो वाचो दुरुच्चारणरूपमलानाम् आयुर्वेद इव, सर्वविद्यानां पवित्रत्वात् तास्वग्रे स्वीक्रियते। उक्तञ्च वाक्यपदीये—

तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम्।
पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते[2]।।

यथा सर्वा घटादिसमवेता घटत्वादिजातयो घटादिशब्दाकृतिबोधकास्तथैव इदं व्याकरणं जगति कोशकाव्यादिसर्वविद्यानां स्वघटकपदशक्तिग्रहायापेक्षणीयम्।

---

१. शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यत: सिद्धपदस्य वृद्धा:।।
(विश्वनाथपञ्चाननभट्टाचार्य:, न्यायसिद्धान्तमुक्तावली, शब्दखण्डम्, सुरभारतीप्रकाशनम्, कर्णपुरम्, सन् १९८९, पृ. १७)

२. भर्तृहरि:, वाक्यपदीयम्, चौखम्बासंस्कृतसंस्थानप्रकाशनम्, वाराणसी, सन् १९८४, ब्रह्मकाण्डम्, कारिका-१४।

मोक्षप्राप्तौ सोपानरूपपर्वणां मध्ये व्याकरणं प्रथमं पर्वास्ति। मुमुक्षूणामियं व्याकरणविद्या अकुटिलो राजमार्गः। व्याकरणज्ञानाद् अपगतशब्दार्थभ्रमरूपो वेदग्रहणसमर्थ आत्मा वेदानां छन्दोरूपामपभ्रंशविविक्तां शुद्धां प्रणवरूपां सूक्ष्मां योनिं जनः पश्यति। यदेकं शब्दब्रह्म कालापादिव्याकरणभेदैर्वर्णपदवाक्यादि-भिन्नभिन्नभेदेन निरूप्यते तच्छब्दब्रह्म व्याकरणेन प्राप्य तदनन्तरं पुरुषै-रान्तरप्रणवरूपं परं ब्रह्म प्राप्यते। यथोक्तं भर्तृहरिणा—

यदेकं प्रक्रियाभेदैर्बहुधा प्रविभज्यते।
तद्व्याकरणमागम्य परं ब्रह्माधिगम्यते[१]।।

नित्येषु शब्दार्थसम्बन्धेषु[२] साध्वसाधुशब्देषु ये शब्दा धर्मोत्पत्तावर्थावबोधे सहायकास्ते व्याकरणे प्रकृतिप्रत्ययरूपलिङ्गैः स्वशब्दैश्चोपवर्णिताः। अपि च, ये प्रकृतिप्रत्ययरूपाः पदवाक्यरूपाश्च शब्दाः, प्रकृतिप्रत्ययार्थाः पदवाक्यार्थरूपाश्च अर्थाः कार्यकारणभावेन तादात्म्येन स्थिताः सम्बन्धाः लाघवेन स्मृतिप्रणयनार्थं साधुशब्दा एव यथाशास्त्रमस्मिन् व्याकरणशास्त्रे वर्णिताः। साधुशब्दाः शिष्टपाणिनिप्रभृतिवैयाकरणेभ्यो अन्यान्यव्याकरणशास्त्रेभ्यो धर्मसाधनत्वेन बोधिताः'[३] तस्मात् साधव एव व्याकरणविषयाः। इमां साधुशब्दविषयां व्याकरणव्यवस्थां कश्चिद् मन्दोऽपि निष्प्रयोजनां कर्तुं नार्हति' तस्मात् पाणिनिप्रभृतिभिः साधुत्वविषया अनादिगुरुपूर्वक्रमागता व्याकरणस्मृतिः[४] सामान्य-विशेषवल्लक्षणेन ग्रथिता। शिष्टाः अपौरुषेयशास्त्रं वेदं शिष्टपरम्पराचरणानुगृहीतां च स्मृतिं प्रमाणीकृत्य शब्दानुशासनं कृतवन्तः। उक्तञ्च वाक्यपदीये—

तस्मादकृतकं शास्त्रं स्मृतिं च सनिबन्धनाम्।
आश्रित्यारभ्यते शिष्टैः शब्दानामनुशासनम्[५]।।

---

१. भर्तृहरिः, वाक्यपदीयम्, १।२२।

२. नित्याः शब्दार्थसम्बन्धास्तत्राम्नाता महर्षिभिः।
सूत्राणामनुतन्त्राणां भाष्याणाञ्च प्रणेतृभिः।। (तत्रैव, कारिका-२३)

३. शिष्टेभ्य आगमात्सिद्धाः साधवो धर्मसाधनम्। (तत्रैव, कारिका-२७)

४. साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः।
अविच्छेदेन शिष्टानामिदं स्मृतिनिबन्धनम्।।
वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्।
अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम्।।
तद्विभागाविभागाभ्यां क्रियमाणमवस्थितम्।
स्वभावज्ञैश्च भावानां दृश्यन्ते शब्दशक्तयः।। (तत्रैव, कारिका-१४२-१४४)

५. तत्रैव, कारिका-४३।

व्याकरणानि बहुभिर्व्याकरणकारमहर्षिभिः प्रणीतानि। तेषु व्याकरणकर्तृषु विद्वत्सत्तमेषु इन्द्रश्चन्द्रः काशकृत्स्न आपिशलिः शाकटायनः पाणिनिरमरो जैनेन्द्र इत्येतेऽष्टौ सन्ति सुप्रथिताः। न केवलमेतेषामष्टानामेव व्याकरणकर्तृणां व्याकरणानि, अपि त्वन्येषामप्याचार्याणां व्याकरणानि श्रूयन्ते, यथा — कौमारं सारस्वतं शाकलञ्च व्याकरणम्। व्याकरणकारान् अथ च व्याकरणान्यधिकृत्य एतच्छ्लोकद्वयं प्रथितमस्ति —

इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः।।

ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।
सारस्वतं चापिशलं शाकलं पाणिनीयकम्[१]।।

साम्प्रतं सर्वत्र प्राधान्येन पाणिनीयं व्याकरणमेव प्रचलितं वर्तते। इदं हि पाणिनीयं व्याकरणं नितरामेव सुसमृद्धं सुसम्पन्नं सुललितं सर्वाङ्गीणं व्यापकञ्च विद्यते। पाणिनेर्महिमानं वर्णयन् पाणिनीयशिक्षायां कथितम् —

शङ्करः शाङ्करीं प्रादाद्दाक्षीपुत्राय धीमते।
वाङ्मयेभ्यः समाहृत्य देवीं वाचमिति स्थितिः।।

येनाक्षरसमाम्नायमधिगम्य महेश्वरात्।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः।।

येन धौता गिरः पुंसां विमलैः शब्दवारिभिः।
तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः।।

अज्ञानान्धस्य लोकस्य ज्ञानाञ्जनशलाकया।
चक्षुरुन्मीलितं येन तस्मै पाणिनये नमः[२]।।

पाणिनीयस्य व्याकरणस्य परममहत्त्वपूर्णमङ्गं कात्यायनस्य वार्तिकपाठोऽस्ति। इममन्तरेण वस्तुतः पाणिनीयं व्याकरणमपूर्णमेव प्रतिभाति। पतञ्जलिः कात्यायनीयं वार्तिकपाठमवलम्ब्यैव नैजं महाभाष्यमरचत्। भगवतः पतञ्जलेरेषा हि महाभाष्याख्या रचना पाणिनीयं व्याकरणं सरलया सरसया च रीत्या

---

१. युधिष्ठिरमीमांसकः, व्याकरणशास्त्रस्येतिहासः, प्रथमो भागः, पृ. ६९-७०।
२. पाणिनीयशिक्षा, कारिका-५६-५९, पृ. ५०-५२।

व्याचष्टे। सकलेऽपि संस्कृतवाङ्मये महाभाष्यं वस्तुतोऽद्वितीयो ग्रन्थः। सर्वेऽपि विद्वांसो मुक्तकण्ठतया प्रशंसन्ति ग्रन्थमिमम्। यथोक्तं वाक्यपदीयस्य द्वितीये काण्डे —

कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने[1]।।

शब्दानुशासनस्य व्याकरणस्य वा पञ्च मुख्यप्रयोजनानि[2] त्रयोदश च गौणप्रयोजनानि[3] पतञ्जलिकृतमहाभाष्ये निगदितानि। तैर्व्याकरणस्य महनीयता तदीया उपादेयता तन्महत्ता च सम्यग् अवबोद्धुं शक्या भवति।

वेदानां रक्षायै व्याकरणाध्ययनमपेक्ष्यते। लोपागमवर्णविकारज्ञो हि सम्यग् वेदान् परिपालयिष्यति। व्याकरणस्याध्ययनेन विभक्तिविपरिणामस्य बोधो जायते, तस्माद् व्याकरणमवश्यमध्ययनीयमस्ति। न सर्वैर्लिङ्गैः, न च सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदिताः। ते चावश्यं यज्ञगतेन यथायथं विपरिणमयितव्या भवन्ति। नावैयाकरणस्तान्यथायथं विपरिणमयितुं शक्नोति।

'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इत्येतस्माद् आगमादपि व्याकरणस्याध्ययनं परमापेक्षितं भवति, वेदस्य षडङ्गत्वात् षट्स्वङ्गेषु च व्याकरणस्य प्रधानत्वात्। लघ्वर्थं चाध्येयं व्याकरणम्। ब्राह्मणेनावश्यं शब्दा ज्ञेयाः। न चान्तरेण व्याकरणं लघुनोपायेन शब्दाः शक्या ज्ञातुम्। संशयराहित्यनिमित्तेनापि व्याकरणमध्येयमस्ति। याज्ञिकाः पठन्ति— 'स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेत' इति। तस्यां सन्देहोऽयम् 'स्थूला चासौ पृषती च स्थूलपृषती' इति कथनमभिप्रेतम्, किं वा 'स्थूलानि पृषन्ति यस्याः सा स्थूलपृषती, इति कथनमिष्टम्। अवैयाकरणस्तां न स्वरतोऽध्यवस्यति। यदि पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिः, अथान्तोदात्तत्वं ततस्तत्पुरुष इति।

व्याकरणं हि यो नरो न जानाति, स शुद्धं वक्तुमपि न प्रभवति। शुद्धोच्चारणलाभाय व्याकरणस्य पठनं कर्त्तव्यम्। अशुद्धोच्चारणकर्ता भवति शिक्षितसमाजे निन्दितः। उक्तञ्च—

---

१. वाक्यपदीयम्-२।४८६।

२. कानि पुनः शब्दानुशासनस्य प्रयोजनानि। रक्षोहागमलघ्वसन्देहाः प्रयोजनम्। (व्याकरणमहाभाष्यम्, प्रथमाह्निके, पृ. ४)

३. इमानि च भूयः शब्दानुशासनस्य प्रयोजनानि। (तत्रैव, पृ. ७)

एवं वर्णाः प्रयोक्तव्या नाव्यक्ता न च पीडिताः।
सम्यग्वर्णप्रयोगेण ब्रह्मलोके महीयते।।
कुतीर्थादागतं दग्धमपवर्णं च भक्षितम्।
न तस्य पाठे मोक्षोऽस्ति पापाहेरिव किल्विषात्।।
सुतीर्थादागतं व्यक्तं स्वाम्नाय्यं सुव्यवस्थितम्।
सुस्वरेण सुवक्त्रेण प्रयुक्तं ब्रह्म राजते[1]।।

दुष्टान् शब्दान् मा प्रयुक्ष्महीत्यध्येयं व्याकरणम्। उक्तञ्च—

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्।।
अनक्षरं हतायुष्यं विस्वरं व्याधिपीडितम्।
अक्षता शस्त्ररूपेण वज्रं पतति मस्तके[2]।।

यत्किमपि जनेन पठनीयं तद्बोधपूर्वकं पठनीयम्। यदध्ययनं विनार्थावबोधं कृतं जायते, तदध्ययनं सदैवाध्येतारं दुनोति, तस्मादनर्थकं माधिगीष्महि इत्यध्येयं व्याकरणम्। यः पुरुषो व्यवहारकाले साधुशब्दान् प्रयुङ्क्ते, स वाग्योगविद् परत्रानन्तं जयं प्राप्नोति। साधुशब्दावबोधो व्याकरणाधीनम्।

अभिवादे स्त्रीवन्मा भूम इत्यध्येयं व्याकरणम्। उक्तञ्च—

अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः।
कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेत्[3]।।

याज्ञिकाः पठन्ति—'प्रयाजाः सविभक्तिकाः कार्याः' इति।

न चान्तरेण व्याकरणं प्रयाजाः सविभक्तिकाः शक्याः कर्तुम्। यो वा इमां पदशः स्वरतोऽक्षरशश्च वाचं विदधाति, स आर्त्विजीनो भवति। आर्त्विजीनाः स्याम इत्यध्येयं व्याकरणम्।

महान् देवः शब्दः। मरणधर्माणो मनुष्यास्तान् आविवेश। महता देवेन नः साम्यं यथा स्याद् इत्यध्येयं व्याकरणम्।

१. पाणिनीयशिक्षा, कारिका-३१,५०,५१।
२. तदेव, कारिका-५२,५३।
३. व्याकरणमहाभाष्यम्, प्रथमाह्निके, पृ. १०।

वाक् त्वस्मै तनुं विवृणुते यस्तत्तत्त्वं विजानाति, अर्थाद् वाग् वाग्विदे स्वात्मानं विवृणुते। वाङ् नो विवृणुयाद् आत्मानमित्यध्येयं व्याकरणम्।

व्याकरणं वस्तुतः तितउरिव वर्तते। यथा तितउना वस्तु शुद्धीक्रियते, तथैव व्याकरणसाधनेन वैयाकरणो विचक्षणोऽपशब्दान् अपसार्य स्वकीयं वाक्यं शुद्धं सुशब्दललितं विधत्ते, गृह्णाति च तस्य साहाय्येन यथार्थमर्थम्।

याज्ञिकाः पठन्ति—'आहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेत्'। प्रायश्चित्तीया मा भूम इत्यध्येयं व्याकरणम्।

शिष्टपरम्परा यद् द्व्यक्षरं चतुरक्षरं वा नाम कृतं कुर्याद् न तद्धितमिति। न चान्तरेण व्याकरणं कृतस्तद्धिता वा शक्या विज्ञातुम्। विभक्तिविज्ञानमधिगम्य पुरुषः सुदेवो भवितुमर्हति। विभक्तिज्ञानं व्याकरणाधीनम्। सुदेवाः स्याम इत्यध्येयं व्याकरणमिति।



# नञर्थाः षट् प्रकीर्तिताः

**डॉ. गायत्रीदेवी**

शोधसहायिका, संस्कृतविभागे
इलाहाबादविश्वविद्यालयस्य
इलाहाबादनगरे



यथार्थज्ञानस्य साधनरूपेण विश्रुतस्य शब्दप्रमाणस्य विषये नञर्था विशिष्टां पदवीं लभन्ते। निषेधार्थकमव्ययरूपम्, इदं 'नञ्' विधेरर्थं विशेषयति, पदपदार्थवाक्यार्थानां यथार्थबोधे उपयुक्तां भूमिकां निर्वहति च। यदपि सर्वासु दार्शनिकशाखासु नञो निषेधार्थकता एवाभिमता, तथाप्यस्य स्वरूपमर्थबोधकत्वं चाधिकृत्य मतवैभिन्नयं दरीदृश्यते। निषेधार्थकस्याव्ययस्यास्य स्वरूपस्यार्थबोध-प्रक्रियायाश्च विषये व्याकरणन्यायमीमांसादर्शनानि विशेषेण उल्लिख्यन्ते। एतन्नञ् कदाचित् समासेषु कुत्रचिद् वाक्येषु च प्रयुज्यते। यथा— 'अघटं पश्यति' 'घटो नास्ति' इत्यादिषु स्थलेषु। कस्मिन् स्थले नञः कोऽर्थः, कस्मिन्नर्थे स्वीकृते यथार्थबोधो भविष्यति? अस्य हेतोरेतस्य स्वरूपस्य यथार्थबोधप्रक्रियायाश्च ज्ञानमनिवार्यम्। आचार्यभर्तृहरिणा इदं नञर्थमधिकृत्य वाक्यपदीये कथितम्—

'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः'।।

एवं वैयाकरणमते तत्सादृश्यम्, अभावरूपम्, तदन्यत्वं तदल्पत्वरूपम्, अप्राशस्त्यम्, विरोधश्च षडर्थका नञः स्वीकृताः। एतेषां सोदाहरणं विवेचनमधोलिखितम्—

## १. तत्सादृश्यम्

अव्ययरूपो नञ्, येन सहान्वयरूपेण सम्बध्यते तत्सम्बद्धस्य पदार्थस्य सदृशस्य पदार्थस्य ग्रहणं यत्र वर्तते स तत्सादृश्यमर्थम्। अत्र तु तत्सादृश्यस्य तात्पर्यं नञा सहान्वितस्य पदार्थस्य ग्रहणम्। यथा 'अब्राह्मणमानय' इत्येतस्मिन्

वाक्ये प्रयुक्तस्य नञस्तात्पर्यं ब्राह्मणाद्भिन्नम्; किन्तु तत्सदृशस्य मनुजत्वद्विजत्वादिगुणै: संयुक्तस्य क्षत्रियादेर्ग्रहणात्। न त्वत्र ब्राह्मणत्वादिभिन्नस्य पशोर्मृल्लोष्ठादेर्वा ग्रहणे प्रयोजनमस्ति।

## २. अभावः

नञा सह सम्बद्धस्य पदार्थस्याभाव एवात्र अभावस्य तात्पर्यमस्ति। यथा—'घटो नास्ति' 'न कलञ्जं भक्षयेत्' इत्यादिषु वाक्येषु घटसत्त्वस्य प्रतियोगिघटासत्त्वं कलञ्जभक्षणाभावश्च नञस्तात्पर्यम्।

## ३. तदन्यत्वम्

तदन्यत्वस्य तात्पर्यन्तु नञा सह संयुक्तस्य पदार्थादितरपदार्थस्य ग्रहणम्। यथा—'अनश्व:' इत्येतेषु पदेषु अश्वाद्भिन्नस्य गर्दभादेर्ग्रहणत्वबोधनमेव नञ: प्रयोजनम्।

## ४. तदल्पत्वम्

यत्र तु नञस्तात्पर्यं न तत्सदृशपदार्थग्रहणेन सिध्यति, न तु तदन्यग्रहणेन, प्रत्युत स्वसम्बद्धस्य पदार्थस्याल्पत्वबोधनेन सिध्यति, तत्र तदल्पत्वमेव नञर्थ:। यथा—'अनुदरा कन्या' इत्यादिषु वाक्येषु। अत्र एतादृशकन्याग्रहणमसम्भवं यस्य उदरमेव न स्यात्। अत एतादृशस्थलेषु अभावार्थोऽपि न सङ्गच्छते। उदराद्भिन्नस्योदरसदृशगुणकस्येतरपदार्थस्य ग्रहणस्यापि असम्भवात्, तत्सादृश्यं तदन्यत्वं वा नात्र वक्तुस्तात्पर्यमस्ति। अतोऽत्र उदरनिषेधस्य तात्पर्यं तदल्पबोधनमर्थाद् अल्पोदरा कृशोदरी वा कन्याया बोधनेन नञ: प्रयोजनमस्ति।

## ५. अप्राशस्त्यम्

स्तुते: प्रशंसाया वा भिन्नं निन्दार्थबोधकस्य नञस्तात्पर्यप्राशस्त्यमेवास्ति। 'नञ्' इति अव्ययस्य तात्पर्यं स्वसंयुक्तपदार्थनिन्दयाऽपि व्यक्तं भवति। यथा—'अपशवो वाऽन्ये गोऽश्वेभ्य:' इत्येतस्मिन् वाक्ये गोऽश्वाभ्यां भिन्नपशूनामप्रशस्तत्वादत्र "अपशु" इत्येतस्य तात्पर्यं न पशुभिन्नपदार्थग्रहणम्, प्रत्युत गवादेर्भिन्नस्य इतरपशुग्रहणस्य निन्दा एव नञर्थमस्ति। एवम् 'अब्राह्मणोऽयम्' (महाभाष्ये-२।१६) इत्यादिषु स्थलेषु 'अब्राह्मण' इत्येतस्य शब्दस्य तात्पर्यन्तु ब्राह्मणसदृशस्य क्षत्रियादेर्ग्रहणम् प्रत्युत, ब्राह्मणविरुद्धाचरयितुर्ब्राह्मणस्य निन्दा एव नञस्तात्पर्यमस्ति।

**६. विरोधः**

कुत्रचिन्नञ् विरोधार्थकमपि भवति। यथा —'अधर्मः' 'असुरः' इत्यादिषु पदेषु नञा सह संयुक्तयोर्धर्मसुरयोर्विरुद्धार्थग्रहणबोधनेनेवात्राभीष्टं सिद्धं भवति।

स्पष्टमेतद् यद् भर्तृहरिप्रभृतिभिः प्राचीनैर्वैयाकरणैर्नञः षड्भेदाः स्वीकृताः, किन्तु नागेशभट्टादीनां नव्यवैयाकरणानां मत एते न नञर्थभेदाः 'प्रयोगोपाधिः' इत्येतत्। नव्यवैयाकरणैः पर्युदासप्रसज्यप्रतिषेधावेतस्य द्वयस्य नञर्थप्रकाररूपेण गृहीतम्। कुमारिलप्रभृतिभिः मीमांसकैरपि नञ एतौ द्वौ भेदावेव स्वीकृतौ। नैयायिकानां मते तु एतद्विपरीतमभावश्च भेदश्च इत्येतौ द्वौ नञर्थौ स्तः। भेदस्य तात्पर्यमन्योन्याभावोऽस्ति। अभावस्य तात्पर्यन्तु तादात्म्येतरतादात्म्याभावरूपम्। अतो नैयायिकैः प्राधान्यतो नञोऽभावार्थकत्वमेव स्वीकृतम्। मीमांसकवैयाकरणसम्मतौ पूर्वोक्तौ पर्युदासप्रतिषेधौ कौ? कस्मिन् स्थलेषु तयोर्व्याप्तिर्भवति? इदमधिकृत्य भर्तृहरिणा वाक्यपदीये उक्तम्—

'द्वौ नञौ हि समाख्यातौ पर्युदासप्रसज्यकौ।,
पर्युदासः सदृग्ग्राही प्रसज्यस्तु निषेधकृत्'।।

**क. पर्युदासनिषेधः**

परि-उदित्युपसर्गपूर्वकाद् 'अस्'-धातोः 'घञ्' इति कृत्प्रत्ययेन संयुक्ते 'पर्युदासः' इति शब्दस्य निष्पत्तिर्भवति। यस्य तात्पर्यं सदृशपदार्थग्रहणमस्ति, एवं येन सह नञर्थस्यान्वयः स्यात्, तत्सदृशमिव इतरपदार्थग्रहणमिति पर्युदासनञस्तात्पर्यम्। यथा—'नेक्षेतोद्यन्तमादित्यम्', 'अब्राह्मणमानय' इत्यादिषु वाक्येषु ईक्षणब्राह्मणादिभिरन्विता नञ्श्रुतिरादित्यानीक्षणविषयकसङ्कल्पस्य विधानेन चरितार्था भवति। एवञ्च ब्राह्मणेतरपुरुषस्य ग्रहणं विधत्ते। ईक्षणक्रियाया निषेधो नात्र नञ्श्रुतेः प्रयोजनमस्ति। ईक्षणक्रियाया निषेधो तु लक्षणया अर्थतो ज्ञायते। अनेन प्रकारेण पर्युदासनिषेधे नञ्श्रुतर्विधायकत्वमेव, निषेधस्तु आर्थः। अस्माद् हेतोः पर्युदासनिषेधः 'प्रच्छन्नरूपविधिः' इत्यपि उच्यते। पर्युदासस्थलेषु नञ् सदा उत्तरपदार्थेन सहैवान्वेति। स तु उत्तरपदार्थः संज्ञावाचको वा धात्वर्थवाचको वा स्यात्। अतः स्पष्टमेतद् यत् पर्युदासनिषेधे नञ् नामधात्वर्थयोरुभयोः केनचिदपि सह संयोज्यं भवति। वस्तुत एतादृशस्थलेषु प्रयुक्तस्य नञर्थस्य लक्ष्यं मुख्यतः स्वसंयुक्तपदार्थादितरं किन्तु तत्सदृश एव पदार्थस्य ग्रहणबोधनमेव भवति। यथोक्तमाचार्यकुमारिलभट्टेन—

'नामधात्वर्थयोगी च नैव नञ् प्रतिषेधकः।
वदतोऽब्राह्मणधर्मान्वयमात्रविरोधिनौ'।। (तन्त्रवार्तिकः)

धात्वर्थसंयुक्तो नामसंयुक्तो वा नञ् अप्रतिषेधकं भवति। अत्र तु निषेधो गौणत्वात् लक्षणया गृहीतो भवति। यतो हि लक्षणाश्रुत्या अभिधाश्रुतिर्बलवती, अतः श्रुत्यर्थे सति लक्षणया गृहीतोऽर्थोऽयुक्तम्। भर्तृहरेरनेन श्लोकेनापि इदं मतं सिद्धं भवति—

'प्राधान्यं तु विधेर्यत्र प्रतिषेधेऽप्रधानता।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्'।।

दर्शपूर्णमासयागस्य प्रकरणे पठितं 'यजतिषु ये यजामहं करोति नानुयाजेषु' इदमापस्तम्बश्रौतसूत्रवचनं नामयोगिनः पर्युदासस्य शीर्षमुदाहरणमस्ति। नामयोगित्वादत्र नञ् अनुयाजयागेषु 'ये यजामहम्' इत्येतस्य मन्त्रपाठस्य निषेधको न प्रत्युत अनुयाजभिन्नेषु यागेष्वस्य मन्त्रस्य पाठं विधीयते। 'अब्राह्मणमानय' 'अनुदरा कन्या' 'समुद्रमासाद्य भवन्त्यपेया', 'पुत्रः शत्रुरपण्डितः', 'असुरः' 'अधर्मः' इत्यादीनि वाक्यानि पर्युदासनिषेधस्यान्यानि लौकिकोदाहरणानि सन्ति।

**ख. प्रसज्यप्रतिषेधः**

नञर्थेन सहान्वितस्य प्रसक्तस्य क्रियादेर्निषेधः प्रसज्यप्रतिषेधस्य तात्पर्यम्। यस्मिन् नञ्स्थले निषेध एव मुख्यार्थः स्याद् विध्यर्थस्तु गौणो भवति, तत्र प्रसज्यप्रतिषेधनाम्नो नञर्थभेदश्चरितार्थो भवति। प्रसज्यप्रतिषेधे प्राधान्येन क्रियया सह नञर्थोऽन्वितो भवति। क्रियया सह सम्बद्धं नञ् सदैव प्रतिषेधकमेव। एष एव 'शुद्धनिषेध' इति शब्देनोच्यते, यतो हि एवंविधेषु स्थलेषु निषेध एव वाक्यस्य प्रधानप्रयोजनमस्ति। विषयेऽस्मिन् भर्तृहरिणा वाक्यपदीये उक्तम्—

'अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता।।
प्रसज्यस्तु स विज्ञेयः क्रियया सह यत्र नञ्'।।

यथा— 'न कलञ्जं भक्षयेत्', 'ब्राह्मणो न हन्तव्यः', 'सुरां न पिबेत्', 'न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः' इत्यादिषु वाक्येषु नञर्थः क्रियया सह संयुक्तत्वादुक्तस्थलेषु निषेधार्थो मुख्यः। अस्माद्धेतोरेतानि प्रसज्यप्रतिषेधस्योदाहरणानि सन्ति, इति सिद्धं भवति। वस्तुत एतादृशेषु वाक्येषु निषेधार्थस्य प्राधान्यमेवेष्टम्। अत एव नञ् क्रियाविधायकेन प्रत्ययार्थेन सहान्वितो भवति, नाम्ना धात्वर्थेन सार्धं वा न संयुज्यते। पार्थसारथिमिश्रमहोदयस्य मते तु 'न पिबेत्'

इत्यादिषु स्थलेषु आख्यातयोगित्वान्नञ् न प्रतिषेधार्थस्य वाचकं भवति। अत्र प्रतिषेधमात्रे नञर्थस्य पर्यवसानसम्भवत्वात् तदालम्बनरूपेण तदितरवस्तुग्रहणं न भवति, प्रत्युत क्रियारहितसत्ताबोधनमेव मुख्यम्।[१]

पर्युदासप्रतिषेधप्रसज्यप्रतिषेधयोः प्रधानं वैभिन्नयमिदं यत् स्वसहोच्चरितानां पदानां सामर्थ्येन पर्युदासार्थकं नञ् प्रायः समस्तपदेष्वेव वर्तते,[२] न विभक्त्यादिषु; किन्तु केषुचित् स्थलेष्वसमस्तपदेऽपि पर्युदासो दृश्यते। यथा — 'घटः अपटो भवति' इत्यर्थस्य बोधकः 'घटः पटो ने'त्यादिषु वाक्येषु।

समासस्य वैकल्पिकत्वेन समासवृत्तेः प्रयोगो विवक्षितो भवति। अतो यत्र समासस्य प्रयोगो वक्तुरनीप्सितं तत्र पर्युदासोऽसमस्तपदेष्वपि सम्भाव्यते। अनेन प्रकारेण पर्युदासनञ् उभयप्रकारकमस्ति। नञ् विशेष्यभूता क्रियया सह क्रियाविशेषणत्वेनान्वेति, अतः प्रसज्यप्रतिषेधः क्रियान्वयी भवति[३]।

'असूर्यललाटयोः' इत्यादेर्ज्ञापकत्वात् सुबन्तस्य पदस्यासमर्थे सत्यपि यन्नञ् सुबन्तेन सह समासत्वं प्राप्यते, तस्मिन् विषये वैयाकरणानां मतमिदम्—

'प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ्' इत्यस्मिन् वाक्ये प्रयुक्तं 'क्रियया' इति पदं गुणस्यापि उपलक्षकमस्ति। नागेशभट्टस्य मतानुसारेण 'नञ्'[४] इत्येतस्य सूत्रस्य भाष्ये पतञ्जलिना महोदयेन गुणस्योपलक्षणार्थं 'प्रसज्यायं क्रियागुणौ ततः पश्चान्निवृत्तिं कुरुत' इत्याचक्षीत। यथा—'नास्माकमेकं प्रियम्' इत्यादिषूदाहरणेषु एकप्रियप्रतिषेधनेन 'बहुप्रियम्' इति प्रतीतिर्भवति, तत् 'क्रियया' इति पदं गुणोपलक्षकं स्वीकृतमेव सङ्गच्छते। एवम् 'असन्देहः' 'अनुपलब्धिः' इत्यादिषु स्थलेषु गुणवाचकाः सन्देहादयः क्रिययोपलक्षितानि सन्ति। 'अनचि च'[५] 'गेहे घटो नास्ति' इत्यादीन्युदाहरणानि नञर्थस्य क्रियया सहान्वितत्वस्य प्रमाणम्। प्रसज्यप्रतिषेधे नञ् सदैव प्राप्तार्थस्य प्रतिषेधकम्। अतो यथा 'अनचि च' इत्यस्मिन् सूत्रवाक्ये अच्परे सति अचः परस्थितस्य यरो द्वित्वस्य निषेधो भवति, तथैव नञ् क्रियागुणाभ्यां प्राप्तस्य कार्यस्य प्रतिषेधकं भवतीति सर्वं सुस्पष्टम्।

---

१. आपस्तम्बश्रौतसूत्रम्-२४।१३।६।

२. द्र. श्लोकवार्तिकस्य न्यायरत्नाकरटीका, पृ. ६५५।

३. पर्युदासस्तु स्वसमभिव्याहृतपदेन समस्त एव। क्वचित्तु 'यजतिषु', 'इत्यादौ घटः अपटो भवतीत्यर्थके घटो न पट इत्यादौ च समासविकल्पादसमासेऽपि। अत्रान्योन्याभावः फलितो भवति। प्रसज्यप्रतिषेधस्तु समस्तोऽसमस्तश्चेति द्विविधः। (परमलघुमञ्जूषा)

४. पाणिनिसूत्रम्-२।२।६।

५. तदेव-८।४।४७।

वस्तुतो येषु स्थलेषु नञर्थो समस्तपदे वर्तते तत्र तस्यार्थोऽत्यन्ताभावरूप:। यत्र च नञ् असमासरूपे पदे वर्तते' एतादृशस्थलेषु नञ् अत्यन्ताभावान्योन्याभावौ उभयप्रकारकं सम्भवतीति, सिद्धम्। 'असूर्यंपश्या राजदारा:' इत्यादिषु वाक्येषु सामासिके पदे स्थितं नञ् अत्यन्ताभावस्य द्योतकम्। एवं 'घटो न पट' इत्यस्मिन् वाक्ये असामासिके पदे स्थितं नञ् अन्योन्याभावस्य ''गेहे घटो नास्ति' इति वाक्ये असामासिके पदे स्थितं नञ् अत्यन्ताभावस्य द्योतकमस्ति[1]। यस्तु येन सह स्वरूपेणासम्बद्ध: स अन्योन्याभाव:। यथा— 'घटो न पट:' इति वाक्ये घटपटयोर्भिन्नोपादानत्वात् तौ न स्वरूपत: सम्बद्धौ शक्येते। एवं येन सह य: स्वरूपेण सम्बद्ध: सोऽत्यन्ताभावरूपोऽस्ति। वस्तुतोऽयमत्यन्ताभावो नञा न क्रियते, अपि तु पूर्वस्थितमभावं नञ् उद्घाटयति। अतो मीमांसकैर्भावाभावयो: सत्ता स्वीक्रियते। यथोक्तं श्लोकवार्तिके—

'आख्यातप्रत्ययैर्योगे निवृत्त्यर्थ: प्रतीयते।
तत्र चाज्ञातसन्दिग्धविपरीतार्थवारणात्'[2]।।

स्पष्टोऽयं यन्नञ् अतीतानागतवर्तमानानि, किन्तु विद्यमानमेवाभावमाचक्षते। मीमांसादर्शने नञो वर्तमानत्वं त्रिधा मतम्— पर्युदासाभावप्रतिषेधा:। एषु अभाववृत्तिस्तु वस्तुत: पर्युदासप्रसज्यप्रतिषेधयोरेव सङ्ग्रहीता भवति। अभावस्याप्राप्तत्वादत्र प्रसज्यप्रतिषेधरूपो नञर्थोऽप्यसङ्गत:। नैयायिकानां मते अभावमात्रस्य प्रतिषेधार्थकत्वं स्वीकृते सति पूर्वोक्ताभावभेदानामपि नञर्थद्योत्यत्वं स्वीकरणीयम्। यतो हि नैयायिकमते नञोऽभावरूपत्वमन्योन्याभावस्य च भेदरूपत्वमप्यभिमतम्। तेषां मते समासस्य घटकीभूतं नञ् भेदरूपम्। यश्च समासावयवो नास्ति, तच्च नञ् संसर्गाभावस्य बोधकम्। यथा—'अघटं पश्यति' इत्यादिषु वाक्येषु नञ: समासघटकत्वाद् भेदरूपं नञ् 'घटभिन्नं पश्यति' इत्यवबोधयति। एतद्विपरीतं 'घटो नास्ति' इत्यादिषु स्थलेषु 'घटत्वावच्छिन्नस्य प्रतियोगिन: संसर्गाभावरहितसत्ताकवान् घटोऽस्ति' एवंप्रकारको बोधो सङ्गच्छते। अन्येषां दार्शनिकानां मते तु एतत् स्वीकृते 'घट: पटो न' इत्यादीनामुदाहरणानां सङ्गति: कथं भविष्यति, यतो हि एतादृशस्थलेषु असामासिके पदे स्थितं नञ् संसर्गाभावभेदाभ्यां भिन्नमन्योन्याभावरूपमस्ति, अतो नैयायिकानां मतमयुक्तम्। अस्यामवस्थायामियं शङ्का सञ्जाता यत् का आरोपविषयता? तस्येदं समाधानं वर्तते— पर्युदासनञा

१. द्र. नागेशभट्टकृता परमलघुमञ्जूषा, पृ. १३५।
२. श्लोकवार्तिकं वाक्याधिकरणे, श्लो. ३०२।

सहोच्चरितपदार्थस्यावच्छेदकधर्मयुतस्य धर्मिण आरोपविषयताप्रकारकस्य ज्ञानस्य सहकारिभूतत्वात् पर्युदासनञ्। अस्यारोपविषयताया बोधकत्वाच्च स्वसहोच्चरित-घटादिपदेष्वारोपितप्रवृत्तिनिमित्तस्य बोधनेन नञ् तात्पर्यग्राहकोऽपि। अब्राह्मणम्, अघटम् इत्यादिषु स्थलेषु घटत्वब्राह्मणत्वादयः पर्युदासनञः प्रवृत्तिनिमित्तानि। अत एव 'अब्राह्मणम्' इत्यादिषु स्थलेषु 'आरोपितब्राह्मणत्ववान् क्षत्रियादि' एवं बोधो सम्भवति। यतो हि प्रवृत्तिनिमित्तत्वस्यारोपः सदैव सदृशपदार्थेष्वेव भवति, अत एव भर्तृहरिणा 'पर्युदासः सदृग्ग्राही' इत्यादीनि वचनान्युक्तानि। अतो नञर्थस्य द्योतकत्वमभिधाश्रुत्यैव सिद्धे सत्यत्र लक्षणया नञो भेदकत्वमिति मतमयुक्तम्, कल्पनागौरवत्वात्। यतो हि निपाताः स्वयमेवानेकार्थवाचिनः सन्ति, अतोऽत्र लक्षणा निरवकाशा। साहित्यशास्त्रकारैरपि एतादृशस्थलेषु अभिधामूला व्यञ्जनैव स्वीकृता, न तु लक्षणावृत्तिः, अतो नञर्थस्य द्योतकता सर्वाभिमता[१]।

इयमपि शङ्का समुत्पन्ना भवति यत् कथं ज्ञायते नञ आरोपविषयता? अर्थात् कथमिदं ज्ञायते यदस्मिन् स्थले नञ् पर्युदासार्थकमस्ति। तस्यायं निरासो यथा— 'सिंहो माणवकः' इत्यादिषु वाक्येषु प्रयुक्ताः सिंहादयः शब्दाः सिंहादिभिर्पदैः सहान्वितत्वाद् 'आरोपितसिंहत्ववान्' इति बोधनात् तात्पर्यग्राहकाः सन्ति, तथैव 'अब्राह्मणमानय' 'अनुदरा कन्या' इत्यादिवाक्यगतानि 'अब्राह्मणोऽनुदरा' इत्यादीनि पदानि तद्भिन्नोदराल्पत्वादीनां संरोप्य नञा सहान्वित-त्वादारोपितोदरबुद्धिद्वारेण तन्मूलकमुदराल्पत्वादिविषयकं तात्पर्यं ग्राहयन्ति। अनेन प्रकारेण 'अद्विजादिषु' पदेषु द्विजभेदमूलकस्य प्रवृत्तिनिमित्तत्वस्यारोपितत्वेन नञ् तद्भिन्नस्य पदार्थस्य तात्पर्यग्राहकं भवति। नञो द्योत्यत्वमारोपविषयत्वं च पर्युदासनञे प्राधान्येन परिलक्षितं भवति।

वस्तुतस्तु पर्युदासनिषेधे तत्सदृशस्य तथापि तद्भिन्नस्य यद्ग्रहणं तदेव नञर्थस्य भेदरूपताऽस्ति। एवं नञः पर्युदासपरकत्वमेव नञर्थस्य भेदकत्वमस्ति, अयमेव चान्योन्याभावस्य व्यञ्जकोऽपि। निष्कर्षोऽयं यन्नैयायिकसम्मतनञर्थप्रकाराद् वैयाकरणादीनां सम्मतो नञर्थप्रकारो न तत्त्वतो भिन्नः। नञोऽभावार्थकत्वं तु केनचिद्रूपेण सर्वैः स्वीकृतम्। यत्र तु नैयायिकाः 'अभावो नञर्थस्यैकः प्रकार' इति

---

१. आरोपितत्वस्य नञ्वाच्यत्वे तु तस्य ब्राह्मणादिपदशक्येऽनारोपितब्राह्मण्यवति सम्बन्धो दुरुपपादः। तत्र प्रसिद्धार्थपरित्यागोऽप्रसिद्धार्थपरिग्रहश्चेत्युभयं द्योतककृत्यमिति नञ्सूत्रभाष्ये स्पष्टम्। इदमेव नञो द्योत्यद्योतकत्वं नाम। (लघुमञ्जूषायां नञर्थप्रकरणम्)

मन्यन्ते, तत्रैव मीमांसाव्याकरणदर्शने तत्सादृश्यम्, अभावः, तदन्यत्वम्, तदल्पत्वमप्राशस्त्यादयोऽर्थाः पर्युदासार्थकस्य निषेधे उपसङ्गृह्यन्ते[1]।

'यजतिषु ये यजामहं करोति नानुयाजेषु' इत्यस्मिन् वाक्ये यत्र तु मीमांसकैर्विकल्पप्रसक्तिभयात् "पर्युदासनञ्" स्वीक्रियते तद्विपरीतं वैयाकरणैरेतादृशेषु स्थलेषु विकल्पप्रसक्तिविषयमस्वीकृतम्। तेषां मतेऽत्र विकल्पप्रसक्तिस्तु तदा भवति, यदाऽनुयाजयागेषु 'ये यजामहम्' इति मन्त्रस्योच्चारणं शास्त्रतो भिन्नवाक्यरूपेण प्रसक्तं भवति। यथा—'नातिरात्रे षोडशिनं गृह्णाति' 'अतिरात्रे षोडशिनं गृह्णाति' इत्यादिषु स्थलेषु विधानप्रतिषेधावुभौ शास्त्रविहितत्वेन एतादृशस्थलेषु विकल्पः प्राप्यते[2]। अतोऽत्र विकल्पप्रसक्ति-भयरहितस्य पर्युदासार्थकस्य नञस्तात्पर्यं तद्भिन्नत्वस्य द्योतनेऽस्ति। वाक्येऽस्मिन् अनुयाजभिन्नयागेषु 'ये यजामहम्' इति मन्त्रस्योच्चारणं विधिवाक्येनैव गृहीतम्। नैयायिकानां मते तु 'यजतिषु' इत्यस्मिन् वाक्ये नञ् भेदवाचकम्। अत्र च लक्षणया भेदवति पदार्थे विद्यमानत्वान्नञर्थो भेदप्रतियोगिरूपेण अनुयाजयागेष्वन्वितो भवति। भेदप्रतियोगिन आधारभूतत्वेन 'अनुयाजेषु' इति पदे सप्तमी प्रयुज्यते। अतोऽत्रानुयाजनिष्ठभेदप्रतियोगिताकभेदवत्सु यागेषु 'ये यजामहम्' इति मन्त्रस्य पाठः कर्तव्यः, वाक्यार्थः सङ्गच्छते।

नेयं शङ्काऽपि युक्ता यत् 'यजतिषु.' इत्यादिषु स्थलेषु नञः प्रतिषेधार्थकत्वं कथं नाभिमतम्, यतो हि उक्तस्थलेषु नञ् अत्यन्तनिषेधरूपेण मतम्। 'यजतिषु.' इत्यादिभिर्वाक्यैर्विधानप्रतिषेधावुभौ शास्त्रविहितत्वादष्टदोषग्रस्तौ, विकल्पोऽपि स्वीकरणीयः, यत्तु यत्त्वयुक्तः। एवं 'नार्षेयं वृणीते न होतारम्' इत्यादिषु वाक्येषु नञर्थो लक्षणया भेदवान् प्रतियोगिभूतेनार्षेयेण सह सम्बद्ध्यते। अतोऽत्र 'आर्षेयवरणभिन्नप्राकृताङ्गसमूहो महापित्र्येष्टौ वरणीयः' इति वाक्यार्थबोधो भवति। वस्तुतोऽत्रार्षेयवरणं न विधिवाक्येन प्राप्तम्, प्रत्युत 'प्रकृतिवद् विकृतिः कर्तव्या' इत्यतिदेशनियमाद् दर्शपूर्णमासयागस्य विकृतित्वेन महापित्र्येष्टावपि अनुष्ठेयकर्तव्यरूपेण प्राप्तं भवति। अतः शास्त्रविहितस्याप्रतिषेधनेनात्र विकल्पप्रसक्तेर्विषयो नास्ति।

---

१. द्रा.नागेशभट्टकृता परमलघुमञ्जूषायाम्, निपातार्थनिरूपणम्, पृ. १४०।

२. "यत्र विकल्पापादकः प्रतिषेधस्तत्र प्रतिषिध्यमानस्य नानर्थहेतुत्वम्। उभयोरपि विधिप्रतिषेधयोः क्रत्वर्थत्वात्"। (मीमांसान्यायप्रकाशः, पृ. ११७) एवं 'यत्रैकमर्थं शिष्ट्वा तद्विषय एव नकारः श्रूयते यथा अतिरात्रे............'। (शास्त्रदीपिका, पृ. ४६३)

न्यायमते तु इदं स्वीकृतं यदत्यन्ताभावप्रकारको (विशेषणको) क्रियाविशेष्यको बोधो भवति। अर्थाद् वाक्यार्थबोधेऽत्यन्ताभावरूपं नञ् विशेषणं क्रियासहान्वयिनं च भवति। मतमिमं दूषयतो नागेशभट्टमहोदयस्य मन्तव्यं, यद् 'वायौ रूपं नास्ति' इत्यादिषु स्थलेषु तात्पर्यानुपपत्तित्वेन रूपप्रतियोगिकात्यन्ताभावे लक्षणया वायौ रूपाभावो ज्ञायते; किन्तु अयमत्यन्ताभावस्तु वायौ समनियतरूपाभावरूपिणोऽर्थ इत्यादिरूपेण अर्थत एव प्रतीयते। अतो नैयायिकानामिदं मतं स्वयमेवापास्तम्। नञ् अ-भावरूपमिति वादिनां सत्कार्यवादिनैयायिकानामयमपि तर्कोऽयुक्तो यद् बुद्धिस्थघटसत्तारूपपदार्थ; प्रथमस्तु नञा अनिवारितव्यः, यतो हि सत्पदार्थस्य निषेधोऽसम्भवः। असतो निवृत्तिस्तु तस्यासन्मात्रेणैव भवति। अतो 'नासतो विद्यते भावो नाभावो विद्यते सतः'[1] इत्यनेन न्यायेन अत्यन्ताभावप्रकारकः क्रियाविशेष्यको बोधो भवतीति' अस्वीकृते नञ्कृता निषेधस्याविषयता प्रसक्ता भवति। यथोक्तम्—

'सतां च न निषेधोऽस्ति सोऽसत्सु न विद्यते।
जगत्यनेन न्यायेन नञर्थो प्रलयङ्गतः'[2]।।

एतन्मतं दूषयन् वैयाकरणैराख्यायते, यतो हि बुद्धिस्थावेव शब्दार्थौ, वाच्यवाचकभावः प्राप्यते, अत एव बुद्धिगतपदार्थस्य बाह्यसत्ता एव नञा निषेध्यते। एवं स्वीकृते 'बुद्धिस्थस्यापि घटस्य बाह्यसत्ता नास्ति' 'इत्याकारको बोधो भवत्येव। अस्मिन् विषये यदा 'घटोऽस्ति' इत्यनेन वाक्येन तद्विषयकं ज्ञानं निवारणीयं च। अतो बुद्धिस्थस्य शब्दार्थस्य स्वीकृतिः व्यर्थेतीदं मतमयुक्तम्। अस्य तु निरासोऽयम्— बुद्धिगतस्य शब्दस्यावाच्यतामते नञा तन्निषेधोप्यसम्भवः, अतो बौद्धार्थस्य स्वीकारं युक्तमिति सिद्धम्'[3]।

येषु स्थलेषु निषेध्यवस्तूनां रागतः प्राप्तिर्भवति, तत्रापि नञर्थाः क्रियान्वयिनो भवन्ति। यथा—'न कलञ्जं भक्षयेत्' इत्यादिषु वाक्येषु। एवं पुरुषार्थरूपेण विहितानां कर्मणां क्रत्वर्थाय निषेधोऽपि स्वीकार्यत्वादेतादृशस्थलेष्वपि नञ् तिङर्थेन क्रियया सह वा सम्बध्यते। यथा— 'दीक्षितो न ददाति न जुहोति'[4]

१. तैत्तिरीयब्राह्मणे-१।६।९।१।

२. नागेशभट्टकृतायाः परमलघुमञ्जूषाया निपातार्थनिर्णयादुद्धृतः।

३. बुद्धेः शब्दावाच्यत्वेन नञा तन्निषेधायोगात्। एतेन बौद्धार्थमस्वीकुर्वन्तो नञर्थबोधाय कष्टकल्पनां कुर्वन्तस्तार्किकाः परास्ताः। (परमलघुमञ्जूषा, पृ. १३९)

४. तैत्तिरीयसंहिता-१।२।३; मैत्रायणीसंहिता-२।६।५।

इत्यादिभिर्वाक्यैर्ज्योतिष्टोमयागे दीक्षितेन पुरुषेण यागकाले दानहोमपाक इत्यादीनां कर्मणामनुष्ठानं निषिद्धमस्ति। यदपि दानादीनि कर्माणि नानिष्टकराणि, तथापि क्रत्वर्थे वैगुण्योत्पादकत्वात् तानि क्रतुकाले नानुष्ठेयानि भवन्ति। एतेषां कर्मणां निषेधस्तु क्रतुसाद्गुण्याय भवति। उक्ताख्यानेन स्पष्टमेतद् यन्नञर्थस्य क्रियान्वयिनि सति 'अत्यन्तनिषेध' एव नञर्थे द्योत्यं भवति।

निष्कर्षोऽयं यदा नञः पर्युदासार्थकानि भवन्ति, तदा तस्यान्वयो नामधेयपदेन धात्वर्थेन सह वा भवति। एवम्भूते सति तानि तद्भिन्नस्यार्थस्य द्योतकानि भवन्ति। अयन्तु पर्युदासप्रतिषेध इत्याख्यायते, एतदेव नैयायिकसम्मतं नञो 'भेदरूपत्वञ्च'। एष्वेव तत्सम्मतोऽन्योन्याभावरूपोऽर्थोऽपि सङ्गृहीतो भवति, यतो हि पर्युदासनञि तद्भिन्नस्य यद्ग्रहणं तदेव नञर्थस्य भेदकतारूपेणोक्तम्। येषु स्थलेषु नञः क्रियया सहान्वयिनो भवन्ति, तत्र तस्यार्थोऽत्यन्तनिषेधो भवति। एतदेव प्रसज्यप्रतिषेध इति संज्ञया अभिहितम्, यतो हि अस्मिन् नञभेदे 'नान्तरिक्षे न दिवि' इत्यादीनामिव अप्राप्तप्रतिषेधो नास्ति; प्रत्युत प्राप्तार्थस्यैव प्रतिषेधो भवति। एतादृशेषु स्थलेषु घटितस्य निषेधस्य नैयायिकैर्यद् 'अत्यन्ताभाव' इति संज्ञा कृता, साऽप्यग्राह्या नास्ति। निषेधस्तु वस्तुतः सत्पदार्थस्यैव भवति। अतः प्रसज्यप्रतिषेधस्यात्यन्तनिषेधरूपत्वात् क्रियान्वयी नञर्थोऽपि 'अत्यन्ताभावरूप' एवास्ति।

निपातानां द्योतकतायाः सर्वत्र प्रसिद्धत्वान्नञस्तात्पर्यार्थस्य द्योतकता भवति। निपातानां द्योतकत्वे स्वीकृते सत्येव नञ्तत्पुरुषस्य 'उत्तरपदार्थप्राधान्यत्वमपि सङ्गतम्, नञो वाचकत्वे स्वीकृते पूर्वपदस्य प्राधान्यं सिद्धम्। एवम्भूते सति 'असः शिवः' 'अतस्मै ब्राह्मण' इत्यादिवाक्यगतेषु 'असः' 'अतस्मै' इत्यादिषु पदेषु सर्वनामकार्यमसम्भवम्, अतोऽस्मात्कारणादपि नञर्थस्य द्योतकत्वं सिद्धं भवति। नञर्थस्तु वस्तुतः स्वसंयुक्तस्य पदार्थस्य तत्सादृश्यार्थम्, अभावस्तदन्यत्वं तदल्पत्वमप्राशस्त्यम्, विरोधादिरूपाणां तात्पर्यार्थानां द्योतने प्रकाशने वा समर्थः। अत एव वाक्यार्थबोधविषये एषामुपयोगित्वमनिवार्यम्। अतः '**नञर्थाः षट् प्रकीर्तिताः**' इति वचनं सर्वथा युक्तमिति सिद्धम्।

●

# लिङ्गतत्त्वनिर्णयः

**डॉ. वृजकिशोरत्रिपाठी**

प्रवक्ता, संस्कृतस्य, पं.रा.ल.शु.
राजकीयस्नातकोत्तरमहाविद्यालये, फतेहपुरम्, आलापुरम्
अम्बेडकरनगरम्



अलिङ्गो न पुमान्नापि स्त्री न नपुंसकः पुंसा।
श्रुतिलिङ्गस्सदा ध्येयः प्रत्यङ्ङात्मा मुमुक्षुणा।।१।।
लिङ्गं गमयितुं शक्यं न विवद्भिः कृतश्रमैः।
शब्दशास्त्रेऽपि शब्दानां लिङ्गेऽतः क्रियते श्रमः।।२।।

इह नास्त्यविदितं विदुषां यच्छब्दशास्त्रे कृतभूरिपरिश्रमाणामपि शब्दानां सम्यक्तया लिङ्गज्ञानं न सुशक्यमिति। यतो हि दृश्यते वाङ्मये यन्नैके शब्दा अर्थभेदाल्लिङ्गभेदमादधति, अन्ये चार्थेन लिङ्गान्तरकत्वेनानुभूयमाना अपि लिङ्गान्तरमुपश्लिष्यन्ति। अथ च केचित् समानार्थस्वरूपा अपि त्रिलिङ्गत्वं द्विलिङ्गत्वं वा वहन्ति। एवं शब्दानां लिङ्गविषये महद्वैचित्र्यं समुपलभ्यते भाषासु। लौकिकलिङ्गभेदशब्दगतलिङ्गभेदविसंवादश्च प्रायेण सर्वेषु भाषाविज्ञानविषयकेषु ग्रन्थेषु सरसमुपवर्णितो दृश्यते। यतो हि लिङ्गं शब्दनिष्ठमर्थनिष्ठं वेति विचारोऽपि महते विसंवादायोपतिष्ठते। एतादृश्योऽन्याश्च समापत्तय इह नातिदीर्घकायनिबन्धे विचारपदवीमारोक्ष्यन्ति संस्कृतसुरभारत्याः पाणिनीयव्याकरणानुसारेण, तदनुयायि-भर्तृहरिकौण्डभट्टप्रभृतिवैयाकरणमूर्धन्यानां सिद्धान्तालोचनपुरःसरेण। विशेषतोऽत्राहं भर्तृहरेर्वाक्यपदीये समुपलभ्यमानलिङ्गसमुद्देश्यप्रकरणमाश्रित्य प्रवर्ते लिङ्गतत्त्व-निर्णये।

## लिङ्गलक्षणम्

भारतीयैः शाब्दिकैस्तादृशस्य लिङ्गलक्षणस्य व्यवस्थापने प्रयत्नः कृतो यदुपरि निर्दिष्टानां सर्वेषामपि लिङ्गोपादानविकल्पानां व्यापकत्वं स्यात्।

तैरैतिहासिकीं दृष्टिमवलम्ब्य पदार्थानामुत्पत्तिविकासविलयक्रमावबोधने न तथा रुचिः प्रकटिता, यथा तेषामपरिणामिनित्यस्वरूपपरिज्ञाने। तेन प्राकृतभाषासु केषाञ्चिच्छब्दानां लिङ्गव्यत्ययं दृष्ट्वाऽपि तद्धेत्वन्वेषणे प्रयत्नप्रकृत्या लिङ्गस्वरूप-परिज्ञान एव तैः सुसूक्ष्मं विचारः कृत इति तद्ग्रन्थपरिशीलनेन सम्यगवन्तुं शक्यते। एवं लिङ्गतत्त्वनिर्णये प्रवृत्तास्ते विद्वांसः शब्दार्थगतयोर्लिङ्गभेदयोरापाततः प्रतिभासमानं विसंवादमादावेवोपलक्षयाम्बभूवुः। आङ्ग्लादिभाषासु शब्दगतस्यार्थ-गतस्य च लिङ्गस्य पृथक् पृथग् व्यवहारः समुपलभ्यते। संस्कृते तु शब्द-गतस्यार्थगतस्य च लिङ्गस्यैकेनैव लिङ्गशब्देन व्यवहार इति शब्दैक्याल्लिङ्गैक्यं भवितुमर्हतीति नैसर्गिकोऽयं लौकिकानामभिमानः। सर्वेषु विषयेषु विमर्शशीलानां व्यपदेशैक्येऽपि लिङ्गयोरुभयोर्लक्ष्यैक्येऽपि विसंवादं दृष्टवतां परीक्षकाणां तु मनसि समुत्पन्नेयमाकाङ्क्षा यत् किमिदं लिङ्गं नाम। किमयं शब्दगतो लिङ्गभेदो वस्तुगतं कञ्चित् स्वरूपभेदं वा धर्मभेदं वाऽऽश्रित्य स्थितः, आहोस्वित् केवलं शब्दधर्मोऽयमिति।

तत्र 'पुंस्त्रीनपुंसकान्यतमत्वमेव लिङ्गमि'ति लिङ्गसामान्यलक्षणं वक्तुं शक्यते। भवति हि शाब्दज्ञाने शब्दजन्यशब्दार्थोपस्थितिः कारणम्। तत्रापि सम्बद्धादेव शब्दात् सम्बन्धिनोऽर्थस्योपस्थितिर्जायते नासम्बन्धिनः। वेदेभ्य आरभ्यार्वाचीनशास्त्रग्रन्थपर्यन्तं शब्दार्थौ तयोः सम्बन्धं चाधिकृत्य गभीरो विचारः कृतः। समुपलभ्यते चात्र मतानां बाहुल्यं वैचित्र्यञ्च। केचिच्छब्दार्थसम्बन्धस्य नित्यत्वं मन्यन्ते, अपरे तस्य कृतकत्वं स्वीकुर्वन्ति। केचिच्छब्दार्थयोरध्यासरूपं तादात्म्यं सम्बन्धमभिप्रयन्ति, अपरे तं कार्यकारणभावमुद्घोषयन्ति। सर्वथा नास्ति कोऽपि दार्शनिको यस्तयोः सम्बन्धं घनिष्ठं नाभिमन्येत। तस्य च घनिष्ठत्वेऽ-भिमन्यमाने शब्दधर्मैरवश्यमर्थधर्मानुवर्तिभिरेव भवितव्यम्। लिङ्गञ्च शब्द-धर्मेष्वन्यतमः। तस्याप्यर्थधर्मानुवर्तिभिरेव भवितव्यम्, इदमेवातः सर्वै-र्वैयाकरणैरभ्युपगम्यत इति स्वाभाविकमेतत्।

लिङ्गस्य वस्तुधर्मत्वं स्वीकुर्वतामपि पक्षभेदाः सम्भवन्ति। लौकिकाः कांश्चित् पुंल्लिङ्गान् शब्दान् लोमादिपुंधर्मविशिष्टार्थाभिधायिनः कांश्चित् स्त्रीलिङ्गान् शब्दान् स्तनकेशादिस्त्रीधर्मविशिष्टार्थाभिधायिनः कांश्चिच्च नपुंसकलिङ्गान् शब्दानुभय-विधव्यञ्जनरहितार्थवाचकान् दृष्ट्वा स्तनकेशादिकमेव लिङ्गशब्दवाच्यं मन्यन्ते। इदं लौकिकलिङ्गलक्षणमेव भाष्यकारैरुक्तम्। तथा हि—

स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः।
उभयोरन्तरं यच्च तदभावे नपुंसकः।। (महाभाष्यम्-४।१।३)

भर्तृहरिणा चाप्युक्तम्—

स्तनकेशादिसम्बन्धो विशिष्टा वा स्तनादयः।
तदुपव्यञ्जना जातिर्गुणावस्था गुणास्तथा।।१।।
शब्दोपजनितोऽर्थात्मा शब्दसंस्कार इत्यपि।
लिङ्गानां लिङ्गतत्त्वज्ञैर्विकल्पाः सप्त कल्पिताः।।२।।

(लिङ्गसमुद्देश्यम्, वाक्यपदीये)

अनयोरयमर्थः— लोके यल्लिङ्गं स्त्रीपुंसादिव्यञ्जनं दृष्ट्वा 'अयं पुमान्', 'इयं स्त्री', 'इदं नपुंसकम्' इति प्रतीयते तदिह पक्षद्वयेनोक्तं स्तनकेशादिसम्बन्धो विशिष्टा वा स्तनादय इत्यादिना। प्रसवसंस्त्यानयोग्यस्तनकेशकलापप्रजननादिभिरुपव्यञ्जनैरवयविनः सम्बन्धः संयोगसमवायलक्षणो लिङ्गम्, तेन वा सम्बन्धेन विशिष्टाः स्तनादयो लिङ्गमिति पक्षद्वयम्। तदेवोक्तम्— 'स्तनकेशवती'इत्यादिना भाष्यकारेण। नपुंसके स्त्रीपुंसोभयव्यञ्जनाभावात् तदभावे व्यञ्जनवत्त्वसाम्याच्च नपुंसकत्वमपि लक्षितं भवति। तिङन्तानामव्ययानाञ्च तदभावात् तत्रातिव्याप्तिवारणाय नपुंसकत्वलक्षणे उभयोरन्तरमिति पदं दत्तम्। तथा च तदेवोक्तौ कुक्कुटमयूरावित्यत्रातिव्याप्तिरुभयलक्षणाक्रान्तत्वादतस्तदभाव इति पदमुपात्तम्। तथा च यत्र लिङ्गान्तराभावे सति लिङ्गत्वेन तुल्यजातीयं स्त्रीपुंसलिङ्गव्यतिरिक्तं लिङ्गान्तरं वर्तते, सोऽर्थो नपुंसकलिङ्गयुक्त इत्यर्थः। अत्र स्तनकेशसम्बन्धश्च व्यञ्जनान्तरसम्बन्धोपलक्षणम्। तेन प्रसवविशेषादिरूपो यथास्वं दृष्टो व्यञ्जनविशेषो विशिष्टा वा स्तनादय एवात्र गृह्यन्ते। एवं लोमसम्बन्धोऽपि पुरुषनिष्ठो मेढ्रादेः पुंव्यञ्जनस्योपलक्षणमिति। मेढ्रप्रसवादय एव पुंव्यञ्जनानि गृह्यन्ते। तेन —

लिङ्गात् स्त्रीपुंसयोर्ज्ञाने भ्रूकुंसे टाप् प्रसज्यते।
नत्वं खरकुटी पश्य खट्वावृक्षौ न सिध्यतः।।

इत्यस्मिन् चोद्ये पूर्वोक्तं चोद्यद्वयं नावतरति। लोके हि यो लिङ्गज्ञापकत्वेन दृष्टः स्तनकेशादिसम्बन्धस्तमनूद्यैव लिङ्गलक्षणस्य क्रियमाणत्वात्; किन्तूभयेऽस्मिन् दर्शनेऽचेतनानां स्तनादिरहितत्वाल्लक्षणस्याव्यापकत्वम्। तथा च खट्वावृक्षौ न सिध्यतः। अतस्तीर्थिकमतभेदेन पक्षान्तराणां पञ्चानामाश्रयणम्।

वैशेषिकाः सर्वत्राभिन्नाभिधानप्रत्ययोन्नीतसद्भावाज्जातिं मन्यन्त इति स्तनाद्युपव्यञ्जनाभिव्यक्तविशेषस्त्रीत्वपुंस्त्वनपुंसकत्वरूपा लिङ्गजातिरित्याहुः। सा चाचेतनेष्वपि यथायथं सत्त्वरजस्तमसां गुणानामुपचयापचयसाम्यावस्था-रूपोपव्यञ्जनाभिव्यक्ता विद्यत एव। ननु स्तनाद्युपव्यञ्जनाऽपि जातिः कथमचेतनेषु विद्यते, तत्र स्तनाद्यभावात्। अथ विलक्षणमेवोपव्यञ्जनं चेतनोपव्यञ्जनादचेतनेषु विद्यत इति ब्रूषे। तदा पूर्वोक्तं पक्षद्वयं स्तनकेशादिसम्बन्धो विशिष्टा वा स्तनादय इत्येवं रूपं नाचेतनेष्वव्यापकम्। तन्मतेऽपि विलक्षणोपव्यञ्जनस्य विद्यमानत्वाद् इति चेदत्रोच्यते — अयमर्थः, इयं व्यक्तिः, इदं वस्तु इति शब्दानां त्रिलिङ्गानां सर्वभावेष्वव्याहतप्रयोगात् सर्वत्र लिङ्गत्रययोगो लिङ्गत्रयाकारकप्रत्ययान्यथा-नुपपत्त्याऽनुमीयते। तत्र पूर्वोक्तपक्षद्वयमते परस्परविरोधिस्तनकेशमेढ्रादिरूपनियत-व्यञ्जनसम्बन्धरूपलिङ्गत्रययोगोऽशक्यः, अतस्तन्मतद्वयमनादृत्य जातिपक्षा-वलम्बनम्, स्त्रीत्वादिजातीनां हि सर्वगतत्वादेकाश्रयसमवायित्वं बह्वीनामपि उपपद्यते। इत्येवं जातिर्लिङ्गमिति तृतीयः पक्षः।

सांख्याः सत्त्वरजस्तमसां गुणानां सततपरिणामिनामुपचयापचयमध्य-स्थलक्षणा अवस्थाविशेषा यथायोगं पुंस्त्वादिलिङ्गमातिष्ठन्ते। इति चतुर्थः पक्षः।

अवस्थाविशिष्टा वा गुणा एव लिङ्गमिति सांख्यदर्शन एव पक्षान्तरम्। ते हि कार्यान्तरवत् स्त्रीत्वादिलिङ्गावभासकमपि प्रत्ययमुपजनयन्तो भवन्ति लिङ्गपदव्यपदेश्या इति पक्षोऽयं पञ्चमः।

एकस्यापि वस्तुनो घटादेः शब्दभेदेनार्थः। व्यक्तिः, वस्तु इति लिङ्गभेदस्य दर्शनाद् बहिरसन्नेव शशविषाणादिवद् विकल्पप्रत्ययगोचरो लिङ्गयोगः शब्दैरु-त्पादित इव बाह्यवस्तुनि अध्यास्त इति शब्दाभिधेयस्वभावं लिङ्गमिति षष्ठः पक्षः।

तटस्तटी तटमिति अभिन्नेनापि शब्देनाभिन्नं वस्तु त्रिलिङ्गं प्रत्यायत इति शब्दसंस्कारमात्रं लिङ्गम्। ननु अर्थधर्मतयावसायात्कथं लिङ्गं शब्दधर्मत्वेन शब्दसंस्कारनिमित्तत्वेनाश्रीयत इति चेत्, न, स्त्रियां पुंसि नपुंसक इत्येवं शब्दान्वाख्याने लिङ्गस्य निमित्तभावदर्शनात् कार्यकारणयोरभेदोपचारदर्शनात् शब्दधर्मत्वेन शब्दसंस्कारत्वेन व्यवहाराल्लिङ्गस्य। तदुक्तं भाष्ये—'तयोस्तु तत्कृतं दृष्ट्वा यथाऽऽकाशेन ज्योतिषः' इति। अस्या भाष्यपङ्क्तेराशयोऽयं यत्— तयोः स्त्रीत्वपुंस्त्वरूपयोर्लिङ्गयोर्निमित्तभूतयोः सतोस्तत्कृतं स्त्रीत्वपुंस्त्वरूपलिङ्गकार्यं टाबादिकं नत्वादिकञ्च दृष्ट्वा तेन कार्येण ते स्त्रीत्वपुंस्त्वरूपे लिङ्गे उपलक्ष्येते,

यथा आकाशेन ज्योतिष उपलक्षणं भवति। इहाकाशे रोहिणी इति। यद्वा, यथाऽऽकाशे प्रकाशेन ज्योतिषोऽनुमानं भवतीति।

अस्माद् भाष्याद् अर्थधर्मस्य, जात्यादिरूपस्य, गुणावस्थारूपस्य वा लिङ्गस्य शब्दान्वाख्याने **शब्दसंस्काररूपे निमित्तत्वं** लिङ्गकार्यस्य टाबादे-**र्लिङ्गोपलक्षकत्वं** प्रतीयत इति **सप्तपक्षाः प्रतिपादिताः**।

**इदानीं स्त्रीत्वादिजातिर्लिङ्गमिति पक्षो**ऽत्र विचार्यते। लौकिकस्य लिङ्गलक्षणस्य **स्तनकेशादिसम्बन्धो विशिष्टा** वा स्तनादय इत्युक्तस्या-**चेतनेष्वव्यापकत्वात्, गुणावस्था** गुणास्तथा इत्युक्तस्य च लिङ्गलक्षणस्य सांख्यशास्त्रप्रसिद्धत्वेऽपि ततोऽन्यत्राप्रसिद्धत्वात्, शब्दोपजनितोऽर्थात्मा इत्यस्य शशविषाणादिवद् बहिरसत्त्वेन, शब्दसंस्कार इत्यस्यापि च लिङ्गस्य शब्दसंस्कार-निमित्तत्वेऽपि शब्दसंस्काररूपत्वाभावात्।

तत्र जातिर्लिङ्गमिति पक्षं विवृण्वता भर्तृहरिणोक्तम्—

'तिस्रो जातय एवैताः केषाञ्चित्समवस्थिताः।
अविरुद्धा विरुद्धाभिर्गोमहिष्यादिजातिभिः,।। (वा.प., लि.समु. ४)

जातिर्नाम सर्वत्राभिन्नाभिधानप्रत्ययोन्नेया। भवति च शब्देभ्य स्त्रीत्वाद्यनुरक्ता प्रतीतिरिति स्त्रीत्वादिजातिरुन्नीयते। इयं स्त्रीत्वादिजातिर्गोत्वादिभिरेकस्मिन्नर्थेऽ-वस्थातुं शक्यते। हस्तिन्यां वडवायाञ्च स्त्रीत्वबुद्धिः समानेति लिङ्गजातेरन्याभिः सहानवस्थानलक्षणविरोधवतीभिर्गोत्वाश्वत्वादिभिर्जातिभिः सहैकार्थसमवायोऽ-भ्युपेयते। जातीनाञ्च सर्वगतत्वात् तिसृणामपि लिङ्गजातीनामेकाश्रयसमवायित्वं नानुपपन्नं येनैकस्मिन्नेव वस्तुन्यर्थव्यक्तिवस्तूनां भिन्नलिङ्गकानां शब्दानां तटस्तटी तटमिति लिङ्गभेदेनैकस्यैव शब्दस्य वा प्रयोगः सूपपादो भवति।

ननु जातिलिङ्गमित्यस्यान्यस्य वा कस्यचिल्लौकिकस्य लिङ्गस्य व्यक्तेषु चेतनेषु स्फुटानां स्तनाद्यवयवानां भवतु लिङ्गसत्त्वावगतिः; परन्त्वन्येष्व-व्यक्तेष्वचेतनेषु तादृशानामवयवानामभावात् कथं लिङ्गावगतिः, न च मृगतृष्णासु सलिलवन्निर्भासो लिङ्गस्य यथोक्तं भाष्यकारेण भर्तृहरिकारिकात्रय-(लिङ्गसमु. ८ तः १० यावत्)गोचरीभूतया कारिकया—

'असत्तु मृगतृष्णावद् गन्धर्वनगरं यथा।
आदित्यगतिवत् सन्न वस्त्रान्तर्हितवन्न तत्'।।

इति वाच्यम्, सदा दृष्टस्य लिङ्गस्यैवं सत्त्वाभ्युपगतौ शशविषाणादीनामपि क्वचित् सत्त्वाभ्युपगमादिति चेत्, न, टाबादिरूपकार्यं दृष्ट्वा सर्वत्राचेतनेष्वपि खट्वादिषु लिङ्गसत्त्वाभ्युपगमात् सिद्धेः। ननु लिङ्गे सिद्धे टाबादिकम्, टाबादौ च सति लिङ्गसत्त्वसिद्धिरित्यन्योन्याश्रय इति चेत्, न, सिद्धस्यैवार्थस्य शब्देनानुवादात्। तथा हि खट्वादौ सिद्धस्यैव स्त्रीत्वादिलिङ्गस्य टाबादिभिरनुवाद इति साध्यसिद्धेरनुमानप्रतिबन्धात्। अनुमानन्तु अतत्त्वज्ञानामल्पमेधसामिति ध्येयम्।

**भाष्यकारमतम्**

लिङ्गं शब्दधर्म इति पक्षे एवमेव लौकिकलक्षणमिव जातिपक्षोऽपि न सूपपाद्यः। अतो लिङ्गविषये वैयाकरणैः कश्चित् स्वकृतान्तः आस्थेयः। तत्र वैयाकरणशिरोमणिभिः कात्यायनमुनिभिश्च प्रतिपादित एष सिद्धान्तः—

'संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्ततः।
संस्त्याने स्त्यातेर्ड्रट् स्त्री सूते सप्रसवे पुमान्'।।

सर्वाश्च पुनर्मूर्त्तय एवमात्मिकाः संस्त्यानप्रसवगुणा इति 'स्त्रियाम्' (४।१।३) सूत्रे भाष्यकारैश्चेदमल्पकायं लक्षणं स्वकीयैरनुपमैर्नृत्यत्पदैर्वाक्यैश्चोपबृंहितम्। एवं व्यवस्थापितस्यैव लक्षणस्य गूढतत्त्वावबोधने आनागेशं सर्वैरपि भर्तृहरिहेलाराजकैयटप्रभृतिभिर्महावैयाकरणैः प्रयत्नः कृतः। दृश्यते च तेषां प्रयत्नस्य फलं तद्रचितेषु ग्रन्थेषु। लक्षणस्यायमर्थः— संस्त्यानमपचयः। प्रसव उपचयः। एतौ संस्त्यानप्रसवौ स्त्रीत्वरूपं पुंस्त्वरूपञ्च यथाक्रमं लिङ्गमास्थेयौ। अथ च संस्त्यानं संहननं प्रतिलयस्तिरोभावो रूपरसादीनां सत्त्वादिमयानां गुणानां सत्त्वरजस्तमोविकाराणामपचयः स्त्रीत्वरूपः, स्त्रीलिङ्गं शास्त्रे प्रसिद्धम्। यतः संस्त्याने अपचयरूपेऽर्थे संस्त्यायतेर्धातोर्भवि ड्रट्प्रत्यये 'स्त्री' इति भवति। प्रसव उपचयरूपेऽर्थे सूतेर्धातोर्भवि डुम्सुन्प्रत्यये सकारस्य पकारादेशे सति 'पुमान्' इति भवति। सर्वाश्च पुनर्मूर्त्तयः = पदार्था एवमात्मिकाः = आविर्भावतिरोभावात्मिकाः शब्दस्पर्शरूपरसगन्धवत्यः। तथा चाचेतनेष्वपि खट्वावृक्षादिषु लिङ्गसिद्धिः। संस्त्यानप्रसवरूपयोर्लिङ्गयोः सर्वत्र व्याप्तेरुपादानात्। तदेवाह भाष्यकारः— 'न शक्यं वैयाकरणैर्लौकिकं लिङ्गमास्थातुम्। अवश्यं कश्चित्स्वकृतान्त आस्थेयः' इति। उपचयापचयात्मकोभयधर्मसाम्यावस्थारूपा स्थितिस्तु नपुंसकलिङ्गमर्थादुक्तं भवति। तथा हि भाष्यकारैः 'उभयोरविवक्षायां नपुंसकम्' इति वदद्भिरत्यल्पमुक्तमित्यर्वाचीनैस्तद्रहस्योद्घाटने प्रयत्नः कृतः। 'अविवक्षातः साम्यं स्थितिरौत्सुक्य-

निवृत्तिरपरार्थत्वमङ्गाङ्गिभावनिवृत्तिः कैवल्यमिति नपुंसकत्वम्' इति बहुभिः शब्दैः सङ्ग्रहकारेण भाष्यकाराशयाभिप्रायो वर्णितः। तन्मध्यादितरवैलक्षण्येन नपुंसकस्वरूपावेदकत्वात् स्थितिशब्दं गृहीत्वा तस्य चतुर्धा व्याख्याऽकारि तत्रभवता भर्तृहरिणा—

'प्रवृत्तेरेकरूपत्वं साम्यं वा स्थितिरुच्यते।
आविर्भावतिरोभावप्रवृत्त्या वावतिष्ठते।।
गुणा इत्येव बुद्धेर्वा निमित्तत्वं स्थितिर्मता।
स्थितेश्च सर्वलिङ्गानां सर्वनामत्वमुच्यते'।। इति वदता।

(वा.प., लिङ्गस. १७-१८)

उपचयापचयप्रवाहयोर्ये वृद्ध्यपायाख्ये प्रवृत्तौ तयोरभेदाध्यवसायः स्थितिरेकः प्रकृतः। आविर्भावतिरोभावयोः परिणामत्वं साम्यं तदेव च स्थितिरिति द्वितीयः प्रकारः। कस्याश्चित् कलायास्तिरोधानानन्तरं यदा कलान्तराविर्भावस्तदा तिरोधानस्यापर्यवसितत्वात् स्थितिरेवावसीयत इति तृतीयः प्रकारः। वैश्वरूपमापद्यमाना गुणाः सर्वास्ववस्थासु 'इमे गुणाः' इत्यन्वयिप्रत्ययस्य हेतवो भवन्ति। एवञ्च स्थितिलिङ्गतामापादयन्ति। अयमेव चतुर्थः प्रकारः। एवं प्रकारचतुष्टयेनावगता स्थितिरेव नपुंसकलिङ्गं वस्तुधर्मस्तद्वाचकं च शब्दगतं नपुंसकलिङ्गमिति। ननु भवतु रूपादिसमुदायात्मनो वस्तुन उपचयापचय-स्थितिरूपधर्मत्रययोगः, रूपम्, रसः, शब्द इत्यादिव्यपदेशस्तु कथम्, रूपाद्यन्तराभावात् केवलानां तेषामुपरि न हि कस्यचिदाविर्भावोऽस्ति येन लिङ्गयोगः स्यादिति चेत्, न, सत्त्वरजस्तमोमयेषु रूपादिष्वपि पुरुषार्थं प्रतिक्षणं परिणामिनां सत्त्वादीनां गुणानां भिद्यमानत्वादुपचयापचयसाम्यावस्थाया अक्षतत्वात्। एवं लिङ्गत्रययोगः सम्पादनीयः। यथोक्तं शिष्टैः —

'कलानां पृथगर्थानां प्रतिभेदः क्षणे क्षणे।
भिद्यते सर्वभावेषु सौक्ष्म्यात्तु न विभाव्यते'।। इति।

भाष्येऽपि चोक्तम्— 'नेह कश्चित् स्वस्मिन्नात्मनि मुहूर्तमप्यवतिष्ठते, वर्धते यावदनेन वर्धितव्यम्, अपायेन वा युज्यते' इति।

तथा चानेनेदमायाति यदस्मिन् लक्षणविषंये वैयाकरणाः सांख्यमतानुसारिणः। सांख्या निखिलमिदं जगत् सत्त्वरजस्तमोरूपत्रिगुणात्मिकायाः प्रकृतेः

परिणामं मन्यन्ते। एते गुणा यावदनारब्धकार्यास्तावदप्रत्यक्षाः सन्तो न शब्दव्यवहारगोचराः। तत्परिणामभूता एव शब्दस्पर्शरूपरसगन्धाः। त्रिगुणात्मकाः शब्दादयः पृथिव्याद्यात्मना परिणमन्ते। सत्त्वादय इव शब्दादयोऽपि सततपरिणामिनो भवन्ति। अत एवाविर्भावतिरोभावौ तेषां नित्यधर्मौ। सर्वेषां भावानां शब्दादिमयत्वात्तेऽप्याविर्भावतिरोभावधर्माणो भवन्ति। आविर्भाव-तिरोभावावेव प्रसवसंस्त्यानशब्दाभ्यां व्यवह्रियेते वार्तिके भाष्ये च। 'वर्द्धते यावदनेन वर्धितव्यम्' इति वदता भगवता भाष्यकारेण वृद्धिरेव प्रसवापचयापरपर्यायोऽपाय एव संस्त्यानमिति च सूचितम्। प्रकृतिश्च पुमान् इति घोषयता च वृद्धिप्रवृत्तिशब्दयोः पर्यायत्वमपि प्रदर्शितम्। एवं पदार्थानां वृद्धिरूपो धर्म एव पुंल्लिङ्गमपचयरूपश्च धर्मः स्त्रीलिङ्गमिति लक्षणं पर्यवसितम्।

ननु आविर्भावतिरोभावस्थितिरूपाणां लिङ्गधर्माणां सर्वेषु वस्तुषु सम्भवे सति तद्वाचकशब्दानां कथं लिङ्गव्यवस्थेति चेत्, न, विवक्षातततत्सिद्धेः। विवक्षा चात्र न प्रयोक्तृस्वेच्छारूपाऽवगन्तव्या, प्रयोक्तृभेदेन लिङ्गभेदापत्तेः; किन्तु लोक-व्यवहारानुवादिनी विवक्षाऽत्र ग्राह्या। निरावरणख्यातयः शिष्टा एव च लोकः। तैर्यल्लिङ्गस्य शब्दस्य धर्मसाधनत्वमवगतं तस्यैव साधुत्वमभ्युपगतम्। अत एवोक्तं 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति शिष्टैः। शब्दस्यायं स्वभावो यद् वस्तुनि बहुषु धर्मेषु सत्स्वपि कञ्चिदेवाश्रित्य प्रवर्तते। यथा शरावादिकरणेऽपि कुम्भकरणनिमित्तः कुम्भकारशब्दः। एवं सर्वेषु लिङ्गधर्मेषु वस्तुनि सत्स्वपि कञ्चिदेवाश्रित्य शब्दस्तत्र प्रवर्तते। शब्दशक्तेरेवेदं वैचित्र्यम्। शिष्टव्यवहारोऽस्य व्यवहारस्य ज्ञापको न प्रवर्तयिता। तथैव शिष्टैर्लिङ्गत्रययुक्तानां शब्दानामन्यथापि विभागो कृतो बुभुत्सुसुखबोधनाय। तथा ह्युक्तं वाक्यपदीये—

'उपादानविकल्पाश्च लिङ्गानां सप्त वर्णिताः।
विकल्पसन्नियोगाभ्यां ये शब्देषु व्यवस्थिता'।। (वा.प., लिङ्गस.३)

अस्यायमर्थः— तत्तद्विलक्षणशक्तिभिः शब्दैर्लिङ्गानामर्थविशेषणत्वेन यद् ग्रहणमुपादानं तस्य विकल्पाः = भेदा अपि सप्त। सर्वेषु पदार्थेषु सम्भवतामपि गुणावस्थादिरूपाणां लिङ्गानां लिङ्गाभिव्यञ्जकशब्दशक्तिप्रतिनियमाद्धि असाङ्कर्यम्। ते च विकल्पनियमाभ्यां लिङ्गानुशासनेषु कोशेषु च वर्णिताः। तथा हि— लिङ्गानां पुंस्त्रीनपुंसकरूपाणां शब्दैर्विकल्पेन प्रत्यायने चत्वारो भेदाः। केचित् पुंनपुंसकलिङ्ग-मात्रविषयाः, यथा—ध्वजः, ध्वजम्; पद्मः, पद्ममित्यादयः। केचित् स्त्रीनपुंसक-

मात्रविषयाः, यथा—औचित्यम्, औचिती; चातुर्यम्, चातुरी इत्यादयः। अन्ये स्त्रीपुंससाधारणाः, यथा—सूनुः, इषुः, तनयः, तनया, घटः, घटी, कुम्भः, कुम्भी इत्यादयः। अपरे त्रिलिङ्गाः, यथा— दरः, दरी, दरमित्यादयः। सन्नियोगो नियमस्तेन त्रयो लिङ्गोपादानविकल्पाः। यथा—वृक्षादयः पुंस्येव नियताः। अब्ज्वालादयः स्त्रियामेव। शिरो वासः कनकादयो नपुंसक एवेति सर्वयोगे विकल्पनियमाभ्यां सप्तलिङ्गोपादानविकल्पाः सम्भवन्ति।

**निष्कर्षः**

अथास्मिन्विषये लिङ्गस्य किं लक्षणं भर्तृहर्यभिप्रेतमिति विचारपदमधिरूढे प्रश्ने कथितुं शक्यते यद् वाक्यपदीये लिङ्गसमुद्देश्ये सिंहावलोकनन्यायेन 'शब्दसंस्कारो लिङ्गम्' इति लक्षणं भूयः परिष्कुर्वतो भर्तृहरेरिदमेव लक्षणमभिप्रेतमिति। तथा ह्युक्तं तेन—

'इदं वेयमयं वेति शब्दसंस्कारमानकम्।
निमित्तदर्शनादर्थे कैश्चित्सर्वत्र वर्ण्यते'।। इति। (वा.प., लि.स.३०)

अस्यायं भावः—'इदं वस्तु', 'इयं व्यक्तिः', 'अयमर्थः' इति सर्वत्र वस्तुमात्रे लिङ्गत्रयव्यवहारदर्शनेन त्रिलिङ्गानां तटादिशब्दानां बहिर्विद्यमानलिङ्गरूप-निमित्तानपेक्षया कल्पितेनापि आन्तरेण लिङ्गेन शब्दप्रवृत्तौ निमित्तीकृतेन तत्तदर्थे प्रवृत्तिर्न व्याहन्यत इति। अस्माद्धेतोः शब्दान्वाख्याने शब्दप्रवृत्तौ च लिङ्गरूपनिमित्तदर्शनात् शब्दान्वाख्यानमात्रं लिङ्गमभ्युपगन्तव्यम्। वस्तुतस्तु शब्दान्वाख्यान-निमित्तेऽङ्गीक्रियमाणे 'राहोः शिरः' इत्यादौ भेदे जायमाना षष्ठी-विभक्तिः कथं स्यात्, राहुशिरसोर्वास्तवस्य व्यतिरेकाभावात्। तस्माद्बहिरसतोऽपि लिङ्गस्य बाह्यत्वेनावसितस्य शब्दान्वाख्याननिमित्तत्वम्। अत एव 'टाबृचि' (पा.सू. ४।१।९) इति सूत्रे ऋचोऽभिधेयत्वेनोपादानं युक्तम्। स्वीयरूपस्य लिङ्गस्य त्वन्वाख्याननिमित्तत्वेन।

'शब्दसंस्कारो लिङ्गमि'ति दर्शने 'शब्दोपजनितोऽर्थात्मा' इत्यस्माद् दर्शनात् 'सर्वत्रैवार्थे शब्दादवधृतस्य लिङ्गस्य शब्दसाधुत्वनिमित्तभावः' इत्ययं विशेषः। तत्र दर्शने तु चेतने भूयसा दृष्टस्य लिङ्गस्यान्यत्राचेतने समारोपोऽभिमत इति दर्शनयोरनयोर्भेदः।

ननु बहिरगृह्यमाणस्य तत्त्वादेवासतो लिङ्गस्य कथं शब्दसंस्कार-निमित्तत्वमिति चेत्, न, अवच्छेदकस्य ग्राह्यत्वनियमाभावात्। यथाऽदृष्टमेवेन्द्रियं

घटाद्यवच्छेदनिमित्तं दृष्टम्, तथा लिङ्गमपि अर्थावच्छेदत्वेन बहिरगृहीतमपि शब्दसंस्कारे निमित्तभावं भजत इति युज्यते। तथा चायं प्रयोगः— लिङ्गम-ग्राह्यत्वेऽपि शब्दसंस्काररूपस्वकार्यनिमित्तम्, अवच्छेदनिमित्तत्वाद् इन्द्रियादिवदिति। हेलाराजास्तु यथाभाष्यं गुणावस्थारूपं लिङ्गमिति सिद्धान्तयन्ति। यथा ह्युक्तं तैः— गुणधर्मरूपे हि लिङ्गे धर्मशून्यस्य सर्वथैवान्यव्यवहार्यत्वादवस्तुष्वपि वस्तुत्वा-भिमानाल्लौकिकानां लोकसम्प्रत्ययसमारूढस्यैव शब्दार्थत्वादात्मादीनां रूपादीनां तमश्छायाप्रभृतीनाञ्च सर्वेषां लिङ्गयोगः समुपपन्नः। अभावशशविषाणादीनामपि वस्तुभूतोत्तरपदार्थाश्रयं लिङ्गं न चान्यथाभावोपाश्रयत्वादभावो व्यवह्रियत इति व्यापकमिदं संस्त्यानप्रसवौ स्थितिश्चेति लिङ्गत्रयं सिद्धान्तितमवगन्तव्यमिति।

**लिङ्गं शब्दनिष्ठमर्थनिष्ठं वा**

अथेदं लिङ्गं शब्दनिष्ठमर्थनिष्ठं वेति समीक्ष्यते। तत्र लिङ्गं शब्दनिष्ठो धर्मविशेषः, तमेव भिन्नं धर्ममादाय तटादिशब्दा भिद्यन्ते। केषाञ्चिच्छब्दानामनेक-लिङ्गत्वव्यवहारस्तु समानानुपूर्वीकत्वेन शब्दानामभेदारोपादिति वैयाकरणमूर्धन्याः श्रीकौण्डभट्टप्रभृतयः[1]।

अत्र च 'एकार्थे शब्दान्यत्वाद् दृष्टं लिङ्गान्यत्वम्' इति भाष्यमपि[2] मूलम्। तथा हि— एकार्थे शब्दान्यत्वादिति हेतुना लिङ्गान्यत्वं लिङ्गभेदः साध्यतेऽनेन भाष्यवचनेन। तत्रोद्देश्यबोधकं पदं नास्तीति कृत्वा योगस्य तस्याध्याहारः कार्यः। तत्र च शब्दपदमेवाध्याहर्त्तव्यम्। तादृशस्य हेतोस्तत्र स्वरूपेण वर्तमानात्, शब्दशास्त्रे तस्यैव प्राधान्याच्च।

शाब्दिकशिरोमणयो नागोजिभट्टास्तु लिङ्गस्यार्थनिष्ठत्वं केवलान्वयित्वञ्च प्रस्तावयन्ति[3]। तेषामयमाशयः—उक्तभाष्ये एकार्थ इति पक्षनिर्देशः, तत्रैव लिङ्गान्यत्वमिति साध्यम्, शब्दान्यत्वमेव हेतुः। अतश्चैकार्थे लिङ्गान्यत्वं दृष्टम्, शब्दान्यत्वादिति योजना कर्त्तव्या। पुष्पः, तारकाः, नक्षत्रम् इति च दृष्टान्तः। अत्र पक्षे शब्दान्यत्वादित्यस्य विभिन्नशब्दादित्यर्थः। शक्तिरूपः सम्बन्धो हेतुतानियामको बोद्धव्यः। 'इदं वस्तु', 'अयमर्थः', 'इयं व्यक्तिः' इति त्रिविधव्यवहारस्य पदार्थमात्रे

१. वै.भू.सा., नामार्थनिर्णयः।

२. महाभाष्यम्-४।१।९२-वा.६।

३. ल.श.शे. स्त्रीप्र., स्त्रियामिति सूत्रम्।

कर्त्तुं शक्यत्वेनास्य केवलान्वयित्वमपि स्फुटमेव प्रतीयते। व्यापकत्वादयमेव पक्षः समुचितः प्रतिभाति।

लिङ्गमपि प्रातिपदिकार्थः। तत्र नपुंसकलिङ्गे वर्तमानं यदजन्तं प्रातिपदिकं तस्यान्त्याचो ह्रस्व इत्यर्थकं 'ह्रस्वो नपुंसके प्रातिपदिकस्य' (पा.सू. १।२।४७) इति सूत्रम्। 'तस्माच्छसो नः पुंसि' (पा.सू. ६।१।१०३) इति सूत्रञ्च लिङ्गस्य तदर्थत्वे प्रमाणम्। न चान्वयव्यतिरेकसहचाराभ्यां विभक्तेरेव तद्वाच्यं स्यादिति शङ्क्यम्, 'लिड्, धुग्, रमा, वारि' इत्यादौ विभक्त्यभावेऽपि तद्बोधात्, प्रातिपदिकेनैव तयोः सहचारयोर्योजनीयत्वादिति शम्।



# मानवजीवने ग्रहाणां प्रभावः

**डॉ. कृष्णचन्द्रद्विवेदी**

आचार्योऽध्यक्षचरश्च, ज्योतिषविभागस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी



विश्वसंरचनायाः सर्वाणि द्रव्याणि, सर्वाणि तत्त्वानि, सर्वे पदार्थाश्च ब्रह्माण्डरूपाकाशे घनीभूता यत्र तत्र सर्वत्र विस्तरिताः सन्ति। परस्परं गुरुत्वाकर्षणेन संहननेन च गतिशीलाः सन्तः शीतगैस इव व्याप्तास्तिष्ठन्ति। प्रकृतेः स्वाभाविकेन क्षोभकारणेन गुरुत्वाकर्षणे तीव्रगतिशीलता भवति। अनया सृष्टिपदार्थानां खण्डानि गतिशीलानि भूत्वा इतस्ततो नीहारिकासु, आकाशगङ्गायाः सर्पिलनाभ्युन्मुखेषु च ह्रस्वाकृतिकखण्डानि स्वकीये केन्द्रे भ्रमन्ति, बृहदाकारकाणि खण्डानि परितो भ्रमन्ति। बृहद्भागात्मकः सृष्टितत्त्वपदार्थः स्वकीये केन्द्रबिन्दौ सततं भ्रमति। स्वकीये केन्द्रे सततं भ्रमणशीलोऽयं 'पदार्थपुञ्जः' तारा इति नाम्ना प्रसिद्धोऽस्ति। अमुं परितो भ्रमणशीलस्य तत्त्वपदार्थस्य खण्डः 'ग्रह'-नाम्ना प्रसिद्ध इति।

ब्रह्माण्डस्य नीहारिकाषु मन्दाकिनीसु (आकाशगङ्गासु) च व्याप्ताः सृष्टिरचनाया घनीभूतशीतगैसनामधारिण एत एव 'पदार्थाः' सन्ति।

रात्रौ निरभ्राकाशे उत्तरत दक्षिणदिशि एका स्वच्छधूमिलपट्टिका सहजरूपेण अस्माकमक्ष्णोर्दृष्टिपथमायाति। इयमेव 'पट्टिका' 'आकाशगङ्गा' इति कथ्यते।

देवयानीनीहारिकाक्षेत्रे सूर्योऽस्माकं सबलतारा अस्ति। अनेन सूर्येणैवायं विस्तृतः सौरपरिवारो भ्रमणशीलोऽस्ति। इयं पृथिवी अपि, यस्योपरि अस्माकमावासः, सौरपरिवारस्य एका प्रमुखसदस्या अस्ति। पृथिवीं परितः भ्रमणशील उपग्रहः 'चन्द्रः' अस्ति।

यथा सामान्यरूपेणैकस्य दीपकस्य लवसमीपे दूरे च स्थित्वा उष्णतायाः प्रकाशस्य च प्रभावं प्रत्यक्षरूपेण सर्वे प्राणिनोऽनुभवन्ति, तथैव प्रकाशमहापुञ्जरूपेण सूर्येण प्रत्यक्षतः प्रकाशस्योष्णतायाश्चानुभवं सर्वे प्राणिनः कुर्वन्ति। दिनानि भवन्ति, ताराभिः पूरिताः स्वर्णमयीरात्र्य आयान्ति, ऋतूनामागमनं परिवर्तनञ्च भवति, प्राणिमात्रेष्वस्य प्रभावो दृश्यते। इत्थमेव ग्रहाणाम्, उपग्रहाणाम्, ताराप्रकाशरश्मिणाञ्च प्रभावः प्राणिमात्रेषु दृश्यते। एतेषां ग्रहोपग्रहप्रकाशतरङ्गतत्त्वानां प्रचुरप्रभावो भवति। यथा— कदाचित् सूर्यस्य उष्णता सह्या भवति, कदाचिदसह्या भवति। स्थानभेदेन सुदूरतया च न्यूनाधिकप्रभाव-कारिणो भवन्ति। आकाशीय-गोलीय-ज्यामितीयक्षेत्रानुसारमेषु परिवर्तनमपि भवति। यदा कदा पूर्णसूर्यग्रहणस्य पूर्णचन्द्रग्रहणस्य च चामत्कारिकः प्रभावो दृश्यते। अत एव केनाप्यवरोधकयन्त्रेण विना ग्रहणस्य दर्शनं सर्वेषां कृते हानिकारकं भवति।

आधुनिकखगोलविज्ञानस्य मतमिदमद्यतनवैज्ञानिकानां मतमस्ति। एते दूरवीक्षणयन्त्राणां सततमध्ययनेन तेषां प्रयोगेण चावबोधयन्ति। प्रमुखवैज्ञानिकः फ्रेडहायलनामा अन्ये च वैज्ञानिका अहर्निशमस्मिन्नन्वेषणे संलग्नाः सन्ति। 'अन्येषु ग्रहपिण्डेषु जीवस्य सत्ता अस्ति' इत्येतादृशीं मान्यतां स्वीकर्तुं पुष्टप्रमाणानां सङ्कलनं कुर्वन्ति।

अत एवाधुनिकखगोलविज्ञानमपि 'तारा-भौतिकी' इत्यस्य नवं सिद्धान्तमिदं सहजतया स्वीकरोति यद् मानवजीवनोपरि ग्रहोपग्रहताराणां प्रभावो भवति, अग्रेऽपि भविष्यति।

अयं भारतदेशः ऋषिषु, महर्षिषु, मुनिषु, ईश्वरसत्तायां वेदवाक्येषु च आस्थावानस्ति, इमान् दृढं विश्वसिति च। वेदा अपौरुषेया ईश्वरोक्ता मन्यन्ते। एते 'श्रुति' इति नाम्नाऽपि प्रसिद्धाः। ऋषयो मुनयश्च आध्यात्मिकशक्तिपुञ्जमाश्रित्य सततं ब्रह्माण्डस्यान्वेषणं कुर्वन्तः सामान्यजनस्य कृते इदं घोषितवन्तो यत् तत्कालीनवेधयन्त्रेभ्यः प्राकृतिकसंघटनाभिश्च आकाशीयपिण्डानां प्रभावो मानवजीवनोपरि निखिलचराचरोपरि च दृश्यत इति। स्वकीयान्वेषणबलेन भारतीयाः, प्रमुखानां सप्तग्राहाणाम्, सूर्य-चन्द्र-भौम-बुध-बृहस्पति-शुक्र-शनीत्येतेषाम्, छायाग्रहयो राहु-केतु इत्यनयोः, नक्षत्राणाम्, नीहारिकाणाम्, आकाशगङ्गानाञ्च प्रभावं सहजरूपेणोपस्थापितवन्तः। वेदैः प्रमाणितमस्ति यत् प्राणिमात्रस्य चराचरस्य सृष्टिः सूर्येणैवास्ति। 'सूर्य आत्मा जगतस्तस्थुषश्च' इत्यनेनाधिकं किं प्रमाणं भविष्यति।

मानवस्य गर्भाधानकालादारभ्यावतारकालं यावत् सर्वेषां ग्रहाणां प्रकृत्यनुसारं तास्ताः शक्तय उद्घोषिताः सन्ति। यथा—

आत्मा रविः शीतकरस्तु चेतः सत्त्वं धराजः शशिजोऽथ वाणी।
गुरुः सितो ज्ञानमुखो मदश्च राहुः शनिः कालनरस्य दुःखम्।।

आत्मादयो गगनगैर्बलिभिर्बलवत्तराः।
दुर्बलैर्दुर्बलास्ते तु विपरीतं शनेर्फलम्।।

इत्थमेव ग्रहाणां प्रबलनिर्बलभावेन मानवस्य कृते किं वा प्राणिमात्रस्य कृते उद्घोषणा क्रियते। यथा —

राजा रविः शशिधरस्तु बुधः कुमारः
सेनापतिः क्षितिसुतः सचिवौ सितेज्यौ।
भृत्यस्तयोश्च रविजः सबला नराणां
कुर्वन्ति जन्मसमये निजमेव रूपम्।।

इति वचनानुसारं तत्तद् ग्रहाणां स्वभावप्रकृत्यनुरूपमेव यस्मिन् कस्मिन्नपि भूभागे समाजे वा समुत्पन्नस्य मानवस्य स्वभावो भविष्यति। मानवो उक्तवचनानुरूपमेव जीवनमापनं करिष्यति। प्राणिमात्रस्यानुभूतिरीदृशी भविष्यति।

जन्मानुसारमेव प्रत्यक्षमनुभवं कर्तुं शक्यते। अथवा अवतरितस्य जातकस्य भविष्यविषये इत्थं वक्तुं शक्यते यदयं जातकः प्रकृत्या मधुरः [illegible] च्छृङ्खलो वा भविष्यति। अमुकग्रहस्य रूपरङ्गवद् भविष्यतीति। यतो [illegible] ऋषयो मुनयश्च दीर्घायुष्यं प्राप्य सततं गवेषणयाऽनुभवेन च ग्रहाणां [illegible] प्रकृत्या, अणु-परमाणूनाञ्च सबलनिर्बलतया भौतिकसुखसाधनविषये ज्ञापितवन्तः, अस्य ज्ञापनस्यानुभवं स्वयमेव कर्तुं शक्यते। इत्थमाचार्याणां वचनानि सन्ति—

गुरुबुधशुक्राः सौम्याः सौरिकुजार्का निसर्गतः पापाः।
शशिजोऽशुभसंयुक्तः क्षीणश्च निशाकरः पापः।।

ताम्रसितारुणहरितकपीतविचित्रासिता इनादीनाम्।
पावकजलगुहकेशवशक्रशचीवेधसः पतयः।।

इत्थं जन्मसमये सूर्यचन्द्रग्रहयोः प्रबलस्थितौ सत्यां जातकस्य जीवनं स्वरूपं चाधोलिखितानुसारं भविष्यति—

(क) सूर्यस्य स्थितौ —

स्वल्पाकुञ्चितमूर्धजः पटुमतिर्मुख्यस्वरूपस्वनो
नात्युच्चो मधुपिङ्गचारुनयनः शूरः प्रचण्डः स्थिरः।
रक्तश्यामतनुर्निगूढचरणः पित्तास्थिसारो महान्
गम्भीरश्चतुरस्त्रकः पृथुकरः कौसुम्भवासा रविः।।

(ख) चन्द्रस्य स्थितौ—

सौम्यः कान्तविलोचनो मधुरवामौरः कृशाङ्गो युवा
प्रांशुः सूक्ष्मनिकुञ्चितासितकचः प्राज्ञो मृदुः सात्त्विकः।
चारुर्वातकफात्मकः प्रियसखो रक्तैकसारो घृणी
वृद्धस्त्रीषु रतश्चलोऽतिसुभगः शुभ्राम्बरश्चन्द्रमा।।

इत्थमेव सर्वेषां ग्रहाणां गुणस्वभावयोः सहजप्रभावः प्राणिमात्रेषु दृश्यते। अनेन प्रकारेण चन्द्रस्य नक्षत्राणां च संयोगेन वनौषधीषु पूर्णविकास-रससञ्चार-माधुर्याणाञ्च पुष्टिर्भवति, जीवनदायिनी शक्तिश्च परिलक्ष्यते।

उक्तञ्च— 'औषधीनां पतये नमः'।

अतिप्राचीनकालादेव भारतीयवायुवृष्टिविज्ञानस्य सफलान्वेषणं प्रचलति अद्यापि विज्ञानमिदं कृषकाणां कृते यात्रीजलपोतानां आकाशगामिवायुयानानां च निर्विघ्नयात्रासम्पादनाय, जनसाधारणस्य कृते ऋतुपरिवर्तनज्ञानाय च बहुव्यय-साध्यानामाधुनिकवैज्ञानिकयन्त्राणामन्वेषणापेक्षया सत्यं प्रामाणिकं च भवति।

भूगर्भीयखनिजपदार्थानां निर्माणेषु ग्रहमण्डलस्य सञ्चलनस्य प्रभावो दृश्यते। यथा— प्रायेण प्रतिमासं प्रतिदिनं समुद्रस्य प्राकृतिकगतौ समुत्पन्नो जलान्दोलनः (ज्वार-भाटा) चन्द्रमसः पृथिव्याः सूर्यस्य च प्रभावेण दृश्यते।

आकाशीयप्राकृतिकघटनासु भूकम्पाद्यतिवृष्ट्यनावृष्टि-समुद्रीतूफान-तूफानीहिमपातादिदुर्घटनानां कारणं ग्रहजनितप्रभाव एवास्ति।

अद्य सर्वस्मिन् विश्वे समुपस्थितं राजनैतिकं सामाजिकं परिवर्तनम्, राष्ट्राध्यक्षाणां परिवर्तनम्, पदपरिवर्तन-जनाक्रोश-युद्ध-धन-जनापहरण-हानि-प्रभृतयो घटनाश्च ग्रहोपग्रहनक्षत्रमण्डलस्य संयोगसङ्क्रमणदुर्योगकारणादेव भवन्ति। अनेन कारणेनैव सर्वेषु मानवेषु परस्परमसौहार्दं परिलक्ष्यते।

भारतस्यास्य राष्ट्रसञ्चालकानामिदं कर्त्तव्यमस्ति यत् ते पृथक् पृथक् छद्मवेशेण, अनधिकृतरूपेण वा फलितज्योतिर्विदां तान्त्रिकाणां च सम्पर्कं परित्यज्य प्रत्यक्षरूपेण देशस्योच्चसंस्थानानां माध्यमेन भारतीयखगोलविद्भिः सम्पर्कं विधाय राष्ट्रस्य प्रदेशस्य समाजस्य च भविष्यज्ञानं पूर्वं कुर्युः। अनेन प्रत्यक्षस्य सत्यस्य च कल्याणं भविष्यति।

ज्यौतिषशास्त्रमिदं विश्वमञ्चोपरि एकं सबलं प्रामाणिकं तर्कयुक्तं वैज्ञानिकं शास्त्रमस्ति। अस्य शास्त्रस्य विकासेन प्रत्यक्ष-सत्यव्यवहारेण सर्वात्मना लाभोन्नतिर्भवतीत्यत्र न सन्देहलेश इति।।



# दर्शनेषु मुक्तिविमर्शः

**श्रीशिवशङ्करमिश्रः**
व्याख्याता, संस्कृतस्य
राजकीयस्नातकोत्तरमहाविद्यालये
देहरादूननगरे



दृश्यते ज्ञायतेऽनेनेति दर्शनम्, दृश्यते ज्ञायते यत् तद् दर्शनम्, ज्ञान-साधनम्, ज्ञानमेव वा दर्शनम्, सूक्ष्मविशदविचिन्तनं येन तत्त्वविज्ञानं भवति, तद्दर्शनमिति फलितार्थः।

सर्वेषां दर्शनानां प्रयोजनं प्रमाणेन प्रमेयस्य प्रमेयत्वं प्रमाय संशय-श्रमाऽऽहार्यादिनिवृत्तिपूर्वकं यथार्थपदार्थस्वाभिमतसम्पादनमिति। 'प्रमाता प्रमाणेन पदार्थं प्रमाय जिहासति जिघृक्षति'। (न्या.वा.भा. भूमिकायाम्)

'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति शिष्टोक्त्या प्रयोजनमूलकानि निखिलानि दार्शनिकदृष्टानि दर्शनानि, तत्र विपश्चिता सत्सु विपुलगौणप्रयोजनेषु मुख्यं किमिति विजिज्ञासितं भवति। विविधेषु निखिलनिगमागमेषु करतलामलकवत् कृततत्त्वसाक्षात्कारैः सर्वार्थयथार्थदर्शिभिर्मननशीलैर्महर्षिभिर्मानवमात्राभिमतार्थं पुरुषार्थचतुष्टयं मुख्यप्रयोजनरूपेण प्रतिपादितमिति, यथा—

धर्मार्थकाममोक्षेषु यस्यैकोऽपि न विद्यते।
अजागलस्तनस्येव तस्य जन्म निरर्थकम्।।

सर्वेषां मानवमात्रहितसाधकानामार्षनिबन्धानां मुख्यप्रयोजनं पुरुषार्थचतुष्टयम्। तत्र धर्मार्थकाममोक्षाख्यपुरुषार्थचतुष्टयविशेषविजिज्ञासायां धर्माय मन्वादिस्मृतयः, अर्थाय कौटिल्यादिनीतयः, कामाय गान्धर्वकोकशास्त्रादयः, मोक्षाय च वेदान्तन्यायसांख्ययोगवैशेषिकमीमांसादिवेदानुयायिदर्शननिबन्धाः प्रबलप्रतिभाप्रभाव-

बोधकाः प्रदर्शनीया भवन्ति। धर्मार्थकाममोक्षेष्वपि परमपुरुषार्थो मोक्ष इत्यामनन्ति मनीषिणः, शेषाणां पुरुषार्थत्रयाणां प्रत्यक्षानुमानागमप्रमाणपुञ्जेनाशाश्वतसिद्धत्वाद् दुःखानुषङ्गि-त्वाच्चेति।

तथा हि दर्शनागमानां परमप्रयोजनं मोक्षः शाश्वतस्वरूपत्वाद् दुःखानुषङ्गित्वशून्यत्वाच्च न स पुनरावर्तते,—

मां हि प्राप्य तु कौन्तेय! दुःखालयमशाश्वतम्।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः।। इति गीतायाम्।

अत्र सर्वदर्शनानां परमपुरुषार्थाख्यपरममुख्यप्रयोजनस्वरूपनिःश्रेयसमोक्ष-मुक्तिकैवल्यनिर्वाणापवर्गपर्याय आत्यतिकदुःखध्वंसः शाश्वतसुखानन्दमहामोद-महानन्दस्वरूपो वेति विचिन्तनीयः।

किन्त्वत्रेदं जिज्ञास्यं यद् दर्शनस्य परमप्रयोजनमपवर्गप्राप्तिरेव; किन्तु स चापवर्गोऽस्ति न वेत्याशङ्कायां यद्यस्ति चेत्तर्हि कीदृशः केनाप्यपवर्गो नावलोकितः कश्चन मुक्तः पुरुषो यदि निवर्त्येत तर्हि मोक्षस्वरूपमवबोधयेत्, परञ्च नेदं सम्भवति, यः खलु मुक्तः, स गमनागमनाद् विमुक्तः सञ्जायते, तर्हि कोऽस्त्यपवर्गः, केन च दृष्टः, कुत्र च विद्यते, किञ्च तत्र प्रमाणमिति जिज्ञासायां श्रुतिस्मृतिपुराणादय एव तत्रापवर्गे प्रमाणीभूताः सन्त्यतः श्रुतिस्मृतिपुराणदृष्ट्या तत्प्रामाण्यते—

१. आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः।
आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विज्ञातं भवति।
(बृ.उ. २।४।८)

२. श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
मत्वा तु सततं ध्येयमेते दर्शनहेतवः।।

३. अशेषेन परित्यागो वासनाया उत्तमः।
मोक्ष इत्युच्यते सद्भिः स एव विमलक्रमः।। (महोपनिषद्)

४. मोक्षः स्याद्वासनाक्षयः। (मुक्त्युपनिषद्), ५. बन्धनक्षयो मोक्षः। (निरा.उ.) ६. अनित्यसंसारे सुखदुःखविषयसमस्तक्षेत्रममताबन्धक्षयो मोक्षः। (निरा.उ.) ७. वासनानिवृत्तिः मोक्षः। (महाभारतम्), ८. मूलमेतत्त्रिवर्गस्य निवृत्तिर्मोक्ष उच्यते। (म.भा., शा.प. ०५), ९. भोगवासनात्यागो मुक्तिः। (यो.व.रा.), १०. कर्मणाञ्च

लयो मोक्षः सुखदुःखप्रदायिनाम् (पद्मपु. २०४।२२२), ११. सा मुक्तिः ब्रह्मणा चैकम्। (गरुडपु.), १२. मृत्युमुखात्प्रमुच्यते (क.उप. १।३।१५), १३. यदा सर्वे प्रमुच्यन्ते कामा ह्यस्य हृदि स्थिताः (बृ.उप. ४।४।१), १४. सर्वबन्धैः प्रमुच्यते (कै.उप. १।१।१७), १५. मुच्यते बन्धनात् (मै.उप. ४।५, मैत्रेयी-उप. १।७), १६. मुक्तिरन्तरायध्वस्तेर्न परः (सां.भा. ७।२०), १७. तदा विद्वान् पुण्यपापे विधूय भिद्यते हृदयं (मुण्ड.उप.), १८. निपाय तन्मृत्युमुखात्प्रमुच्यते (क.उप. ३।१५), १९. तमेव ज्ञात्वा मृत्युपाशान्छिनत्ति (श्वेता.उप. ४।१५), २०. तरति शोकमात्मवित् (छा.उप. ७।३), २१. अशरीरा वावसन्तं न प्रियाप्रिये स्पृशतः (८।१२।१), २२. तमेव विदित्वातिमृत्युमेति (श्वे.उप. ३।८), २३. एतद्विदुरमृतास्ते भवन्ति (शु.यजु.सं. १।४।५।५९), २४. देहाद्विमुच्यमानस्य (कठ.उप.), २५. गर्भवासाद्विमुक्ता विमुच्यन्ते (अवर्ण-शि.उप. ३), २६. असन्धितानां सन्धाता सन्धितानाञ्च मोक्षः (मनु. ४।३४२), २७. मोक्षाय विश्लेषणार्थमित्यानन्दगिरिः, २८. तोयं श्रुतं मोक्षकभस्मना वा यत्सप्तकृत्व-परिषेचनं तत् (बृह.सं. ५४।१३३)।

२९. यो मामजमनादिं च वेत्ति लोकमहेश्वरम्।
असम्मूढः स मर्त्येषु सर्वपापैः प्रमुच्यते।। (गीता-१०।३)

३०. धर्ममर्थञ्च कामञ्च मोक्षश्च ऋषिसत्तम।
समाप्नोति पुमान्नित्यं नारायणपरायणः।। (वह्निपुराणम्)

एवमन्यत्रापि बहुत्र स्थलेषु मोक्ष-मुक्त्यादिशब्दोल्लेखो विद्यते। इम एव शब्दा अपवर्गे प्रमाणीभूताः सन्ति, एभिर्वाक्यैरपवर्गपदार्थप्रामाण्यं प्राप्यते।

तत्र तावद् भारतीयास्तिकनास्तिकोभयदर्शनेषु आत्यन्तिकदुःखनिवृत्ति-रूपिणोऽस्य मोक्षस्य स्वरूपविषये महती विप्रतिपत्तिर्विद्यते। केनचिदयं मरणमेव मोक्षः, केनचित् सच्चिदानन्दावाप्तिरेव मोक्षः। केनचिच्चायं प्रकृतिपुरुषविवेक-रूपेणाभिधीयते, केनचिच्च प्रपञ्चबन्धविलयं स्वर्गप्राप्तिर्वा मोक्षरूपेणोपस्थाप्यते, केनचिच्चाकृतकत्वाच्छून्यमेव मोक्ष इति मन्यते। संसारनिवृत्तिरेवेति क्वचन, अशेषविशेषगुणोच्छेदैरित्यपरे, आत्यन्तिकदुःखप्राग्भावो मुक्तिरिति प्रभाकरः, शरीरेन्द्रियाभ्यामात्मनो मुक्तत्वं मुक्तिरिति भरतः। मूलचक्रस्थायाः परानामिकाया ब्रह्मरूपाया वाचो दर्शनं मोक्ष इति पाणिनीयाः, भगवच्छरणागतिरेव मोक्ष इति वैष्णवाः, प्रमाणादिषोडशपदार्थानां तत्त्वज्ञानाज्जायमानपरम्परया दुःखात्यन्तिक-निवृत्तिरेवेति मन्यमाना अक्षपादा नैयायिका इत्येवं बहुविधसमुद्भूतसिद्धान्त-

जन्यसमाकुलितो मदीयश्चेतो दार्शनिकानां मुक्तेः सम्यक् स्वरूपमुपस्थापयति, तत्रादौ सर्वतः प्राचीनतमं सांख्यमतमुपस्थाप्यते।

**सांख्यमते कैवल्यम्**

कपिलानुयायिनां सांख्यानां मते प्रकृतिपुरुषात्मकं मूलतत्त्वद्वयं विद्यते। तत्र पुरुषः शुद्धचैतन्यस्वरूपो देशकालादिबन्धनैर्मुक्तो निर्गुणो निष्क्रियश्च विद्यते। स च पुरुषः पुष्करपलाशवन्निर्लेपो विद्यते। यदुक्तं सांख्यकारिकायाम्—

तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति कश्चित्।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः।।

पुरुषस्य बन्धमोक्षौ न वास्तविकौ, तयोर्बुद्धिधर्मत्वात्। तदुक्तं सांख्यसूत्रे (१।५८)—'वाङ्मात्रं न तु तत्त्वं चित्तस्थितेः'। एतस्य भाष्यम्-बन्धादीनां सर्वेषां चित्त एवावस्थानात् तत्पुरुषे वाङ्मात्रं सर्वं स्फटिकलौहित्यवत् प्रतिबिम्बमात्रत्वम्। न तु तत्त्वम्, तस्य भावः, अनारोपितम्, जल्पलौहित्यवदित्यर्थः, अतो न श्रुतिविरोधः। श्रुतिश्च—

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता।।

प्रकृतिः त्रिगुणात्मिका अस्ति, सा च पुरुषाश्रयणं कृत्वा बध्यते, ज्ञात्वा च मुच्यते, पुरुषस्तु स्वत एव मुक्तः। किन्तु, प्रकृतेः संसर्गात् बुद्धिरहङ्कारादीनाञ्च संसर्गाद् पुरुषोऽपि प्रकृतेर्गुणधर्मादीनां तद्गतसुखदुःखादीनाञ्च स्वीयसुखदुःखादिकं मत्वा प्रकृतेर्भिन्नः सदपि तदभिन्नत्वं स्वस्मिन् गृह्णाति। यथा राज्ञा स्वभिन्नस्य, सेवकस्यानादरेण स्वीयानादरं मन्यते, यथा च पिता स्वभिन्नस्य पुत्रस्यादरणेन सम्मानेन स्वकीयमादरं सम्मानं च बुध्यते, तथैव पुरुषोऽपि स्वभिन्नायाः प्रकृतेर्गुणधर्मादिकं स्वकीयं गुणधर्मादिकं ज्ञात्वा तस्याः सुखित्वात् सुखित्वं दुःखित्वाच्च दुःखित्वमनुभवति। तदुक्तं सारबोधिन्याम्—

दर्पणमुखयोरसंसर्गाग्रहाद् दर्पणनिष्ठमलिनस्य यथा मुखे भ्रमस्तथा बुद्धिपुरुषयोरसंसर्गाग्रहाद् बुद्धिनिष्ठज्ञानपरिणामित्वस्यापि पुरुषे भ्रम इति।

इदमेवाज्ञानं सकलानर्थबन्धदुःखजनकम्, यतोऽज्ञानमेव बन्धस्य कारणमिति सर्वैरभ्युपगतम्। सांख्येनापीदं स्वीकृतम्, तदुक्तं सांख्यकारिकायाम्—

धर्मेण गमनमूर्ध्वमधस्ताद् भवत्यधर्मेण।
ज्ञानेन चापवर्गो विपर्ययादिष्यते बन्धः।।

अर्थाद् ज्ञानविपर्ययेणाज्ञानेन बन्धो जायते। बन्धस्तावत् प्रकृतिपुरुषयोरनादिरविवेककृतः संयोगः, तदुक्तं कारिकायाम्—

पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः।।

उक्तञ्च गीतायाम्—

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान्।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु।।

सांख्यसूत्रेऽपि—

तद्योगोऽप्यविवेकान्न समानत्वम्। (१।५५) इति।

अतोऽविद्यया अज्ञानेन च पुरुषस्य बन्धनम्। यदा प्रकृतिपुरुषयोर्भेदज्ञानेन अभेदात्मकोऽविवेक उच्छिद्यते तदोत्पन्नविवेकज्ञानेन मोक्षो जायते। यावद् बाह्यपदार्थैरावृतः पुरुषः, न तावन्मोक्षप्राप्तिः। यदा प्रकृतिः स्वं पुरुषाद् विमुञ्चति यद्वा स्वीयव्यापाराद्विरक्ता भवति, तदा पुरुषः स्वस्वाभाविकीं स्थितिमवाप्य विवेकरूपताञ्च प्राप्य प्रकृतेर्गुणधर्मान् स्वीयगुणधर्मरूपेण भानं व्यर्थमेवेति बुध्यते। अविवेकोच्छेदश्च प्रकृतिपुरुषयोरन्तःसाक्षात्कारादेव, तदुक्तं (सांख्यसूत्रे, ५६) 'नियतकारणात्तदुच्छित्तिर्ध्वान्तवत्'।

अस्य व्याख्या सांख्यप्रवचनभाष्ये— शुक्तिरजतादिस्थले लोकसिद्धं यन्नियतं कारणं विवेकसाक्षात्कारस्तस्मात्तस्याविवेकस्योच्छित्तिर्भवति ध्वान्तवत्। आशयः खल्वयं यथालोकेनैव तिमिरतोमस्य नाशः सम्भवति नोपायान्तरेण, तथैवाऽविवेकस्यापि नाशो विवेकादेव सम्भवति नान्तरेणोपायेन कर्मादिना वा। प्रकृतिपुरुषविवेकज्ञानोत्पन्ने सति कर्मानुत्पत्तिः, कर्माभावाद् बन्धनाभावः, बन्धनाभावाच्च मोक्षसिद्धिः।

सांख्यमतेऽपि कैवल्यं दुःखात्यन्तिकनिवृत्तिरेव यतो विवेकज्ञाने जाते न कर्माण्युत्पद्यन्ते कर्मभिरेव दुःखं कर्माभावान्न बन्धनं न वा दुःखमिति दुःखनिवृत्तेरेव मोक्षत्वं सिद्ध्यति। तदुक्तं सांख्यसूत्रे (१।७२)—

'यः पुरुषस्यापवर्गः स प्रतिबिम्बरूपस्य मिथ्यादुःखस्य विवेकः'

एवं सांख्यकारिकायाम्—'नैकात्यन्ततोऽभावात्'।

निजमुक्तस्य बन्धध्वंसमात्रं परं न समानत्वम् (सां.सू. १।८६)। अत्र परमिति शब्द आत्यन्तिकार्थकः सांख्यप्रवचनभाष्ये व्याख्यातः।

सांख्यशास्त्रेऽपि मुक्तिर्जीवन्मुक्ति-विदेहमुक्तिभेदेन द्वैविध्यमावहति। यत्कालावच्छेदेन प्रकृतिपुरुषयोः संयोगो भिद्यते तत्कालावच्छेदेनैव प्रकृतेर्व्यापारो नोपरमते; अपि तु यथा कुम्भकारेण भ्रामितश्चक्रोऽभावेऽपि कुम्भकारस्य किञ्चित् कालं प्रचलति, तथैव भेदज्ञानेऽपि संयोगनाशेऽपि वा प्राक्तनसंस्कारवशात् शरीरेन्द्रियबुद्ध्यादिरूपेण तस्याः प्रकृतेर्व्यापारः प्रचलत्येव; किन्तु सः शरीरेन्द्रियबुद्ध्यात्मको व्यापारो जीवन्मुक्तपुरुषस्य कृते बाधको न भवति। एककालावच्छेदेन जीवन्मुक्तपुरुषस्य शरीरेन्द्रियव्यापारस्य च समवधाने न हि कश्चन विरोधः। मृत्योरनन्तरं जीवन्मुक्तः पूर्णमोक्षमाप्नोति तद्विदेहकैवल्यमित्युच्यते।

**योगदर्शने कैवल्यम्**

महर्षिणा पतञ्जलिना स्वकीये योगसूत्रे मोक्षस्वरूपमेवं प्रतिपादितम्—पुरुषार्थशून्यानां गुणानां प्रतिप्रसवकैवल्यं स्वरूपप्रतिष्ठा वा चित्तशक्तिरिति (यो.सू. ४।३४) एतस्य भाष्यमेवं कृतम्—कृतभोगापवर्गाणां पुरुषार्थशून्यानां गुणानां यः प्रतिप्रसवः प्रतिसर्गतत्कैवल्यमिति। यं कञ्चित् पुरुषं प्रति प्रधानस्य मोक्षः। स्वरूपप्रतिष्ठा पुनर्बुद्धिसत्त्वानाभिसम्बन्धात्पुरुषस्य चित्तशक्तिरेव केवला। तस्याः सदा तथैवावस्थानं कैवल्यमिति।

**अद्वैतवेदान्ते मोक्षः**

मोक्षस्तादृक्सत्तायाः साक्षात्कारो यस्या अनन्तकालात् सत्तावत्वं वर्तते। यद्यपि सा नास्माकं दृष्टिपथविषयीभूता, तथापि विनष्टे सत्यज्ञानप्रतिबन्धे आत्मा मुच्यते। ब्रह्मण आत्मनो वा स्वस्वरूपानुभूतिरेव मोक्षः। ब्रह्म सच्चिदानन्दस्वरूपो विद्यते, अत एव श्रुतिः— सच्चिदानन्द ब्रह्म इति। आत्मा किल ज्ञानस्वरूपः, मोक्षश्चात्मनः स्वरूपज्ञानमिति सिद्धान्तः। यथा बौद्धमते अद्वैतपरमतत्त्व-निर्वाणयोर्मध्ये नास्ति कश्चन भेदः, तथैव शाङ्करवेदान्तेऽपि ब्रह्ममोक्षयोर्भेदो नास्ति। ब्रह्मज्ञानी ब्रह्मैव जायते, तदुक्तम्—'ब्रह्मविद् ब्रह्मैव भवति'। अनेन श्रुतिवाक्येन ब्रह्मज्ञानब्रह्मभावयोरैक्यं प्रतिपाद्यते। वस्तुतो जीवस्य ब्रह्मरूपेण परिणतिर्निर्मितिर्वा न जायते, अपि तु जीवस्तु स्वतो ब्रह्मैव। यथोक्तम्—'ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः'।

यद्यप्यत्र बन्धमोक्षौ बुद्धेः पुरुषस्य वा न वास्तवौ स्तः, बुद्धेरवस्तुत्वात्, पुरुषस्याप्यसङ्गत्वेन सच्चिदानन्दमात्ररूपत्वाद् बन्धमोक्षयोस्तत्रासम्भवात्। अत एव श्रुतिः —

'न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।
न मुमुर्क्षुर्न वै मुक्त इत्येषा परमार्थता'।। इति।

तथापि व्यावहारिकं प्रातीतिकं वा तयोः सत्त्वं पुरुषेऽभ्युपगम्य' किञ्चिद्विचार्यते। अविद्यया जीवो देहेन्द्रियादिभिःसह तादात्म्यं संस्थाप्य स्वस्मिन् कर्तृत्व-भोक्तृत्वादिकं भ्रमादवमन्यते। अविद्यया अज्ञानेन वा पुरुषो बन्धितो भवति, सा चाविद्या अद्वैतवेदान्ते मायापदेनोच्यते। तल्लक्षणं वेदान्तसारनामकग्रन्थे प्रतिपादितम्, सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि यत्किञ्चिद् भावरूपमिति। अविद्यावशादेव यथा मेघेनाच्छन्नः सूर्यो मूढेन निष्प्रभो रुचिहीनो बुध्यते, तथैवाज्ञानेन बद्धो जीवोऽपि शरीरेन्द्रियादिजडपदार्थेषु अहं ज्ञाता, अहं कर्ता, अहं भोक्ता, अहं सुखी, अहं दुःखी इत्यादि व्यवहारं करोति। तदुक्तं वेदान्तसारग्रन्थे—

घनच्छन्नदृष्टिर्घनच्छन्नमर्कं यथा निष्प्रभो मन्यते चातिमूढः।
तथा बद्धवद्भाति यो मूढदृष्टेः स नित्योपलब्धिः स्वरूपोऽहमात्मा।।
घनोपगूढं गगनं न तारा न भास्करो दर्शनमभ्युपैति।
तथा चिदाभासस्वरूपसंस्थं स नित्योपलब्धिः स्वरूपोऽहमात्मा।।

अस्या अविद्याया निवृत्तिर्ब्रह्मैक्यलक्षणया विद्यया भवति। तदुक्तं श्रीगौडपादैः —

अनाद्यविद्यया सुप्तो यदा जीवः प्रबुध्यते।
अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा।।

श्रुतिरपि—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे।। इति।

मोक्षो नाम नात्मविलोपः, अपि तु चैतन्यविस्तारेण प्रकाशेन च निजानन्तताया निरपेक्षतायाश्च साक्षात्कार एव मोक्षः, अत एव चित्सुखाचार्येण लिखितम्—अनवच्छिन्नानन्दप्राप्तिर्मोक्षः। अप्राप्तवस्तुनः प्राप्तिर्नास्त्यपि तु स्वात्मभाव एव, स च पूर्वमनन्तकालपूर्वतः प्राप्त एव। शङ्कराचार्येण मोक्षस्य लक्षणत्रयं प्रतिपादितम्— १. अविद्यानिवृत्तिरेव मोक्षः, २. ब्रह्मभावश्च मोक्षः, ३. नित्यशरीरत्वं मोक्षाख्यम्।

मोक्षो नोत्पाद्यः, न च केनचित् कारणेन जन्यः कार्यभूतः, न च कर्मणः फलं नोपासनाया वा फलम्। यदि मोक्षः कार्यभूतः स्यात्तर्हि तस्यानित्यत्वं प्रसज्येत, न कश्चन मोक्षानित्यत्ववादी किन्तु ये खलु मोक्षमभ्युपगम्यमाना दार्शनिकाः सन्ति, ते मोक्षं नित्यमेवाङ्गीकुर्वन्ति। तदुक्तम्— नित्यश्च मोक्षः सर्ववादिभिरुपगम्यते। मोक्षप्राप्त्या जगतः परिवर्तनं न जायतेऽपि त्वस्मदीया संसारविषयिण्याः प्रवृत्तेः परिवर्तनं जायते। जगतो यदनित्यानि वस्तूनि स्वल्पमतीर्जनान् मोहयन्ति, न तानि मुक्तात्मनां कृते मोहजनकानि। दुःखस्य कारणं मिथ्याज्ञानं भ्रान्तिरेव। तदुक्तं शाङ्करभाष्ये (२।३।४४)—"मिथ्याभिमानभ्रमनिमित्त एव दुःखानुभवः। सुरेश्वरेणापि मानसोल्लासे लिखितम्—यदाऽनन्तप्रकाशस्य साक्षात्कारोऽन्तर्दृष्ट्या प्राप्यते, तदा निखिलप्राणिन आब्रह्मणो वनस्पतिजगद् यावत् स्वप्नवदेकस्यां भ्रान्तौ परिणता भवन्ति। एतादृशभ्रान्तेर्निवारणं तदानीमेव शक्यते यदाऽऽत्मनः स्वस्वरूपावाप्तिर्जायते। तदुक्तं शाङ्करभाष्ये—

गृहीते त्वात्मैकत्वे बन्धमोक्षादिसर्वव्यवहारपरिसमाप्तिरेव स्यात्। अद्वैतवेदान्तिनये मोक्षो न दुःखध्वंसात्मकोऽपि तु आनन्दमयो मोक्षः, 'नित्यं विज्ञानमानन्दं ब्रह्मे'ति श्रुतिनिर्देशात्। अत एव चित्सुखाचार्यैरद्वैतसिद्धौ लिखितम्—दुःखाभावोऽपि मुक्तौ न स्वतः पुरुषार्थः सर्वत्र दुःखाभावस्य स्वरूपसुखाभिव्यक्तिप्रतिबन्धकाभावरूपतया सुखशेषत्वात्। एवमेव मोक्षस्वरूपं प्रतिपादयता भगवता भाष्यकारेण शाङ्करभाष्ये निगदितम्—

इदं तु पारमार्थिकं कूटस्थनित्यं व्योमवत्, सर्वव्यापि, सर्वक्रियारहितं, नित्यतृप्तं, निरवयवं, स्वयंज्योतिस्वभावम्, यत्र धर्माधर्मौ सह कार्येण कालत्रयं च नोपावर्तते तदेतदशरीरत्वं मोक्षाख्यमिति। श्रुतिश्च मोक्षप्रतिबन्धनिवृत्तिमात्रमेवात्मज्ञानस्य फलम्।

आचार्यशङ्करमतेऽपि जीवन्मुक्ति-विदेहमुक्तिभेदेन मुक्तेर्द्वैविध्यम्, न हि तत्र मृतकानां कृते मोक्ष आरक्षितः; अपि तु जीवनेऽपि तत्प्राप्तिर्भवितुं शक्यते। अत्र श्रुतिः—'अत्र ब्रह्म समश्नुते, इहैव तदवाप्नोति' अभयं प्राप्तोऽसि' इत्यनया श्रुत्या ज्ञाप्यते यदात्मदेहादेस्तादात्म्यं भ्रान्तिमूलकमतोऽधिष्ठानभूतात्मसाक्षात्कारेणाविद्यानिवृत्तौ सत्यपि शरीरे जीवन्मुक्तिः सिद्ध्यति। तदुक्तं शाङ्करभाष्ये (१।१।१)।

तस्मान्मिथ्याप्रत्ययनिमित्तत्वात् सशरीरत्वस्य सिद्धं जीवतोऽपि विदुषोऽशरीरत्वमिति। जीवन्मुक्तशरीरे सुखदुःखादिकं नोत्पद्यते, यथा भुजङ्गस्य केचुलधारणे न काप्यासक्तिरतः स तस्य परित्यागेऽपि न खिद्यते' तथैव

जीवन्मुक्तस्यापि पुरुषस्य शरीरे आसक्त्यभावात्तत्त्यागेन कश्चन मोहः, यतः स तु अशरीरी ब्रह्म। तदुक्तं बृहदारण्यकोपनिषदि (४।४।७)—'अथायमशरीरोऽमृतो ब्रह्मैव'—एवमेव यथा मदोन्मत्तजनस्य शरीराच्छेदकवस्त्राणां शरीरे सति असति वा न काचिच्चिन्ता जायते, तथैव जीवन्मुक्तपुरुषस्यापि नेयं चिन्ता जायते यत्तस्य शरीरः स्थितः गमनशीलो वा। यथोक्तं भागवते —

देहं च नश्वरमवस्थितमुत्थितं वा
सिद्धो न पश्यति यतो ह्यगमत् स्वरूपम्।
दैवादपेतमुत दैववशादुपेतं
वासो यथा परिकृतं मदिरामदान्धः।।

(भागवते-११।१०।३६)

**मीमांसामते मोक्षः**

मीमांसानये वेदविहितकर्मणां विधिना श्रद्धया चानुष्ठानेन नित्यसुखाभिव्यक्तिरूपो मोक्षो जायते। अस्मिन् दर्शने प्रपञ्चसम्बन्धविलोपः स्वर्गप्राप्तिर्वा मोक्षपदार्थः। प्रभाकरमते धर्माधर्मयोः सर्वथा विलोप एव मोक्षः, यतोऽनयोर्व्यापार एव पुनर्जन्महेतुः। स्पष्टोऽयमर्थोः निखिलधर्माधर्माणां विलोपे सति यच्छरीरनाशस्तदेव मोक्षः। तदुक्तम्— आत्यन्तिकस्तु देहच्छेदो निःशेषधर्माधर्मपरिक्षयनिबन्धनो मोक्ष इति सिद्धम्। धर्माधर्मवशीकृतो जीवस्तासु तासु योनिषु संसरति। (प्रकरणपञ्चिकातत्त्वालोके, पृ. १५६)

कुमारिलमते निखिलदुःखरहितस्यात्मनः स्वस्वरूपावाप्तिरेव मोक्षः। तदुक्तं परमात्मप्राप्त्यवस्थामात्रम्—

दुःखात्यन्तसमुच्छेदे सति प्रागात्मवर्तिनः।
सुखस्य मनसा भुक्तिर्मुक्तिस्तत्ता कुमारिलैः।।

भट्टशङ्करयोर्मध्ये मोक्षविषये वैषम्यमल्पं प्रतीयते, यथा शाङ्करमते ज्ञानादेव मोक्षः, भाट्टमते च ज्ञानविशिष्टकर्मणा मोक्षः।

केचन मीमांसका आनन्दानुभूतिरेव मोक्ष इति वदन्ति, तत्र श्रुतिः — 'आनन्दो ब्रह्मणो रूपं तच्च मोक्षेऽभिव्यज्यते'। मानमेयोदयेऽपि मोक्षसाधनान्येवम्—

निषिद्धकाम्यकर्मभ्यः सम्यग् व्यावृत्तचेतसः।
नित्यनैमित्तिकप्रायश्चित्तप्रह्वस्ततद्दुष्कृतेः।।
सुखदुःखानुभूतिभ्यां क्षीणप्रारब्धकर्मणः।
युक्तस्य ब्रह्मचर्याद्यैरङ्गैः शमदमादिभिः।।
कुर्वाणस्यात्ममीमांसा वेदान्तोक्तेन वर्त्मना।
मुक्तिः सम्पद्यते सद्यो नित्यानन्दप्रकाशिनी।।

पार्थसारथिमिश्रमतेऽपि दुःखनिवृत्तिरेव मुक्तिः, न तु सुखोपभोगः।

**रामानुजमते मोक्षः**

वैष्णवदर्शनेष्वन्यतमे श्रीसम्प्रदाये स्ववर्णाश्रमोचितकर्मानुष्ठानेन सह भगवदुपासनया कर्मकर्तृत्वव्यतिरिक्तानां सर्वज्ञत्वादीनां परमात्मगुणानां प्राप्तिरेवापुनरावृत्तिलक्षणो मोक्षः सम्पद्यते। तदुक्तं श्रीभाष्ये—'अनावृत्तिः शब्दात्' (४।४।२२)। अत्र शब्दादिति पदेन ज्ञायते यदहर्निशमनुष्ठीयमानस्ववर्णाश्रमोचित-धर्मानुगृहीततदुपासनरूपतत्समाराधनप्रीत उपासीनान् चिरकालप्रवृत्तानन्त-दुस्तर्ककर्मसञ्चयरूपाविद्यां विनिवर्त्य स्वयाथात्म्यानुभवरूपानवधिकातिशयानन्दं प्राप्य पुनर्नावर्तयतीत्यवगम्यते। शब्दश्च—

स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तत इति।

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम्।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः।।

इति गीतायाम्। विशिष्टाद्वैताद्वैतयोरयमेव भेदो यद्विशिष्टाद्वैतवादिमते ज्ञानाद् भक्तिरुत्पद्यते, भक्त्या भगवत्प्राप्तिः, तदेव मोक्षः; किन्तु अद्वैतमते न हि ज्ञानं शक्तेरुत्पादकम्,अपि तु शक्त्या ज्ञानमुत्पद्यते, ज्ञाते सति जीवब्रह्मणोरैक्ये मोक्षः सम्पद्यते। एतेषां मोक्षसिद्धान्तः प्रतिपादितः पञ्चरात्ररहस्ये —

ततः स्वाभाविकाः पुंसा ते संसारतिरोहिताः।
आविर्भवन्ति कल्याणाः सर्वज्ञत्वादयो गुणाः।।
एवं गुणाः समानाः स्युर्मुक्तानामीश्वरस्य च।
सर्वं कर्तृत्वमेवैकं तेभ्यो देवे विशिष्यते।।

**निम्बार्कमते मोक्षः**

निम्बार्कमते ईश्वरप्रपत्तिः, ईश्वरं प्रति सर्वात्मना आत्मसमर्पणं वा मोक्षप्राप्तेः परमोपायः। प्रपन्नपुरुषानुरूपभावं धारयन्तो जीवा ईश्वरकृपाभाजा भवन्ति, हरिस्तेषां हृदि भक्तिभावानुत्पादयति, भक्त्या च हृदि स्थितस्य भगवतः श्रीमन्नारायणस्य साक्षात्कारो जायते, तदेव मोक्षः। तदुक्तं श्रुतिसिद्धान्तसङ्ग्रहे —

अन्तस्थस्य हरेर्ज्ञानं व्यापकत्वेन मुक्तिदम्।
सद्योऽन्यथा क्रमात्तत्तीदीषद्विलम्बतो नृणाम्।।

स्वान्तस्थाया हरेर्मूर्त्तेरापरोक्ष्यं विमुक्तये।
अपेक्ष्यं तद्विना मुक्तिर्न सर्वेषां सतां क्वचित्।।

**वल्लभमते मोक्षः**

'हरेरुपासनाभक्तिर्मुक्तिदायिनी' इति वल्लभैः परिकल्पितम्। तदुक्तञ्चाणुभाष्ये—'मुक्तिं प्रति तदुपासनाया भक्तेर्वा तदनुरूपाया एव कारणत्वमभ्युपेयते' इति।

**माध्वमते मोक्षः**

दुःखानवच्छिन्नपूर्णसुखानुभूतिर्जगद्व्यापारवर्जञ्च सर्वकामाप्तिरेव मुक्तिरिति माध्वसिद्धान्तः। सा च मुक्तिर्विष्णुप्रसादादवाप्यते। तदुक्तं विष्णुपुराणे—

तस्मिन् प्रसन्ने किमिहास्त्यलभ्यं धर्मार्थकामैरलमल्पकास्ते।
समाश्रिताद् ब्रह्मतरोरनन्ताद् निःसंशयं मुक्तिफलं प्रयान्ति।।

एवमेव —

मुक्तिर्नैजसुखानुभूतिरमला भक्तिश्च तत्साधना।।

**पाशुपतमते मोक्षः**

परमैश्वर्यप्राप्तिरेव मोक्षः, स च पाशुपतशास्त्रादेव लभ्यते, नान्यथा। तदुक्तम्—

ज्ञानमात्रं वृथा शास्त्रं साक्षाद्वृष्टिस्तु दुर्लभा।
पञ्चार्थादन्यतो नास्ति यथावत्तत्त्वनिश्चयः।।

**शाक्तमते मोक्षः**

प्रत्यभिज्ञामालाजन्यपूर्णात्मालाभ एव मोक्षः। प्रत्यभिज्ञा तावत् परमेश्वरविषयकं प्रति आभिमुख्येन ज्ञानम्। स्वातन्त्र्यशक्तिविशिष्टस्य परमेश्वर-

स्याहन्तया परिपूर्णोऽहमित्याकारकं ज्ञानमिति यावत्। अस्मिन् मतेऽपि मुक्तेर्द्वैविध्यं विद्यते।

**शैवमते मोक्षः**

विज्ञानाकल-प्रलयाकल-सकलेति भेदेन शैवमते बन्धो जीवस्त्रिप्रकारकः। एतेषु त्रिप्रकारकेषु जीवेषु आणवकार्मणमायीयेति त्रिमला भवन्ति। मुक्तये एभ्यस्त्रिमलेभ्यो मुक्तिः परमावश्यकी। सा च मलादिमुक्तिः शिवानुग्रहमन्तरा न सम्भवति। अतः शिवप्राप्तिरेव मोक्षः। शिवत्वप्राप्तिश्च शिवदीक्षादिनोपायेनैव सम्भवति।

**रसेश्वरवादिमते मोक्षः**

रसेश्वरदर्शने पारदशिवलिङ्गार्चनेन जीवः शिवरूपतां भजते। तदुक्तम् —

पारदं परमेशानि ब्रह्मविष्णुशिवात्मकम्।
यो यजेत्पारदं लिङ्गं स एव शम्भुरव्ययः।।

माहेश्वरः कलितकाञ्चनचारुरूपो रोगाक्षपाक्षरणदीप्तदिनेशरश्मिः।
मोक्षं च जीवति जने तनुतेऽक्षरं यः पायादपायनिचयात्परपारदोऽसौ।।

**पूर्णप्रज्ञदर्शने मोक्षः**

मोक्षो विष्णुप्रसादमन्तरेण नोपलभ्यते।

मुख्यं च सर्ववेदानां तात्पर्यं श्रीपतौ परे।
उत्कर्षे तु तदन्यत्र तात्पर्यं यादवान्तरम्।।

यस्य प्रसादात्परमार्तिरूपादस्मात्संसारान्मुच्यते नापरेण।
नारायणोऽसौ परमो विचिन्त्यो मुमुक्षुभिः कर्मपाशादमुष्मान्।।

(नारायणश्रुतिः)

तस्मिन् प्रसन्ने किमिहास्त्यलभ्यं धर्मार्थकामैरलमल्पकास्ते।
समाश्रिताद् ब्रह्मतरोरनन्ताद् निःसंशयं मुक्तिफलं प्रयान्ति।।

(वि.पु. १।१७)

**शब्ददर्शने मोक्षः**

शाब्दिकदर्शने मूलचक्रस्थायाः परानामिकाया ब्रह्मरूपाया वाचो दर्शनमेव मोक्षः। स च सम्यग् ज्ञातशब्दशास्त्रनैपुण्येन जायते। यदुक्तम्—

शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति।। (वाक्यपदीये)

**स्मृतिषु मोक्षः**

तपो विद्या च विप्रस्य निःश्रेयसकरं परम्।
तपसो किल्विषं हन्ति विद्ययामृतमश्नुते।। (मनु. ११।१०४)

न्यायागतधनस्तत्त्वज्ञाननिष्णोऽतिथिप्रियः।
श्राद्धकृत्सत्यवादी च गृहस्थोऽपि हि मुच्यते।। (याज्ञवल्क्यस्मृतिः)।

**चार्वाकमते मोक्षः**

पारतन्त्र्यं बन्धः, स्वातन्त्र्यं च मोक्ष इति चार्वाकसिद्धान्तः। एतन्मते मरणमेव मोक्षः, यतश्चार्वाकः प्रत्यक्षैकप्रमाणवादी, प्रत्यक्षसिद्धचैव वस्तुनः सत्ता विद्यते, अप्रत्यक्षवस्तुनि न किमपि प्रामाण्यम्। जन्मान्तरं न प्रत्यक्षमतस्तत्सद्भावे प्रमाणाभावः। जन्मान्तरमेव बन्धनम्, तस्याभावान्न बन्धनमतो देहनाश एव मोक्षः, सैवापवर्ग इति तस्य नास्तिकस्य डिण्डिमघोषः।

**बौद्धमते मोक्षः**

माध्यमिक-वैभाषिक-योगाचार-सौत्रान्तिकभेदेन बौद्धमतस्य चातुर्विध्यम्। तत्रापि हीनयानमहायानभेदेन भेदद्वयम्। योगाचारमते संसारनिवृत्तिरेव मोक्षः। ज्ञानस्य बाह्याकारेण परिणाम एव संसारः, तत्परिणामहानञ्च मोक्षः। ज्ञानस्य बाह्याभावेऽपि तस्य स्वरूपतः स्थितिर्मोक्षे भवति, किन्तु माध्यमिकमते मोक्षेऽपि न ज्ञानमतो ज्ञानसन्तानस्य विनाश एव मोक्षः। तदुक्तम् —

रागादिज्ञानसन्तानवासनोच्छेदसम्भवा।
चतुर्णामपि बौद्धानां मुक्तिरेषा प्रकीर्तिता।।

हीनयानमते मोक्षो दुःखाभावरूपः। तत्र सुखरूपता नास्ति; किन्तु महायानमतेन तत्र सुखत्वं कल्प्यते।

**जैनमते मोक्षः**

जैनमते मोक्षस्य कारणद्वयम्— संवरो निर्जरा च। संवरेण कर्माण्युपरुद्ध्यन्ते (अभिनवकर्मणामुत्पत्त्यभावः), निर्जरया च अर्जितकर्मणां विनाशः। एवं कर्मभिरात्यन्तिकनिवृत्तिरेव मोक्षः। उक्तञ्च सर्वदर्शनसङ्ग्रहकारेण-मिथ्यादर्शनादीनां बन्धहेतूनां निरोधेऽभिनवकर्माभावो निर्जराहेतुसन्निधानेनार्जितस्य कर्मणो निरस-

नात्यन्तिककर्ममोक्षणं मोक्षः। तदाह तत्त्वसूत्रे—'बन्धहेत्वभावनिर्जराभ्यां कृत्स्नकर्मविप्रमोक्षणं मोक्षः'। (तत्त्वसू. १०।२)

**न्यायमते मोक्षः**

न्यायनये प्रमाणादिषोडशपदार्थानां तत्त्वज्ञानान्निःश्रेयसस्य प्राप्तिर्जायते, तदुक्तं भगवता गौतमेन न्यायसूत्रे —

'प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डा-हेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः'। (न्यायसूत्रम्—१।१।१)

अत्रेदं चिन्त्यं यदेतेषां प्रमाणादिषोडशपदार्थानामतत्त्वज्ञानाव्यवहितोत्तरमेव निःश्रेयसस्य प्राप्तिः, किं वा तत्त्वज्ञाननिःश्रेयसोर्मध्येऽपि कश्चन व्यापारः, किं तत्त्वज्ञानं साक्षान्निःश्रेयसोपयोगी परम्परया वेत्याशङ्कायां तत्रैवोक्तमक्षपादैः— 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः'।(न्या.सू.) अयमाशयो यत् प्रमाणादिषोडशपदार्थतत्त्वज्ञानेन अनात्मन्यात्मेति, अत्राणे त्राणमिति सभये निर्भयमिति जुगुप्सितेऽमिमदिति' एवमात्मन्यनामेति त्राणेऽत्राणमित्यनेक-विधमिथ्याज्ञानानां विनाशो जायते, तन्मिथ्याज्ञानापाये तन्मूलकरागद्वेषा-सत्येर्ष्यासूयमायालोभादिदोषाणामभावो दोषापाये प्रवृत्त्याद्यपायः। अत्र प्रवृत्तिपदेन प्रवृत्तिसाध्यौ धर्माधर्मौ विवक्षितौ। रागद्वेषात्मिका प्रवृत्ती रागद्वेषादिभिर्दोषैरेव जायतेऽतो दोषापाये प्रवृत्त्यपायः, प्रवत्त्यपाये जन्मापायः, यतो यावद् धर्माधर्मात्मिका प्रवृत्तिस्तावज्जन्म अनयैव प्रवृत्त्या कुत्सिताभिपूजिते जन्मनी जायेते। जन्मैव दुःखहेतुः, यावज्जन्म तावद् दुःखमिति नियमादतो विनष्टे सति जन्मनि दुःखापायरूपो मोक्षः सम्पद्यते। तच्च दुःखमेव विंशतिसंख्याकम्— षडिन्द्रियाणि' षड्विषयाः, षड्बुद्धयः, सुखदुःखशरीरञ्चेति दुःखानुसक्तत्वात् सुखमपि दुःखान्तर्भूतम्। तदुक्तं न्यायवार्तिके—सुखमुपभोक्तुकामेन दुःखमपि भोक्तव्यमेव, दुःखं वा जिहासता सुखमपि हातव्यमेव सविषान्नवदिति।

अपवर्गः प्रायशः समेषां दार्शनिकानां मते समानमेवापवर्गबोधकशब्द-मूलकमेव भेदः। सुखस्वरूपापवर्गरूपेणाभिमतानां जनानां कृते दुःखात्यन्तिक-निवृत्तिरूपमोक्षेण न किमपि वैमत्यम्। अत्र श्रुतिः— दुःखेनात्यन्तिकविमुक्तश्चरति।

अत्र तत्त्वज्ञानं न यथार्थज्ञानमात्रम्, तथा सति भूतलं घटवदिति यथार्थ-ज्ञानादपि इदानीं चैत्रादेर्मुक्तिप्रसङ्गात्। अथ मिथ्याज्ञानभिन्नज्ञानमेव तत्त्वज्ञानं तच्च मुक्त्यव्यवहितप्राक्क्षण एव भवति, इदानीन्तनानां भूतलं घटवदित्यादिज्ञानानां

यथार्थत्वेन प्रतीयमानानामपि आंशिकमिथ्यात्वस्वीकारात्। त्रिपुटी-प्रत्यक्षवादि-प्रभाकरमते समेषां ज्ञानानां मितिमातृमेयविषयकत्वाद् घटमहं जानामीत्याकाराकारितज्ञानानां कथं भ्रमत्वम्, भ्रमत्वाभावद् मुक्तिरापद्येत; किन्त्विदं न वक्तव्यम्, यतस्तादृशज्ञानसामग्रीकाले सामग्रीसम्भवाद् गौरोऽहं जानामि स्थूलोऽहं जानामीत्याकारकतया गौरादेरपि भानसम्भवादात्मनि च गौरत्वादेर्बाधितत्वाद् भ्रमत्वं सिद्धमेव, न तज्ज्ञानाद् मुक्तिप्रसङ्गः।

वस्तुतोऽहं शरीराद्भिन्नः, नाऽहं गौरः, न वा स्थूलोऽहमित्यादिज्ञानमेव तत्त्वज्ञानम्, सम्प्रति श्रवणादिभिस्तादृशज्ञाने जातेऽपि तस्याप्रामाण्यज्ञानानास्कन्दितत्वाभावान्न तत्र मुक्तिकार्यकारणत्वम्। अत एव कुसुमाञ्जलौ— इदानीं तत्त्वज्ञानमतत्त्वज्ञानमेवेत्युक्तमाचार्यैः। अतत्त्वज्ञानमित्यस्य तत्त्वज्ञानकार्यकारित्वाभावादित्यर्थः। एवमस्य शरीराद्भिन्नोऽहमिति ज्ञाने जातेऽपि दिवसान्तरे शरीराभेदावगाहि गौरोऽहमित्याकारकं ज्ञानमपि जायते। अत एव प्राथमिकज्ञानादपि न मुक्तिरपि तु स्वसमानाधिकरणं मिथ्याज्ञानप्रागभावासमानकालीनस्यैव तत्त्वज्ञानस्य मुक्तौ हेतुत्वम्। इदानीन्तनपदार्थज्ञानभाविमिथ्याज्ञानप्राग्भावसमान-कालीनत्वान्नैतज्ज्ञानान्मुक्तिः।

केचनैवं प्रतिपादयन्ति यन्मुक्तिमात्रं प्रति विजातीयतत्त्वज्ञानं कारणं तच्च मुक्त्यवहितप्राक्कालावच्छेदेनैव भवितुं शक्यते। देहादभिन्नोऽहमिति ज्ञाने सत्यपि इदानीं मुक्त्यभावान्न तादृशज्ञाने मुक्तिजनकतावच्छेदकीभूतवैजात्यमिति फलानुरोधात्कल्पनीयम्।

अत्र यथा विजातीयतत्त्वज्ञानस्य कारणत्वं तथैव विजातीयवायुसंयोगस्यापि विनिगमनाविरहात् कारणत्वं स्यादित्युच्यते चेत्, तन्न वाच्यम्, यतो विजातीयतत्त्वज्ञानस्य कारणत्वेन श्रुतिः उपस्थाप्यते— 'तत्त्वज्ञानाद् भवेन्मुक्तिर्नान्यथा जन्मकोटिभिः'। एवञ्च—'तमेव' विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय, अतो विजातीयतत्त्वज्ञानस्य मुक्तिकारणत्वे न काप्यनुपपत्तिरतिप्रसक्तिर्वा।

एकस्मिन् तत्त्वज्ञाने जाते न पुनस्तत्त्वज्ञानान्तरमपेक्ष्यते गौरवादित्येवं ये वदन्ति, तन्न सम्यक्, आत्ममनःसंयोगत्वङ्मनःसंयोगयोरवच्छेदकस्य शरीरस्य सत्त्वेन ज्ञानं भवत्येव, न हि तत्र किमपि बाधकं सामग्रीसत्त्वे कार्यमवश्यजननाद् गौरवभिया सामग्र्याः, न हि कार्यानुत्पादः, गौरवस्याकिञ्चित्करत्वात्। न च तत्त्वज्ञाने कथं देहस्तिष्ठति तद्धेतुभूतानां कर्मणां तत्त्वज्ञानेन नाशादिति वाच्यम्, प्रारब्धकर्मणां भोगैकनाश्यत्वात्, अत एव शुकनारदादीनामपि तत्त्वज्ञानवतां शरीराणि।

मुक्तिं प्रति तत्त्वज्ञानस्य कारणत्वं न सामीचीन्यं भजते, काश्यां मरणान्मुक्तिरिति वचनेन तत्र व्यभिचारात्। एवं गीतादिस्मृतिग्रन्थेषु स्ववर्णाश्रमानुकूलकर्मणा मुक्तिर्भवतीत्यादिना कर्मणैव मोक्षस्य प्रतिपादनाद् व्यभिचार इति कथनं न युक्तियुक्तम्, यतो ज्ञानमन्तरा कर्मणा न कुत्रापि मुक्तिः, तत्त्वज्ञानस्यैव मुक्तौ कारणत्वात्। कर्मजन्यमुक्तिस्थलेऽपि मरणात्पूर्वं परतो वा तत्त्वज्ञाने जात एव मुक्तिः, अत एव काश्यां मरणान्मुक्तिरित्यत्र पञ्चम्याः प्रयोजकत्वमर्थ इति न कुत्रापि व्यभिचारः। तत्त्वज्ञानस्यैव मोक्षकारणत्वमिति सुस्थिरः सिद्धान्तः।

किञ्च तत्त्वज्ञाने सति मोक्षाय न कर्माण्यपेक्ष्यन्ते, अत एव पूर्वजन्मकर्मणो जाततत्त्वज्ञानस्य जडभरतस्य विनापि कर्म मुक्तिर्जाता।

ननु मुक्तिं प्रति मिथ्याज्ञानाभाव एव कारणमस्तु, किं तत्त्वज्ञानकल्पनेन? मुक्तेः पूर्वं मिथ्याज्ञानाभावस्य तत्त्वज्ञानकारणतावादिनाप्यवश्यमभ्युपगमात्। न च सुषुप्तिकाले मिथ्याज्ञानस्यासत्त्वात् कथं न मुक्तिरिति वाच्यम्, मिथ्याज्ञानप्रागभावासमानकालीनस्यैव मिथ्याज्ञानाभावस्य मुक्तिकारणत्वात्। किन्तु मिथ्याज्ञानापेक्षया तत्त्वज्ञानस्यैव हेतुत्वकल्पने लाघवम्। शास्त्रेषु प्रमाणमपि यथा—

भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे।।

तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय।।

'आत्यन्तिकदुःखनिवृत्तिर्मोक्षः' इत्यत्र आत्यन्तिकत्वं दुःखप्रागभावासामानाधिकरण्यं बोध्यम्। आशयः खल्वयमापाततो यद्दुःखध्वंसः सदुःखप्रागभावसमानाधिकरणः। यत एकस्मिन्नेवात्मनि केषाञ्चिद्दुःखानां ध्वंसः, केषाञ्चिद्भाविदुःखानाञ्च प्रागभावो विद्यतेऽत एकाधिकरणवृत्तित्वादुभयोर्दुःखध्वंसप्रागभावयोः सामानाधिकरण्यम्, तन्न मुक्तिपदवाच्यम्; अपि तु दुःखप्रागभावासमानाधिकरणदुःखध्वंस एव मोक्षपदवाच्यः, स च तदानीमेव सम्भवति यदा दुःखमात्रस्योच्छेदः स्यात्। दुःखानुत्पादरूपो दुःखप्रागभावस्तु न मोक्षोऽपि तु दुःखप्रागभावासामानाधिकरण्यरूपात्यन्तिकदुःखनिवृत्तिरेव मोक्षत्वं भजते।

न च दुःखात्यन्ताभावस्यैव मोक्षत्वं स्यात्, किं तर्हि दुःखध्वंसनेनेत्याशङ्कनं न समीचीनम्, यतोऽत्यन्ताभावस्य नित्यत्वात् तस्य साध्यत्वाभावाद् कथं पुरुषार्थत्वमतो दुःखध्वंस एव मोक्षः, न तु दुःखात्यन्ताभावः।

अत्रेदमवधेयं यत् चरमदुःखध्वंस एवापवर्ग इत्येवमभ्युपगमे चरमदुःखमपि साधनीयम्, यतोऽभावबुद्धौ प्रतियोगिज्ञानं कारणं भवतीति नियमानुरोधेन दुःखध्वंसात् प्राग् दुःखसिद्धिरपेक्ष्या। किञ्च दुःखं नेष्टं केषाञ्चिदपि तत्र कथं दुःखे प्रवृत्तिर्जनानामित्याक्षेपस्य समाधानमुच्यते—यथा रोगनिवृत्तयेऽतिशयकटुतिक्तौषधिभक्षणे लोके प्रवृत्तिर्दृश्यते, यथा चासह्यवेदनोत्पादिकायां शल्यचिकित्सायां प्रवृत्तिर्जायते, तथैव दुःखात्यन्तिकनिवृत्तये निखिल-दुःखविनाशार्थं वा दुःखविषयिणीप्रवृत्तिः स्वाभाविकी एव।

न चात्यन्तिकदुःखनिवृत्तिरेव मोक्षः, अपि तु मुक्तात्मनि समेषामात्मविशेषगुणानां लयोऽपेक्ष्यते। अविनाशे सति वासनाया न कथमपि दुःखनिवृत्तिः, वासनाविनाशश्च गगनकुसुमायमानतुल्यम्। जगति नैकोऽप्येतादृशो जीवो यन्मनसि सुखेप्सा न स्यात्, सत्यां सुखेप्सायां दुःखमपरिहार्यम्। सुखेप्सया क्रियमाणस्य कर्मणो वैपरीत्ये वैगुण्ये वा दुःखमुत्पद्यतेऽतो आत्मविशेषगुणानां निर्मूलोच्छेद एव मोक्षः। तदुक्तं जयन्तभट्टेन अपवर्गप्रकरणे —

'बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराणां निर्मूलोच्छेदोऽपवर्गः,। (न्यायमञ्जरी, अपवर्गप्रकरणे)

आत्मनः स्वस्वरूपावस्थानमेव मोक्षः। तदुक्तं न्यायमञ्जर्याम् —

'स्वरूपैकप्रतिष्ठानः परित्यक्तो ह्यखिलैर्गुणैः।
यदात्मगुणाः सर्वे नोच्छिन्ना वासनादयः।।
तावदात्यन्तिकी दुःखव्यावृत्तिर्नावकल्पते'।।

वैशेषिकदर्शनेऽपि महर्षिकणादेन एवमुक्तम् —

'अदृष्टजदेहेन सह सम्बन्धविच्छेद एव मोक्षः'।।

अत्रेदानीं चिन्तनीयं दुःखात्यन्तिकनिवृत्तिरूपमोक्षावस्थायां सुखादिकं जायते, न वेति वेदान्तिनां मते केषाञ्चिन्नैयायिकानां मतेऽपि मुक्तात्मनि सुखादिकं जायते, किञ्च गौतमादिमते न सुखम्, तेषां मते 'नित्यविज्ञानानन्दं ब्रह्म, सच्चिदानन्दं ब्रह्म' इत्यादिस्थलेषु आनन्दपदं दुःखाभावपरम्, न तु सुखादिबोधनपरम्। यथा लौकिकव्यवहारेऽप्यनुभूयते—ज्वरपीडितपुरुषो दुःखमनुभवति, नष्टे सति ज्वरे सुखमनुभवति। यद्यपि नहि तेन ज्वरपीडितेन पुरुषेण ज्वराभावातिरिक्तं किमपि प्राप्तम्, तथापि सुखमनुभूयते, तत्र दुःखाभाव एव हेतुः। एवमेव भाराद्यपगमे सति

भारवाहकः सुखमनुभवति, तत्रापि भारवाहकेण पुरुषेण भारापनयनातिरिक्तं सुखजनकं न किमपि वस्तु प्राप्तम्; किन्तु सुखमनुभूयतेऽतो भारापनयनं भारशून्यत्वं वा तस्य सुखमतो न मुक्तात्मनि सुखादिकल्पना। विवेकिनः सुखेऽपि दुःखमेवानुभवन्ति। तदुक्तम्—'सुखमपि हातुमिच्छति..........'।

भासर्वज्ञानुयायिनः केचननैयायिका मुक्तात्मनि सुखानुभूतिं कल्पयन्ति —

'सुखमात्यन्तिकं यत्र बुद्धिग्राह्यमतीन्द्रियम्।
तं वै मोक्षं विजानीयाद् दुष्प्राप्यमकृतात्मभिः'।।

इमां श्रुतिमाधारीकृत्य न्यायसारग्रन्थे अनेन सुखेन विशिष्टा आत्यन्तिकी दुःखनिवृत्तिः पुरुषस्य मोक्ष इति प्रतिपादयन्ति। एवं न्यायसारग्रन्थस्य टीकाकारेण जपतीर्थेनापि—सुखेनेति पदेन कणादमते मोक्षप्रतिक्षेपः।

भूषणमते — नित्यसुखसंवेदनसिद्धिरपवर्गसाधिता।

सर्वमतसङ्ग्रहे— मोक्षस्तु न दुःखनिवृत्तिमात्रं नित्यसुखस्याविर्भावोऽपि; किन्त्वेषां नैयायिकानां मतमविचाररमणीयं यतो यदि सुखमभिलक्ष्य मुक्तौ प्रवृत्तिः, तर्हि प्रवृत्त्या रागवशान्न कदाचिन्मोक्षः। रागिणां कोटिकल्पेऽपि न मुक्तिरिति सिद्धान्त इति।।



# वैशेषिकदर्शने व्याप्तिविमर्शः

**डॉ. शशिप्रभा-कुमार**

उपाचार्या, दर्शनविभागस्य

दिल्लीविश्वविद्यालये



वैशेषिकदर्शनं मूलतः प्रमेयशास्त्रमिति प्रथितमस्ति, तत्र प्रमाणनिरूपणं तु गौणतयैव प्रतिपादितमत्र नास्ति विदुषां वैमत्यम्। वैशेषिकदर्शनप्रवर्तकेन महर्षिणा कणादेन प्रमाणद्वयमेवाङ्गीकृतम्—प्रत्यक्षमनुमानञ्च। तत्रापि अनुमानप्रमाणस्य विवेचनं तेन लैङ्गिकज्ञानमिति व्यपदेशेन विहितम्—'अस्येदं कार्यं कारणं संयोगि विरोधि समवायि चेति लैङ्गिकम्'[1]।

सूत्रमिदं व्याख्यायता उपस्कारकारेण शङ्करमिश्रेण लैङ्गिकज्ञानस्य अनुमानस्य स्वरूपमित्थं प्रतिपादितम्—'लिङ्गाज्जातं लैङ्गिकं व्याप्तिविशिष्टः पक्षधर्मो लिङ्गमिति'। लैङ्गिकलिङ्गयोरनेन प्रतिपादनेनैव वैशेषिकदर्शने व्याप्तिविवेचनस्य महत्त्वं भृशं सुव्यज्यते, तस्य महत्त्वस्योद्भावनमेवास्य लघुप्रपत्रस्य प्रयोजनम्।

अत्रेदम्प्रथमतया उल्लेखनीयं यत् प्रमाणमीमांसाविषये प्रायशो वैशेषिकाचार्याणां नैयायिकैः सह मतैक्यमेव संलक्ष्यते, परमस्मिन्निबन्धे मुख्यरूपेण केवलं वैशेषिकसूत्र-भाष्य-टीकाग्रन्थानधिकृत्य किञ्चिद् विवेचनं तत्र विधीयते। तथा ह्यनुमीयतेऽनेनेत्यनुमानमिति व्युत्पत्त्या अनुमितिकरणमनुमानम्। किं तदनुमितिकरणम् ? तत्र व्याप्यत्वेन ज्ञायमानं लिङ्गमेवानुमितिकरणमिति प्राचीनवैशेषिकाः[2]। अत्र लिङ्गपदनिर्वचनेन ज्ञायते 'लीनमर्थं गमयतीति लिङ्गम्'[3] अथवा 'लिङ्ग्यते

---

१. वैशेषिकसूत्रम्-९।२।१।

२. यदनुमेयेन सम्बद्धं प्रसिद्धं च तदन्विते।
तदभावे च नास्त्येव तल्लिङ्गमनुमापकम्।। (प्र.पा.भा., पृ., ४७८ पदार्थधर्मसङ्ग्रहः)

३. सिद्धान्तचन्द्रोदये-२, पृ. २५।

गम्यतेऽर्थोऽनेनेति लिङ्गम्, लिङ्गञ्च दृष्टमनुमितं श्रुतं वा यदनुभवरूपं ज्ञानं जनयति तल्लैङ्गिकम्, एतेन लिङ्गमेवानुमितिकरणम्, यथाह शङ्करमिश्रः — 'एतेन लिङ्गमेवानुमितिकरणं न तु तस्य परामर्शः, तस्य निर्व्यापारत्वेनाकरणत्वात्, लिङ्गस्य तु स एव व्यापारः'[१]। अनेनेदमपि स्पष्टीभवति यत्प्राचीनवैशेषिकमते व्यापारवतो लिङ्गस्यैव प्रमाणत्वमभिमतमासीन्न तु व्यापारस्य परामर्शस्य। तत्र केचन नव्याचार्या व्याप्तिमेवानुमानस्य करणरूपे स्वीकुर्वन्ति, तेषां मतेऽनुमिति-करणत्वमनुमानस्य लक्षणम्। अनुमानं च व्याप्तिज्ञानम्[२]। यतो हि अनुमितौ व्याप्तिज्ञानं करणं परमर्शो व्यापारोऽनुमितिः फलं कार्यमित्यर्थः। व्याप्तिज्ञानस्य परामर्शरूपव्यापारद्वाराऽनुमितिं प्रत्यसाधारणकारणतयाऽनुमितिकरणत्वमनुपपन्नम्। एवमेवाह कारिकावलीकारः — 'व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत्'[३]। तदत्र उभयवादिनयेऽपि व्याप्तिरेवानुमितौ प्रमुखं स्थानमधिरोहति— व्याप्तिबलेनैव लिङ्गमर्थगमकं भवतीति निःसन्दिग्धमेव। प्रशस्तपादस्य त्रयोऽपि व्याख्यातारो भिन्नतया वर्णयन्त्यनुमानस्वरूपम्, तद्यथा व्योमवतीकारः परामर्शज्ञानमेव साधकतमत्वापेक्षयाऽनुमानं[४] कथयति। श्रीधराचार्यः पक्षधर्मताज्ञानरूपं लिङ्गदर्शनम्'[५] उदयनाचार्यश्च परामृश्यमाणं लिङ्गमेव'[६] परं व्याप्तिविषये तु ते सर्वेऽपि सहमताः। सेतुटीकाकारः पद्मनाभमिश्रस्तु व्याप्तिज्ञानमनुमानमिति मतं समुद्धरति[७]। अत एव वैशेषिकदर्शनेऽनुमाननिरूपणस्थले व्याप्तिज्ञानस्य प्रचुरं वर्णनं प्राप्यते।

वैशेषिकदर्शनग्रन्थानामध्ययनेन विज्ञायते यत्तत्र व्याप्तिविवेचनं विविधै-र्विशेषणैर्विहितमस्ति, तद्यथा—प्रसिद्धिः, समयः, अविनाभावः, साहचर्यम्, सामानाधिकरण्यम्, नियमः, अव्यभिचारः, प्रतिबन्धः, विशिष्टसम्बन्धः, व्याप्तिश्च। तत्र प्रयुक्तैरेभिः पदैरेव व्याप्तिस्वरूपविषये प्रभूततथ्याः प्रकाशिता भवन्तीति मत्वाऽत्र तेषां पृथङ् निर्देशः प्रस्तूयते —

---

१. उपस्कारे, पृ. ४८६-४८७।
२. न्यायबोधिनी (तर्कसङ्ग्रहटीका), पृ. ३५।
३. भाषापरिच्छेदः; ४. व्योमवती, पृ. ५६३।
५. न्यायकन्दली, पृ. ४९२; ६. किरणावली, पृ. ५४६।
७. सेतु., पृ. १००।

**क. प्रसिद्धिः**

वैशेषिकसूत्रकारेण महर्षिणा कणादेन लैङ्गिकज्ञाननिरूपणावसरे साध्यानुमापकस्य लिङ्गस्य साध्यसम्बन्धो व्याप्तिरूपो न निर्दिष्टः, तेनात्मानुमान-प्रसङ्गे प्रसिद्धिपदेन व्याप्तिनिर्देशः कृतः 'प्रसिद्धिपूर्वकत्वादपदेशस्य'[१] इत्यस्मिन् सूत्रे। अत्रापदेशो हेतुवाचकः, हेतुश्च प्रसिद्धिपूर्वकः (व्याप्तिविशिष्टः) एव साध्यं साधयितुं क्षम इति तस्याभिप्रायः। 'तत्र प्रसिद्धिः स्मर्यमाणा व्याप्तिः' इति स्पष्ट-मुवाच उपस्कारकारः। अनेन पदेन सूच्यते यदनुमितौ लिङ्गलिङ्गिनोः सम्बन्धः प्रसिद्धः परिज्ञातो वा। अत एव साध्यसाधनयोर्व्याप्तिः कणादेन प्रसिद्धिरित्युक्ता[२]।

**ख. समयः**

अनुमेयप्रतीतिप्रकारं प्रकाशयन् भाष्यकारः प्रशस्तपादो व्याप्तिं समय-पदेनाभिदधे—'विधिस्तु यत्र धूमस्तत्राग्निरग्न्यभावे धूमोऽपि न भवतीत्येवं प्रसिद्धसमयस्य'[३].........। समयः खलु नियमबन्धः सिद्धान्तश्चेति कोशकाराः[४]। अत एव हि भाष्यकारेणापि व्याप्यव्यापकयोर्व्याप्तिसम्बन्धः समय इत्युदाहृतः।

**ग. अविनाभावः**

प्रशस्तपादप्रयुक्तं प्रसिद्धसमयस्य विशेषणं विस्पष्टीकुर्वन्न्यायकन्दलीकारः श्रीधराचार्यो व्याहरति—

'प्रसिद्धः समयोऽविनाभावो यस्य पुरुषस्य तस्य'[५]......। अनेन व्याप्तिः साधनसाध्ययोरविनाभाव इति सूच्यते। लिङ्गं नागृहीताविनाभावस्य गमकमत एव तत्राविनाभावोऽनिवार्यः। व्योमशिवोदयनाचार्ययोरप्येतन्मतम्[६]। अत्रेदमप्यवधेयं यद् व्याप्यव्यापकयोरविनाभावोऽयं देशकालसन्दर्भे निर्धारणीयः[७]।

---

१. वै.सू. ९।२।१।

२. न्यायमीमांसादर्शनयोः प्रमाणविचारः, एस.बी. रघुनाथाचार्यः, पृ. १२३।

३. पदार्थधर्मसङ्ग्रहः, पृ. ४९१,५१२; ४. न्यायकोशः, पृ. ९५९।

५. न्यायकन्दली, पृ. ५१२-५१३।

६. (क) व्याप्तिरविनाभाव इति। (व्योमवती, पृ. ५७०)
(ख) विधिस्तु अविनाभावग्रहणप्रकारः। (किरणा., पृ. २९५)

७. पदार्थधर्मसङ्ग्रहः, पृ. ५०३।

### घ. साहचर्यम्

वैशेषिकसूत्राणां भाष्यकारेण प्रशस्तपादेन व्याप्तिविधिविवेचनावसरे साहचर्यानुस्मरणमप्यभिहितम्, यत्र धूमस्तत्राग्निरिति स्मरणमेव साहचर्यानुस्मरणमिति, तद्विना तु अग्नेरनुमानं नैव सम्भवति, तदनन्तरमेव जायते। अतः खलु हेतुसाध्ययोर्न केवलमविनाभावः, अपि तु साहचर्यं सहभावो वा व्याप्तिरिति[१]। साहचर्यमिदं नियतमेव भवितव्यमत्र तु न कापि विप्रतिपत्तिः।

### ङ सामानाधिकरण्यम्

व्याप्यव्यापकयोः साहचर्यं तत्र सामानाधिकरण्यं सूचयति, एकाधिकरणवृत्तित्वं वा। नव्याचार्यैस्तु व्याप्तिलक्षणेऽस्य पदस्य प्रयोगो भूरिशः कृतः, तस्याशयस्त्वयमेव यत्साध्यं व्यापकं वा सदैव हेतुना व्याप्येन सहैकस्मिन्नधिकरणे भवितव्यमिति। एतदेवोक्तं तर्कदीपिकायाम्— 'साहचर्यं सामानाधिकरण्यं तस्य नियमः। हेतुसमानाधिकरणात्यन्ताभावप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिः'[२]। अथवा अवश्यम्भावि यत् सामानाधिकरण्यं तदेव व्याप्तिरित्यर्थः[३]।

### च. नियमः

अत्रैतदप्युल्लेख्यं भवति यल्लिङ्गलिङ्गिनोर्न केवलं साहचर्यं सामानाधिकरण्यमपि तु नियमेन सहभावोऽनिवार्यः, व्याप्तिहेतोः। अत एव वैशेषिकाचार्यैः प्रतिपादितम्— 'यद्यपि प्रथमदर्शनेऽपि सहभावो गृहीतस्थापि न नियमग्रहणम्। न हि सहभावमात्रान्नियमः, अपि तु निरुपाधिकसहभावात्[४]'। अतः खलु नियमपदोऽपि व्याप्तेर्वाचकः, न्यायमञ्जर्यामपि[५] तथैव प्रयुक्तोऽयम्। अस्य नियमस्य सुदृढस्थापनायैवात्राग्रिमं विशेषणपदं व्यवहृतम्।

### छ. अव्यभिचारः

नियमस्य निरपवाद एवाव्यभिचार इति व्याप्तिनियमे व्याभिचाराभावोऽप्यनिवार्यतयाऽङ्गीकृतः। तत्र साध्याभाववद्वृत्तित्वं व्यभिचारः, तस्याभाव एवाव्यभिचारः, सोऽपि व्याप्तिसम्बन्धस्य घटकः। अत एव विश्वनाथेन व्याप्तिलक्षणं साध्याभाववदवृत्तित्वं प्रकीर्तितम्। यद्वा साध्यवदन्यस्मिन्नसम्बन्ध उदाहृतः[६]।

---

१. तर्कसङ्ग्रहः, पृ. ४७-४८; २. त.दी., पृ. ३५।
३. न्यायदर्शनविमर्शः, कालीप्रसादसिंहः, पृ. १५१।
४. न्यायकन्दली, पृ. ५००।
५. अयमेवाविनाभावो नियमः सहचारिता। (न्या.मं. १, पृ. १२१)
६. कारिकावली, ६८।

परं कथमयमव्यभिचारो निश्चीयते नाम? तत्र तादात्म्यतदुत्पत्तिभ्यामिति बौद्धमतं निराकुर्वन्नाह कन्दलीकारः — 'किं यत्र तादात्म्यतदुत्पत्ती तत्राव्यभिचारः? किं वा यत्राव्यभिचारस्तत्र तादात्म्यतदुत्पत्ती? न तावदाद्यः कल्पः, सत्यपि तदुत्पादे धूमधर्मस्य पार्थिवत्वादेरग्निव्यभिचारात्। सत्यपि तादात्म्ये वृक्षत्वस्य विशेषाद् व्यभिचारात्। अथ यत्राव्यभिचारस्तत्र तादात्म्यतदुत्पत्ती तर्ह्यव्यभिचारसत्त्वे तयोर्गमकत्वम्। एवं चेत्, अव्यभिचार एवास्तु गमकः, किं तादात्म्यतदुत्पत्तिभ्याम्[1]? कार्यमपि हि न कार्यमित्येव गमयतीति, नापि स्वभावः स्वभाव इति, किं तर्हि? तदव्यभिचारीति, अव्यभिचार एव गमकत्वे कारणम्, न तादात्म्यतदुत्पत्ती, व्यभिचारात्[2]।

अत्रैतदप्यवधेयं यद्धेतुसाध्ययोः सम्बन्धेऽव्यभिचारस्तु लिङ्गस्यैव भवतीति वैशेषिकाणां मतम्; तदेव हि तस्य लिङ्गं भवति यद्यस्याव्यभिचारि। अस्यार्थो यद् व्यापकस्य व्याप्यव्यभिचारस्तु भवत्येव, परं व्याप्यस्य व्यापकव्यभिचारो न भवितव्य इति। अतः खलु व्याप्यैकनियता व्याप्तिर्न संयोगवदुभयत्र व्यासज्यते, व्यापकस्य व्याप्यव्यभिचारात्। यत्रापि समव्याप्तिके कृतकत्वानित्यत्वादौ व्याप्यस्यापि व्यापकत्वमस्ति, तत्रापि व्याप्यत्वरूपं समाश्रित्यैव व्याप्तिर्न व्यापकरूपाश्रयात्, व्यभिचारिण्यपि तद्रूपस्यापि सम्भवात्[3]। अत एव व्याप्तिर्व्याप्यगतत्वेन दर्शनीया, 'यत् क्रियावत् तद् द्रव्यमि'ति न व्यापकगतत्वेन तत्र तस्या अभावात्।

**ज. प्रतिबन्धः**

अनुमानस्य प्रामाण्यं प्रतिष्ठापयता न्यायलीलावतीकारेण वल्लभाचार्येण 'तत्प्रतिबन्धसिद्धिसापेक्षम्' इति कथितम्[4]। अत्र तेन प्रतिबन्धपदं व्याप्तिविषये प्रयुक्तमपि च प्रतिपादितं यत् 'स (प्रतिबन्धः) च न सामान्ययोः, यत्र धूमत्वं यद् धूमत्वमिति वा नियमायोगात्,। तत्रैव च— 'व्यक्त्यन्तर्भावेण नियतत्वे कतिपयान्तर्भावेण सर्वोपसंहारवती व्याप्तिः, इत्यभिहितम्। स्पष्टमेवात्र तस्याभिप्रायोऽयं यद् द्वयोः सामान्ययोर्न साक्षात्प्रतिबन्धो भवति, परं व्यक्तिमाध्यमेनैव भवितुमर्हति। यद्यपि न तस्य मतं निर्दुष्टम्[5]; परमिदन्तु सुवचमेव

---

१. न्यायकन्दली, पृ. ४९४; २. तत्रैव।
३. तत्रैव, पृ. ५०७,६०२-६०३; ४. न्यायलीलावती, पृ. ४८९।
५. माथुरी पञ्चलक्षणी, श्रीबदरीनाथशुक्लः, पृ. ८६।

यत्तेनात्र प्रतिबन्धो व्याप्तिवाचकत्वेन प्रयुक्त इति। अपि च तेन 'साधनस्य साध्यसाहित्यं कात्स्न्यें'[१] इति वचनेन साधने हेतौ वा साध्यस्य समग्रं साहचर्यमेव व्याप्तिरिति लक्षितम्। 'अत्र साहित्यम्' साहचर्यमेवाभिव्यनक्ति।

**झ. विशिष्टः सम्बन्धः**

व्यापकस्य व्याप्याधिकरणोपाध्यभावविशिष्टः सम्बन्धो व्याप्तिरिति शिवादित्यः सप्तपदार्थ्यां प्राह[२]। अनेन सुव्यक्तं यत् साधनसाध्ययोर्लिङ्गलिङ्गिनोर्वा विशिष्टः सम्बन्ध एव व्याप्तिः। यथोक्तं न्यायमञ्जरीकारेणापि — 'यद्दर्शनाद् यत्र यस्य प्रतीतिर्भवति, अस्ति कश्चन सम्बन्धस्तयोरर्थयोः। ......... साहचर्यमेव स सम्बन्धः। अयमेवाविनाभाव इत्युच्यते'[३]।

**ञ. व्याप्तिः**

व्याप्तिः खलु 'वि + आप्तिः' विशेषेणाप्तिरिति, तत्र वैशिष्ट्यञ्च द्वयोर्वस्तुनोर्नियतं साहचर्यमेव प्रतिभाति। वैशेषिकदर्शने हेतुसाध्ययोरिदं साहचर्यं सूचयितुं यद्यपि उपरिदर्शितानि नैकानि पदानि प्रयुक्तानि, सूत्रकारेण च 'प्रसिद्धिः'-पदेनास्य निर्देशः कृतः, परं परवर्तिनि काले न्यायदर्शनस्य समानतन्त्रत्वेन व्याप्तिरिति प्रसिद्धपदस्यैव प्रयोगः प्रचलितोऽभूत्। शब्दादीनामनुमानेऽन्तर्भावं प्रदर्शयता श्रीधराचार्येण व्याप्यव्यापकयोः सम्बन्धममुं प्रकाशयितुं 'व्याप्ति'पद एव प्रयुक्तः[४]। अन्यत्रापि पञ्चावयववाक्ये निदर्शननिर्वचनावसरे सः कथयति— 'निदर्श्यते निश्चिता साध्यसाधनयोर्व्याप्तिरस्मिन्निति निदर्शनं दृष्टान्तः''[५]।

तदित्थमुक्तविशेषणानां विवेचनेन विज्ञायते यद् व्याप्तिः खलु व्याप्यव्यापकयोरैकान्तिको नियतो सम्बन्धः प्रतिबन्धो वेति। तस्य प्रकटनाय वैशेषिकग्रन्थेषु प्रयुक्तानि उपर्युक्तानि पदानि न हि समानार्थव्यञ्जकानि परं तस्य विविधस्वरूपस्य निदर्शकान्येव प्रतीयन्ते।

**व्याप्तिलक्षणम्**

वैशेषिकदर्शनग्रन्थेषु व्याप्तिलक्षणविषयेऽन्वीक्षणे कृते विज्ञायते यद् उपस्कारकारेण शङ्करमिश्रेण नवमाध्यायस्य द्वितीयपादे प्रथमसूत्रस्य व्याख्यायां

१. न्यायलीलावती, पृ. ४९६; २. सप्तपदार्थी, पृ. ७०।
३. न्या.मं. १, पृ. १२१; ४. न्यायकन्दली, पृ. ५१२।
५. तत्रैव, पृ. ६०६।

प्रश्नोऽयमुत्थापितः — ननु केयं व्याप्तिरिति? तस्योत्तरे च तेन पूर्वपक्षिभिः प्रस्तुतानां विभिन्नलक्षणानां खण्डनं विधाय तदनु स्वाभिमतं सिद्धान्तलक्षणं प्रस्तुतम्, तद्यथा—

### *मीमांसकमतखण्डनम्*

मीमांसकाः खलु 'अव्यभिचरितः सम्बन्धः व्याप्तिः' इति मन्यन्ते। परं न तावदव्यभिचरितः सम्बन्धः सुष्ठूपपद्यते, यतो ह्यव्यभिचरितस्यार्थो व्यभिचरिताभिन्नत्वेन व्यभिचारस्य च साध्यशून्यवृत्तित्वेन क्रियते चेत्, तर्हि केवलान्वयिन्यप्रसिद्धिः, यथा— 'घटो वाच्यः, अप्रमेयत्वात्' इत्यस्मिन् दृष्टान्ते।

### *सिंहव्याघ्रोक्तमतखण्डनम्*

साध्यानधिकरणत्वस्यापि केवलान्वयिनि असम्भवाद् धूमादेरपि यत्किञ्चित् साध्यानधिकरणाधिकरणत्वान्न तावदव्यभिचरितः सम्बन्धो व्याप्तिरिति।

### *बौद्धमतनिराकरणम्*

बौद्धास्तु अविनाभावमेव व्याप्तिं प्रतिपादयन्ति, परं न सोऽविनाभावो व्याप्तिरिति। स हि साध्यं विनाऽभावो हेतोः, साध्ये सति भावो वा हेतोः? न हि द्वावपि एतौ स्वीकार्यौ, यतो हि तत्रापि व्यभिचारः स्यात्, धूमस्यापि क्वचिद्रासभाभावेऽभावात्, रासभसत्त्वे सत्त्वाच्च नियतव्यतिरेको नियतश्चान्वयो विवक्षित इति चेत्, न, नियमस्यैव निरूपणीयत्वात्।

### *न्यायलीलावतीकारमतनिरसनम्*

वल्लभाचार्येण कात्स्न्र्येन सम्बन्धो व्याप्तिरिति व्याप्तिलक्षणं विहितं तदपि न निर्दुष्टम्, स यदि कृत्स्नस्य साध्यस्य साधनसम्बन्धः, स विषमव्याप्ते धूमादावपि नास्ति। अथ कृत्स्नस्य साधनस्य साध्यसम्बन्धः, सोऽप्येकस्य साध्यस्य कृत्स्नसाधने सम्बन्धाभावादनुपपन्नः। अथ कृत्स्नस्य साध्यस्य कृत्स्नेन साधनेन सम्बन्धः। एतदप्ययुक्तम्। न हि कृत्स्नेन साधनेन कृत्स्नस्य साध्यस्य क्वचिदपि सम्बन्धः सम्भवति, प्रत्येकमेव साध्यसाधनयोः सम्बन्धाद् विषमव्याप्ते चाव्याप्तेः[१]।

---

१. उपस्कारे, पृ. २०७-२०८।

### *वाचस्पतिमिश्रमतखण्डनम्*

स्वाभाविकः सम्बन्धो व्याप्तिरिति हि वाचस्पतिमिश्राः, तदप्ययुक्तम्। स्वभावो हि स्वस्य भावो वा स्वमेव भावो वा, तत्र तज्जन्यत्वाच्चेत्तद्धितार्थः, तदा समवायलक्षणायां व्याप्तावव्याप्तेः। तदाश्रितत्वञ्चेत्तद्धितार्थस्तदाऽपि समवायेऽव्याप्तिः, न हि समवायः क्वचिदाश्रितः, संयोगस्यापि हेतुधर्मधूमत्वादजन्यत्वाच्च।

### *उदयनाचार्यमतनिराकरणम्*

उदयनाचार्यास्तु 'अनौपाधिकः सम्बन्धः' व्याप्तिरिति प्राहुः, तदपि न स्वीकरणीयम्, उपाधेरेव दुर्वचत्वात्, सुवचत्वेऽपि दुर्ग्रहत्वात् सुग्रहत्वेऽपि अन्योन्याश्रयत्वात्। साध्यव्यापकत्वे सति साधनाव्यापकत्वादेर्व्याप्तिग्रहाधीनग्रहत्वात्।

### *एकदेशिनैयायिकमतखण्डनम्*

सम्बन्धमात्रं व्याप्तिरिति केचन नैयायिकाः, तदपि न ग्राह्यम्, व्यभिचारिसम्बन्धस्यापि देशविशेषकालविशेषगर्भतया व्याप्तिरूपत्वेऽपि, तज्ज्ञानस्यानुमितावतन्त्रत्वात्, अनुमितिकारणीभूतज्ञानविषयव्याप्तेरेव निरूपयितुमुचितत्वात्।

### *अन्यमतखण्डनम्*

'साधनवन्निष्ठात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिः' इत्यपि न शङ्करमिश्रस्य सम्मतम्, वह्नेरपि धूमवन्निष्ठात्यन्ताभावप्रतियोगित्वात्। न हि धूमवति महानसे पर्वतीयवह्नेर्नात्यन्ताभावः। इदं संयोगी द्रव्यत्वादित्यादौ संयोगात्यन्ताभावस्य साधनसमानाधिकरणत्वादव्यापकताप्रसङ्गादिति।

### सिद्धान्तलक्षणम्

उक्तानां सर्वेषां मतानां दोषान् प्रदर्श्य उपस्कारकारः स्वाभिमतं व्याप्तिलक्षणमेवमाह— 'अनौपाधिकः सम्बन्धो व्याप्तिः'। तत्र उदयनमतात्स्वमतवैशिष्ट्यञ्चाभिव्यनक्ति — 'अनौपाधिकत्वन्तु यावत् स्वव्यभिचारिसाध्यसामानाधिकरण्यम्, यावत्स्वसमानाधिकरणात्यन्ताभावप्रतियोगी प्रतियोगिकात्यन्ताभावसमानाधिकरणसाध्यसामानाधिकरण्यं वा'[1]।

---

१. उपस्कारे, पृ. २०८-२१३।

स्पष्टमेव यदेतानि लक्षणानि नव्यन्यायशैल्यां निरूपितान्यतीवजटिलानि, अतः सुगमावबोधाय वैशेषिकसिद्धान्तानुसारि एकं लक्षणमिदं निरूपयितुं शक्यते यत्—'शङ्कितनिश्चितोभयविधव्यभिचाराभावपूर्वको हेतोः साध्येन सहचारो व्याप्तिः'[१] इति। यद्यपि व्यभिचारशङ्का तु सर्वत्र स्यात्, अस्ति च, तथापि यदि अनुकूलतर्केण सा शङ्का निवर्त्यते तर्हि व्यभिचारसन्देहाभाव एवं कथ्यते। तर्केण व्यभिचारो व्यभिचाराभावश्च द्वावेव निश्चीयेते। अस्य तर्कस्य रूपमित्थं घटितं भविष्यति—'धूमो यदि वह्निव्यभिचारी स्यात् तर्हि वह्निजन्यो न स्यात्'। अत एव व्याप्तिग्रहाय वैशेषिकदर्शने भूयो दर्शनापेक्षा तर्कापेक्षा[२] च उभे एव स्वीक्रियेते। यथा तर्ककौमुदीकारेणोक्तम्— 'व्यभिचारज्ञानविरहसहकृतं हेतुसाध्यसहचारदर्शनं व्याप्तिग्राहकं भवती'ति[३]। सा चेयं व्याप्तिर्भूयोदर्शनग्राह्या अन्वयव्यतिरेकभेदेन शास्त्रेऽस्मिन् द्विधा भिद्यते— अन्वयव्याप्तिः, व्यतिरेकव्याप्तिश्च। तद् भावयोः साधनसाध्ययोः साहचर्यमन्वयव्याप्तिः, साध्याभावसाधनाभावयोरभावश्च व्यतिरेकव्याप्तिः, यथा साध्यं व्यापकं साधनं व्याप्यम्, तथा साध्याभावो व्याप्यः साधनाभावश्च व्यापकः। यथोक्तम् —

'नियम्यत्वनियन्तृत्वे भावयोर्यादृशे मते।
विपरीते प्रतीयेते त एव तदभावयोः'[४]।।

तत्र यद्यपि प्रथमदर्शनेऽपि साधनसाध्ययोः सहभावो गृहीतः, तथापि न नियमग्रहणम्। न हि सहभावमात्रान्नियमः सिद्ध्यति, अपि तु निरुपाधिकसहभावात्। निरुपाधिकत्वं च तस्य भूयोदर्शनाभ्यासावशेषमित्यतो भूयःसहभावग्रहणबलभुवा सविकल्पकप्रत्यक्षेण सोऽध्यवसीयत इति व्याप्तिग्रहप्रकारः। एतेन प्रत्यक्षे उपलब्धविद्यमानविषयत्वादतीतानागतासु व्यक्तिषु कथं व्याप्तिग्रहणमिति च प्रत्युक्तं भवति।

अत्रेदमप्यवधेयं यद् वैशेषिकदर्शने न हि विशेषनिष्ठं व्याप्तिग्रहणं स्वीक्रियते, अपि तु विशेषं विहाय सामान्येनैव व्याप्तिग्रहणं समीचीनं तेषां मते, यतो हि तत् सर्वत्रैवैकरूपमिति। व्यक्तयोऽपि व्याप्तौ गृह्यन्ते परं सामान्यरूपतयैव, न विशेषरूपेण[५]। अत एव धूमसंवित्त्या वह्निमात्रमेवानुमिमानस्तमनुधावति, न

१. वैशेषिक दर्शन : एक अध्ययन, श्रीनारायण मिश्र, पृ. १७५।
२. उपस्कारे, पृ. २१३;
३. तर्ककौमुदी।
४. न्या.क., पृ. ६०५;
५. तत्रैव, पृ. ५००-५०१।

विशेषमाद्रियते। यदि च सामान्येन सर्वत्र निश्चितेऽपि नियमे निष्प्रामाणिकैराशङ्का क्रियते, तदा तु प्रत्यक्षेण दृष्टासु वह्निधूमव्यक्तिषु गृहीतेऽपि कार्यकारणभावे देशकालव्यवहितात् तद्भावसन्देहो भविष्यति, का कथाऽनुमानस्य?

तदित्थं वैशेषिकदर्शने व्याप्तिस्वरूपं तद्ग्रहोपायानाञ्च विषये विविच्यमाने ज्ञातं भवति यदत्रानुमानं महत्त्वपूर्णं प्रमाणमिति, तच्च व्याप्तिज्ञानाधीनमेवेति[१]। अत एवात्र व्याप्तिविवेचनं विशदतया कृतम्। यद्यप्यस्मिन् विषये वैशेषिकानां नैयायिकैः सह सम्मतिरेवाभिलक्ष्यते, तथापि यत्र तत्र केचन मौलिका विचारा अपि प्रकटिताः, तेषां प्रकाशनमेवात्र सङ्केतितमित्यलं विस्तरेण।



१. सर्वदर्शनसङ्ग्रहे, पृ. ३९४।

# मोक्षप्राप्तौ मनसः प्राधान्यम्

**श्रीमती महेश्वरिपिल्ला एस.**

प्राध्यापिका, वेदान्तविभागस्य

श्रीशङ्कराचार्यविश्वविद्यालये, क्षेत्रीयकेन्द्रम्, Panmana

कोल्लम्, केरल-प्रदेशः



भारतीयतत्त्वचिन्तका मनसः सुस्थिरं स्थानं नास्तीत्यभिप्रयन्ति। कामसङ्कल्पविचिकित्सादीनां विकाराणां समुच्चयमेव मनः। तदेव आम्नायते बृहदारण्यके — 'कामसङ्कल्पविचिकित्साश्रद्धाऽश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव'[१] इति। प्रायः सर्वेऽपि पौरस्त्यचिन्तका मन आत्मनोंऽशमेवेति वदन्ति। मनसः प्रकृतिप्रवर्तनानि अद्वैतवेदान्तानुसारेणावगन्तुं कश्चित् परिश्रमोऽत्र क्रियते। मनोनिरूपणे चिन्तकानां मध्ये मतभेदाः सन्ति। शरीरस्यान्तःसाक्षित्वेन स्थितस्य आत्मन उपाधिरेव चित्तम्। भारतीयचिन्तागतिमनुसृत्य आत्मभिन्नं स्वतन्त्रमस्तित्वं मनसो नैव। मनसः सत्ताऽपि सङ्कल्पेनैवेति योगवासिष्ठकारः[२] परामृशति। इदं मन एकमन्तस्थं परिणामसहितं च। मनो विषयविषयिरूपेण विविधैर्नामरूपैः परिणमति।

नैय्यायिका मनसोऽणुत्वं द्रव्यत्वं चाङ्गीकुर्वन्ति। न्यायकन्दल्यां श्रीधरमहोदयेन उक्तम्—'मनः चैतन्यरहितः चैतन्याधिकरणत्वाद् घटवत्' इति। सुखदुःखज्ञापकः कश्चिदिन्द्रियो भवति मनः। वेदान्ते केचिद् मनसोऽनिन्द्रियत्वं सोदाहरणं विशदयन्ति। तदेव श्रूयते कठोपनिषदि—

'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।

मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः'[३] इति।

---

१. ईशादिदशोपनिषदः, मोतिलालबनारसीदासः, दिल्ली, १९७८, १।५।३।

२. Yogavasistha, Translation-Vihari Lala Mitra, Vol. 1, 4.43. Bhartiya Publishing House, Delhi, 1976. P. 221.

३. ईशादिदशोपनिषदः, मोतीलालबनारसीदासः, दिल्ली, १९७८, १।३।१०, पृ. ८१।

मोक्षप्राप्तौ इन्द्रियाणां निग्रहार्थं मनःप्रग्रहमुपयुज्यते[१]। पाश्चात्त्यचिन्तकाः स्वप्नावस्थाया तथा उपबोधमनसश्च महाप्राधान्यं कल्पयन्ति। फ्रोयिट्-महोदयानुसारं गतकालेऽस्माभिरनुभूतानां विषयाणां तथा इच्छायाश्च स्फुरणमेव स्वप्नः। अद्यतनप्रश्नानां परिहारमार्गं च मनः स्वप्ने अभिव्यञ्जयति[२]। अतोऽभिलषितार्थसाक्षात्कारः स्वप्नरूपेण परिणमतीति तस्याभिप्रायः। भारतीयचिन्तकास्तु स्वप्नस्य अतिप्रामुख्यं न प्रयच्छन्ति। ते जाग्रदादिचतुःष्ववस्थासु अन्यतमत्वेन स्वप्नावस्थां परिगणयन्ति। माण्डूक्योपनिषदि आत्मनश्चातुष्पात्वं श्रूयते— 'सोऽयमात्मा चतुष्पात्' इति। जाग्रत्, स्वप्नः, सुषुप्तिः, तुरीयेति चतुरवस्थाः सन्ति। जाग्रदवस्थाभिमानी आत्मा बाह्यप्रज्ञः, सप्ताङ्गः, स्थूलभुक् च। तमात्मानं वैश्वानर[३] इत्युच्यते। जाग्रदवस्थायां यद् दृश्यते तत्सर्वं मनःसृष्टमेवेति शाङ्करसिद्धान्तः। स्वप्नावस्थाभिमानी आत्मा अन्तःप्रज्ञः सप्ताङ्गः, प्रविविक्तभुक् च। सोऽयं तैजसेति[४] नाम्ना व्यवह्रियते। यस्मिन्नवस्थायां सुप्तो न कञ्चन कामं कामयते, न कञ्चन स्वप्नं पश्यति, तथा सुप्तोत्थितस्य सुखमहमस्वाप्सं न किञ्चिदवेदिषमित्यनुभवश्च, तत् सुषुप्तिः। सुषुप्तौ जीवात्मा परमात्मनि एकीभवति। प्रज्ञानघनः आनन्दभुक् चायं प्राज्ञ[५] इत्युच्यते। अस्मिन्नवस्थायां कारणाविद्याया बन्धाभावाद् बन्धकत्वहेतुर्मन एव; किन्तु 'मनः प्राणमप्येति' इति श्रुतेर्मनः कथं बन्धहेतुर्भवेदिति चेदुच्यते, अज्ञानस्य मनसश्चाभिन्नत्वाद् इति। चतुर्थावस्थस्तुरीयो न अन्तःप्रज्ञः, न बहिष्प्रज्ञः, न प्रज्ञानघनः, अदृश्यः, अव्यवहार्यः, अग्राह्यः, अलक्षणः, अचिन्त्यः, एकात्मप्रत्ययसारः, शान्तः, शिवः, अद्वितीयश्च भवति।

अन्तःकरणं विषयप्रत्यक्षसमये विषयाकारेण परिणमति। परिणामोऽयं वृत्तिरित्युच्यते। वृत्तिश्चतुर्धा— मनः, अहंकारः, बुद्धिः, चित्तमिति। संशयात्मको मनः, निश्चयात्मिका बुद्धिः, अहङ्कारात्मकोऽहङ्कारः, स्मरणात्मकं चित्तं च।

आत्मसाक्षात्कारे मनसो महाप्रामुख्यमस्ति। जीविनो बन्धमोक्षयोर्मुख्यहेतुर्मन एव। विवेकचूडामणौ[६] श्रीशङ्करो मनोमयकोशम् एवं निरूपयति— ज्ञानेन्द्रियाणि

---

१. तेदव-१।३।३।

२. The Practice of mind control, Dr. B. Edwin, P. 34 (Thomson Publishers Ltd. London, 1965).

३. ईशादिदशोपनिषदः, मोतिलालबनारसीदासः, दिल्ली, माण्डूक्योपनिषत्-१.३, पृ. १७१।

४. तदेव-१.४, पृ.६९६; ५. तदेव-१.५, पृ. ६९६।

६. विवेकचूडामणिः, श्रीशङ्कराचार्यः, श्लो. १६१-१७५; अद्वैताश्रमः, कलकत्ता, १९७८; पृ.६७।

मनश्च संयोज्य मनोमयकोशं भवति। नामरूपात्मकप्रपञ्चस्य कल्पने निदानभूतस्य मनसोऽधीनमेव सर्वेऽपि लोकव्यवहाराः। श्रोत्रादिपञ्चेन्द्रियहोतृभिः शब्दाद्याज्यधारया प्रज्वालितैर्वासनाकाष्ठैर्निरन्तरमुद्दीप्यमानो मनोमयाग्निः प्रपञ्चमपि भस्मीकरोति। संसारबीजभूता अविद्या मन एव। मनसो वासनानाशे सर्वं नश्यति, मनसो विजृम्भणे सर्वं विजृम्भति। यथा अनिलो मेघान् वायुं च दूरं नयति, तथा मनो बन्धे मोक्षे च हेतुः। मनः पुरुषमादौ देहगेहादिपाशैर्बध्वा स्वस्वरूपादपनयते, तदेव मनोऽनन्तरं विषयविरक्तिं कृत्वा देहादिबन्धनात् प्रमुच्य ब्रह्मनिष्ठं करोति। कामक्रोधादिरजोगुणधर्मैः कलुषितं मनो बन्धहेतुः रजस्तमोरहितं निर्मलं मनो मोक्षहेतुश्च। विषयरूपे घोरविपिने मनो नाम महान् व्याघ्रो भक्षणार्थी सन् सञ्चरतीत्यतो मुमुक्षुस्तत्पथेन मा गच्छतु। देवतिर्यगादिशरीराणि, ब्राह्मणादिवर्णाः, ब्रह्मचर्याद्याश्रमाः, शब्दादिगुणाः, मृदादिकारणानि, घटादिकार्याणि च जीवस्य जाग्रदवस्थायां स्थूलरूपेण, स्वप्नावस्थायां सूक्ष्मरूपेण च सदा मनसा सृज्यन्ते। एवं मनो निःसङ्गं सर्वज्ञमात्मानं देहेन्द्रियादिषु अहं ममेति अविद्याबन्धैः सम्बद्ध्य लौकिकवैदिकव्यवहारेषु तेषां फलोपभोगेषु च परिभ्रामयति। तदा अविवेकिदेहादिषु आत्मबुद्धिरध्यस्यति। एवं संसारहेतुभूतोऽध्यासो मनःकल्पितमेव। अतो मोक्षप्राप्तये भवबन्धमूलस्य अन्तःकरणस्य नैर्मल्यमवश्यंभावि। मनःशुद्ध्या मुक्तिः करतलामलकवत् सिद्ध्यति।

मनसः शुद्धीकरणं कथं कर्तव्यमित्युच्यते— 'मुमुक्षुर्विषयविरक्तः सन् सर्वकर्माणि मनसा संन्यस्य नित्ये ब्रह्मणि मनः केन्द्रीकृत्य श्रवणमनननिदिध्यासनैरभ्यस्य मनोविक्षेपं धुनोति'[१] इति।

मनोदार्ढ्याय तद्द्वारा मोक्षप्राप्तये च बहव उपाया आर्षचिन्तकैः स्वीक्रियन्ते। तेषु योगमार्गं प्रामुख्यमर्हति। योगशास्त्रोपज्ञाता पतञ्जलिः 'स्वरूपावस्थितिर्मोक्ष'[२] इति, तदवाप्तिर्मनोवृत्तिनियन्त्रणसाध्येति चाभिप्रैति। मनस एकाग्रतायै यमनियमाद्यष्टयोगाङ्गानामभ्यासः कर्तव्यः। योगेन चित्तस्य शक्तिर्वर्धते। संसारिणो जितेन्द्रियस्य योगिनश्च चित्तभेदः सङ्कल्पातीतो भवति। लौकिकजीवितेऽपि मूढमपेक्ष्य पण्डितस्य मनसो वैशिष्ट्यं सर्वेषां सुविदितमेव। एवं पण्डितस्य सिद्धंयोगिनश्च चित्ते विभिन्ने एव।

---

१. विवेकचूडामणिः, श्रीशङ्कराचार्यः, श्लो. १८४, अद्वैताश्रमः कलकत्ता, १९७८, पृ. ६८।
२. योगसूत्रम्, पतञ्जलिः, १।१।११, मोतीलालबनारसीदासः, दिल्ली, १९७१, पृ. ७।

चित्तं सर्वेषां लौकिकव्यवहाराणां केन्द्रबिन्दुरिति योगवासिष्ठकारस्य मतम्। मनसो निष्क्रियत्वे सर्वलोकव्यवहाराणि निश्चलानि भवन्ति[१], तदा मनोनाशः, अद्वितीयस्य आत्मनः स्फुरणं च सम्भवति। मायाऽभिन्नो मनो व्यावहारिकप्रपञ्चे अयथार्थज्ञानमुत्पादयति।

दृश्यप्रपञ्चो मनस्सङ्कल्पजन्यः, तृष्णासाक्षात्कारेति वा वक्तुं शक्यते। अस्मिन्नवसरे प्रसिद्धतत्त्वावेक्षकस्य कसान्टसाकिस्-महोदयस्य प्रस्तावना अतीव-प्रसक्तिमर्जति, 'यदा अहं सर्वं सुसूक्ष्ममपश्यं तदा यदिह दृश्यते, श्रूयते, रस्यते, स्पृश्यते, घ्रायते वा तत्सर्वं ममैव मनसः सृष्टिरित्यवगच्छामि'[२]। तदेव आशयः श्रीनारायणगुरुणा दर्शनमालायां प्रदर्श्यते— 'मनोमयमिदं सर्वं न मनः क्वापि विद्यते'[३] इति। अतो विषयाकारेण सङ्कल्पविकल्परहितात्मरूपेण च मनसः परिवर्तनं कर्तुं शक्यम्।

निग्रहानुग्रहशक्तिभूयिष्ठस्य चञ्चलस्यास्य मनसो उपचयापचये अन्नेन क्रियतेति ज्ञानं कौतुकमावहति। छान्दोग्ये मनसोऽन्नमयत्वं[४] सदृष्टान्तं प्रतिपाद्यते। एवमन्नोपचितत्वाद् मनो भौतिकमेवेति शङ्करस्याभिप्रायः, तथापि सात्त्विकभोजनेन मनसि सत्त्वोद्रेको जायत इति भगवद्गीतायां[५] दृश्यते। तत्र राजसतामसभोजनाभ्यां मनसः परिणामः कथमिति विशदयति। कट्वम्ललवणतीक्ष्णरुक्षादि राजसाहारिणो मनसि दुःखशोकामयप्रदस्य रजोंऽशस्योद्रेको भवति। मत्स्यमांसादीनां यातयामानां च तामसभोजनानामशननेन मदमात्सर्याद्यधमविकाराणि मनसि सञ्जायन्ते। अतस्ते पुरुषं मोक्षमार्गाद् अपनेष्यन्ति च। तस्मात् फलमूलादिसात्त्विकाहारं भुक्त्वा मनसि सात्त्विकांशं विवर्धयन् योगनिष्ठया चित्तशुद्धिमुत्पाद्य श्रवणादिभिर्जीवात्मैक्यज्ञानम्, अथवा मोक्षं सम्पादनीयम्। तदा प्रपञ्चबीजभूतं मनो नश्यति, मायामात्रमिदं द्वैतमद्वैतं परमार्थत इति निश्चयमुत्पद्यत इति।



---

१. योगवासिष्ठम्, अध्यायः-२, भागः-२, पद्यम्-४०,५०, पृ. ८९६,९४१।

२. Saviours of God (Spiritual exercises) Kazantasakis, Translation-Kimor-Frair. Pub. Simon and schuster,

३. दर्शनमाला, श्रीनारायणगुरुः, ३-१, श्रीशङ्करसंस्कृतविद्यापीठम्, कोल्लम्,१९८३, पृ,५१।

४. ईशादिदशोपनिषदः, मोतीलालबनारसीदासः, दिल्ली, १९७८ छान्दोग्योपनिषद् ६.५, पृ.५११।

५. श्रीमद्भगवद्गीता, श्रीरामकृष्णमठम्, पुरनाट्टुकरम्, १९९५, १७.८-९, पृ. १३१।

# प्रतिभायाः प्रमाणत्वविचारः

**डॉ. मुरलीमनोहरपाठकः**
वरिष्ठप्राध्यापकः,
संस्कृतप्राध्ययनकेन्द्रम्, विक्रमविश्वविद्यालयः
उज्जयिनी (म.प्र.)



प्राणिमात्रैकसंवेद्यां प्रमाणत्वेन संस्थिताम्।
काव्यस्य हेतुभूताञ्च प्रतिभां तामुपास्महे।।

प्रतिपूर्वकाद् भा-दीप्ताविति धातोरङ्प्रत्यययोगेन निष्पन्नोऽयं प्रतिभाशब्दः कमपि सर्वप्राणिसुलभं ज्ञानविशेषमभिधत्ते। विविधैराचार्यैर्विविधं व्याख्याताऽपि सा प्रतिभा तत्त्वतो ज्ञानरूपैव। रुद्राचार्यमतेन प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मतेति[१]। शब्दकल्पद्रुमे चैषा प्रत्युत्पन्नमतित्वेन व्याख्याता[२]। अभिनवगुप्तपादेन अपूर्ववस्तुनिर्माणक्षमा प्रज्ञा इत्याकल्पिता[३]। विविधप्रस्थानेषु कीदृशमस्याः स्वरूपमङ्गीकृतमिति विचारविषयः।

सर्वशास्त्रेषु व्याकरणस्य प्रामुख्येन प्राथमिकत्वेन च तदनुसारेणैव प्रथमतः प्रतिभायाः स्वरूपं निरूप्यते। व्याकरणदर्शने प्रतिभा आगमप्रमाणम्, शब्दब्रह्मरूपत्वात्। वाक्यप्रयोगे वाक्यार्थग्रहणे च प्रतिभैव कारणम्। विना प्रतिभया वाक्यार्थो नैवाधिगतः स्यात्। यं कमपि शब्दं श्रुत्वा श्रोतृहृदये यादृशी प्रतिभा उदेष्यति, स तादृशमेवार्थं ग्रहीष्यति। वाक्यमखण्डं वक्ता प्रयुङ्क्ते, श्रोतृप्रतिभा चाखण्डरूपेणैव तस्यार्थं प्रत्याययति। उद्भूतप्रातिभज्ञानानामुपप्लवरहितचेतसां च योगिनामतीतानागतज्ञानं प्रत्यक्षवदेव भवति। ते पुनरार्षचक्षुषा अतीन्द्रियानज्ञेयांश्च पदार्थान् साक्षात्कुर्वते। उक्तञ्च वाक्यपदीये—

---

१. भुवनेशन्यायसाहस्री।
२. शब्दकल्पद्रुमः, तृतीयकाण्डम्, १।
३. ध्वन्यालोकः (लोचनम्) २।६।

'अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते'[१]।

अपि च,

'अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा'[२]।

अत्रार्षचक्षुरेव प्रतिभात्वेन निरूपितम्। व्यञ्जनाप्रसङ्गे यत्रार्थादयो व्यञ्जका भवन्ति, तत्र व्यङ्ग्यार्थबोधो वक्तृबोद्धव्यवाच्यादिवैशिष्ट्यज्ञानेनैव भवति। अथ च श्रोतुः प्रतिभाऽपि प्रतीतावस्यां सहकारिणी भवति। उक्तञ्च नागेशेन —

'अनया चार्थबोधे जननीये वक्तृ-बोद्धव्य-वाच्यादिवैशिष्ट्यज्ञानम्, प्रतिभा च सहकारि तद्बीजनकज्ञानजनकमेव वा'[३]। पुनश्च नागेशो वक्त्रादिप्रकरणज्ञानेन यया बुद्ध्या व्यङ्ग्यार्थप्रतीतिर्भवति, तामेव प्रतिभां स्वीकुरुते। वक्त्रादिवैशिष्ट्यसहकारेण तज्जनिका बुद्धिः प्रतिभेति[४]।

केषाञ्चिद् वैयाकरणानां मतेन अभ्यासाच्छब्दोऽपि प्रतिभाहेतुत्वेन स्वीक्रियते। यथोक्तं हरिणा—

अभ्यासात्प्रतिभा हेतुः शब्दः सर्वोऽपरैः स्मृतः।
बालानां च तिरश्चां च यथार्थप्रतिपादने[५]।।

प्रतिभा सर्वप्राणिसंवेद्या सकलव्यवहारमूलभूता अनपह्नवनीयेति तत्रैव पुण्यराजः। संश्लिष्टपदार्थानां विच्छेदग्रहणे काऽप्यन्यैव प्रतिभा जायते, या पदार्थैरन्विता सती वाक्यार्थत्वेन समायातीति। तथा हि —

विच्छेदग्रहणेऽर्थानां प्रतिभाऽन्यैव जायते।
वाक्यार्थ इति तामाहुः पदार्थैरुपपादिताम्[६]।।

प्रतिभयैव सर्वाणि कार्याणि ज्ञानानि च व्यवतिष्ठन्ते। अविचारिताऽपि सा सर्वाणि प्रमेयाणि समालिङ्गयन्तीव विषयमुद्दिङ्गयन्तीव च विराजते। तथा चोक्तम् —

उपश्लेषमिवार्थानां सा करोत्यविचारिता।
सार्वरूप्यमिवापन्ना विषयत्वेन वर्तते[७]।।

---

१. वाक्यपदीयम्-१।३७; २. तदेव-१।३८।
३. वैयाकरणसिद्धान्तमञ्जूषा, पृ. ८७; ४. तदेव पृ. ८७।
५. वाक्यपदीयम्-२।११७; ६. तदेव-२।१४३।
७. तदेव-२।१४५।

सर्वः खलु लोकः प्रतिभां प्रमाणत्वेन स्वीकुरुते, पशुपक्षिणां व्यवहाराणां तद्वशादेव प्रतीतेः। समेषां प्राणिनां स्वाभाविकप्रेरकाणां कारणमागमरूप-प्रातिभज्ञानमेव। तस्य च द्वैधम् — क्वचिद्वर्णात्मकप्रतिपादकरूपेण क्वचिच्च भावनाबलेन। तत्र द्वितीया नैसर्गिकी प्रवृत्तिः। अतस्सा प्रथमां प्रवृत्तिं व्याप्नोति। भावनाबलं विहाय हि नैव शाब्दप्रवृत्तिः स्फुरतीति। यथाऽऽहुः —

प्रमाणत्वेन तां लोकः सर्वः समनुपश्यति।
समारम्भाः प्रतीयन्ते तिरश्चामपि तद्वशात्[1] ।।

यथा द्रव्यविशेषाणां परिपाकैरयत्नजाः।
मन्दादिशक्तयो दृष्टाः प्रतिभास्तद्वतां तथा[2] ।।

भावनानुगतादेतदागमादेव जायते।
आसत्तिविप्रकर्षाभ्यामागमस्तु विशिष्यते[3] ।।

प्रतिभा न केवलमेकरूपा, अपि तु विविधस्थलजन्यत्वात् साऽनेकधा भवितुमर्हति। भर्तृहरिणा एतस्याः षड्भेदा निरूपिताः। तद्यथा —

स्वभाव-चरणाभ्यास-योगादृष्टोपपादिताम्।
विशिष्टोपहितां चेति प्रतिभां षड्विधां विदुः[4] ।।

इत्थं स्वभावजन्या प्रकृतिजन्या वा, आचरणजन्या, अभ्यासजन्या, योगजन्या समाधिजन्या वा, अदृष्टजन्या, विशिष्टपरिस्थितिजन्या चेति प्रतिभा षड्विधा राराज्यते। एवं व्याकरणदर्शने प्रतिभेयमागमप्रमाणरूपेण प्रतिष्ठिता।

मीमांसादर्शने प्रतिभायाः प्रमाणत्वं न स्वीक्रियते। कुमारिलमते लौकिकानां योगिनाञ्चापि प्रत्यक्षाद्यनपेक्षिणी प्रतिभा नैव प्रमाणम् —

लौकिकी प्रतिभा यद्वत्प्रत्यक्षाद्यनपेक्षिणी।
न निश्चयाय पर्याप्ता तथा स्याद् योगिनामपि[5] ।।

पार्थसारथिमिश्रोऽप्येवमाह — वैशेषिकादयस्तु प्रतिभाख्यप्रमाणान्तरगम्यत्वं धर्माधर्मयोर्मन्यन्ते। तच्च लोकेऽपि क्वचिदस्त्येव। बाहुल्येन तदृषीणा-

---

१. वाक्यपदीयम्-२।१४७; २. तदेव-२।१४८।
३. तदेव-२।१५१; ४. तदेव-२।१५२।
५. श्लोकवार्त्तिकम्, प्रत्यक्षाधिकरणम्, ३२।

मेवेत्यार्षमित्युच्यते। यथा—'अस्मदादिप्रतिभा तावल्लिङ्गाद्याभासजन्या प्रत्यक्षादिकमनपेक्ष्य स्वातन्त्र्येणार्थमनिश्चाययन्ती नैव प्रमाणमतंस्तद्वदेव योगिनामपी'ति[१]। वैयाकरणानां मते प्रतिभयैवान्येषां प्रमाणानां प्रमाणत्वे सिद्धे, तन्निरासाय मण्डनमिश्रेणैवमाक्षिप्तम्— 'सा खलु प्रतिभाऽऽलम्बनवती न वा? आलम्बनवती चेत्तदेवावबोद्धव्यं न च तदन्यदीहितोपायतायाः। निरालम्बनं तु ज्ञानमयुक्तमेवे'ति[२]। प्रतिभा सालम्बना, ज्ञानरूपत्वात्। अतस्तदुत्पत्तिरालम्बनेनैव भविष्यति, तत्र शिशूनां पक्षिणाञ्च शब्दभावनया प्रतिभोत्पत्तिर्निरर्थिकेत्यभिप्रायः। वस्तुतो मीमांसकाः प्रतिभाया बाह्यविषयत्वं स्वीचक्रुः, तद्यथा— 'तस्याः प्रतिभाया न्यायापरिज्ञानेन बहुधाऽपि जायमानाया बाह्यविषयत्वं शून्यवादे[३] साधितमेवे'ति[४]।

इदमत्र तात्पर्यम्— बहुधा जायमानायाः प्रतिभाया बाह्यविषयोऽवश्यमेवावतिष्ठते, किन्तु शास्त्रीयनयस्याज्ञानेनैषा अप्रमाणमेव, सिद्धान्ततस्तु, यद्यपि अर्थविषयिणी पौरुषेयप्रतिभा अनेकधा जायते, तथापि प्रतिभाया वाक्यस्य चार्थो बाह्य एव भवति। अतो मीमांसकानां मतेन वाक्यार्थरूपे जन्यरूपे वा प्रतिभायाः पदार्थत्वे नास्ति विरोधः, किन्तु प्रतिभया ज्ञाप्यमानस्य बाह्यार्थस्यास्तित्वं नैवोपेक्षणीयमिति।

न्यायदर्शनेऽनुभवसिद्धस्य प्रतीयमानार्थस्य बोधो मनसैव स्वीक्रियते, न तु केनचिद् वृत्तिविशेषेणेति शक्तिवादस्य माधवीटीकायां विशदं व्याख्यातम्— 'मनसैव तादृशबोधस्वीकारादित्यादिना' इति[५]। जयन्तभट्टमतेन तु प्रतिभायाः प्रत्यक्ष एवान्तर्भावो निरूपितः। तद्यथा— न च सिद्धदर्शनं प्रतिभा, अस्मदादेरपि भावात्। तस्मान्न प्रमाणान्तरं प्रातिभमपि तु प्रत्यक्षमेव[६]। यत्तु क्षीणदोषाणामवहितचेतसां च योगिनामतीन्द्रियपदार्थानामपि ज्ञानम्, तद्योगधर्मजं प्रातिभमेव। यदा कदा च यदयोगिनामप्यनागतविषयकं ज्ञानं सम्पद्यते, तदपि प्रातिभप्रमाणम्। यथा— अर्थजं, संशयविपर्ययादिरहितं श्वो मे भ्राताऽऽगन्तेत्याकारकं ज्ञानमुत्पद्यते, तदव्याहतप्रमाणकमेव, बाधा चेदप्रमाणमपि। किन्त्वेतत् काकतालीयत्वेन व्याख्यातुं न शक्यते, प्रमाणसिद्धत्वात्। अथ चैतदनर्थजमपि निगदितुमशक्यम्, वर्तमानस्य भाव्यर्थग्राहकत्वादिति। यथोक्तं जयन्तभट्टेनैव —

क्वचिद् बाधकयोगश्चेदस्तु तस्याप्रमाणता।
यत्रापरेद्युरभ्येति भ्राता तत्र किमुच्यताम्।।

---

१. न्यायरत्नाकरः, पृ. ११२;  २. विधिविवेकः, पृ. ११।
३. श्लोकवार्त्तिकस्य शून्यवादप्रकरणे इत्यर्थः;  ४. न्यायरत्नाकरः, पृ. १२०।
५. शक्तिवादस्य माधवीटीका, पृ. २;  ६. न्यायमञ्जरी, प्रथमो भागः, पृ. ९९।

काकतालीयमिति चेन्न प्रमाणप्रदर्शितम्।
वस्तु तत्काकतालीयमिति भवितुमर्हति।।

भावित्वं च तदस्यास्त्येवेति कथमनर्थजं ज्ञानमिति[१]।

न्यायसिद्धान्तमुक्तावल्यां तु प्रतिभायाः प्रमाणत्वाप्रमाणत्वे न विवेचिते, अतः प्रमाणत्वमेव ग्राह्यम्, तस्य खण्डनाभावात्। उक्तञ्च दिनकर्याम्— 'बुद्धिर्ज्ञानम्। प्रतिभा तद्विशेषः स्फूर्त्याख्यः' इति[२]। ये तु केचिन्न्यायैकदेशिनः प्रतिभां न स्वीकुर्वते तद्वार्तम्, प्रतिभायाः प्रमाणाधिकरणत्वादिति।

वैशेषिकदर्शने प्रतिभा विलक्षणप्रमाणरूपेण निरूपिता। लक्षणं चैतस्या न्यायकन्दल्याम्— 'इन्द्रियलिङ्गाद्यभावे यदर्थप्रतिभानं सा प्रतिभा। प्रतिभैव प्रातिभमि'ति[३]। आर्षज्ञानमेतत् सर्वेषु विषयेषु आत्ममनःसंयोगाद्धर्मविशेषाच्च जायते। लौकिकानामप्येतादृशं ज्ञानं प्रमाणमेव। यथा प्रशस्तपादभाष्यम् — तत्तु प्रस्तारेण देवर्षीणां कदाचिदेव लौकिकानां यथा कन्यका ब्रवीति — श्वो मे भ्राताऽऽगन्तेति हृदयं मे कथयतीति[४]।

प्रतिभा संस्कारविशेषस्तस्मान्निष्पन्नं ज्ञानं प्रातिभमेव, तत्तु नेन्द्रियजं (न प्रत्यक्षं) सन्निकर्षाभावात्। ये खलु बाह्येन्द्रियाणां व्यापाराभावेऽपि अन्तःकरणस्य व्यापाराद् भ्रातृविशिष्टमात्मानं देशं कालं वाऽवलम्ब्य ज्ञानस्यैतस्योत्पत्तिं मन्यमाना भ्रातुर्मनसा सह संयुक्तविशेषणविशेष्यभावसन्निकर्षं स्वीकुर्वन्ति, तन्न, तादृशज्ञानस्य प्रत्यक्षाभावात्। एवमेव व्योमशिवाचार्येण प्रतिभाया अनुमानादिष्वप्यन्तर्भावो निराकृतः। तद्यथा — 'न च बहिर्विषये विशेषणेऽपि मनसः स्वातन्त्र्येण व्यापारः सम्भवतीत्युक्तम्। लिङ्गलिङ्गिसम्बन्धानुस्मरणाभावाच्च नानुमानजम्। शब्दं विनाऽप्युत्पत्तेर्न शाब्दम्। अतः प्रमाणान्तरफलमेतत्। तथा च प्रश्ने कृते सति न प्रत्यक्षादिकं निर्दिशत्यपि तु हृदयं मे कथयतीति ब्रूते इति'[५]।

बौद्धदर्शने चतसृषु प्रतिसंवित्सु तुरीया प्रतिभानप्रतिसंविदस्ति। विसुद्धिमग्गे सा 'पटिभानपटिसंभिदा ति अत्थो'[६] इत्येवं निरूपिता। धर्मार्थनिरुक्तीनां संवित्सु

---

१. न्यायमञ्जरी, प्रथमो भागः, पृ. ९८।
२. न्यायसिद्धान्तमुक्तावली (मङ्गलवादः), १, दिनकरी-टीका।
३. न्यायकन्दली-पृ. ७७;
४. प्रशस्तपादभाष्यम्, पृ. ६२८।
५. व्योमवती, पृ. ६२२;
६. विसुद्धिमग्गो, १४।२५।

किमपि ज्ञानमालम्ब्य यत्पुनरीक्षणं भवति, तदालम्बनरूपज्ञानमेव प्रतिभान-प्रतिसंविदित्युच्यते। बौद्धाः शब्दज्ञानेनैव प्रतिभाया उत्पत्तिं मन्यन्ते। उक्तञ्च धर्मकीर्त्तिना—

यथा चोदनमाख्याश्च सोऽसतिभ्रान्तिकारणे।
प्रतिभाः प्रतिसन्धत्ते स्वानुरूपाः स्वभावतः[1]।।

एवमत्र शब्दः खलु आनुमानिकं लिङ्गम्। स चेत् सद्धेतुस्तर्हि तेन प्रतिभोत्पादकानामर्थानामनुमितिर्भवति। अतो बौद्धमते ज्ञानजन्यं ज्ञानमेव प्रतिभेति प्रतीयते। सा पुनः प्रमाणमपि।

अथ प्रतिभायाः प्रमाणत्वाप्रमाणत्वनिरूपणात्मकदार्शनिकविवेचनानन्तरं साहित्यशास्त्रीयं स्वरूपमुद्घाट्यते प्रवृत्तिमार्गावलम्बिनां सुकुमारमतीनां कान्तासम्मिततयोपदेशेन परमानन्दसन्दोहजनकतया काव्यशास्त्रेणैव चतुर्वर्गफलावाप्तिरिति स्फुटमेव। काव्यस्य प्रणयने तस्यावबोधे च वर्तते महन्महत्त्वं प्रतिभायाः। प्रतिभाविशेष एव महाकवित्वस्य सम्पादक इति प्रतिपादयता भारतीयालङ्कारिकसरणिव्यवस्थापकेन श्रीमदानन्दवर्धनाचार्येण स्वकीये ध्वन्यालोकनाम्नि ग्रन्थे एवमाख्यातम्—

सरस्वतीस्वादुतदर्थवस्तु निःष्यन्दमाना महतां कवीनाम्।
अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम्[2]।।

सा प्रतिभा नानुमीयमानाऽपि तु तदावेशेन भासमानेत्यभिनवगुप्त-पादाचार्यः[3]। तेनैव वर्णनीयवस्तुनिष्ठः प्रज्ञाविशेषः प्रतिभानमित्यप्याकूतम्[4]।

ध्वनियोगेन वर्ण्यवस्तूनां नवनवीभावाद् वर्णने कवीनां प्रतिभा नूनमप्रतिहता भवति। गुणीभूतव्यङ्ग्येन सहितस्य ध्वनेर्मार्गेण कवीनां प्रतिभागुणोऽविच्छिन्नत्वं प्राप्नोतीति ध्वनिकारेण तत्रैव स्पष्टीकृतम् —

ध्वनेर्यः सगुणीभूतव्यङ्ग्यस्याध्वा प्रदर्शितः।
अनेनानन्त्यमायाति कवीनां प्रतिभा गुणः[5]।।

---

१. प्रमाणवार्त्तिकम्, २।१०९; २. ध्वन्यालोकः, २।६।
३. तदेव, लोचनम्; ४. तदेव, लोचनम्, ४।२।
५. तदेव, ४।३।

अथ प्रतिभा द्विविधा— कारयित्री (उद्भावयित्री), भावयित्री (ग्राहयित्री) च। तत्रापूर्ववस्तुनिर्माणसमर्था कवीनां प्रतिभा कारयित्री, रसिकानावेशयन्ती च भावयित्री। प्रतिभागुणेनैव काव्यार्थो वैविध्यमावहति। वक्तृबोद्धव्यादिवैलक्षण्येन प्रतिभाशालिनां व्यङ्ग्यार्थप्रतीतिर्भवति। जयदेवेन प्रतिभैव केवलं काव्यहेतुत्वेनोपवर्णिता। तद्यथा—

प्रतिभैव श्रुताभ्याससहिता कवितां प्रति।
हेतुर्मृदम्बुसम्बद्धा बीजमाला लतामिव[१]।।

काव्यप्रकाशकारेण मम्मटाचार्येण तु—

शक्तिर्निपुणतालोकशास्त्रकाव्याद्यवेक्षणात्।
काव्यज्ञशिक्षयाऽभ्यास इति हेतुस्तदुद्भवे[२]।।

इत्येतस्यां कारिकायां शक्तिपदवाच्या प्रतिभैव काव्यहेतुरूपेण प्राथम्येन निरूपिता। शक्नोति पुमान् काव्यनिर्माणायाऽऽस्वादानुभवायानयेति शक्तिः कवित्वबीजभूता प्रतिभाऽपरपर्याया संस्काररूपा। नन्वेतस्याः शक्तेः काव्यनिर्माणहेतुत्वे किं प्रमाणमिति चेत्, न, निपुणताऽऽदिसमवधानेऽपि शक्त्यभावात् कथञ्चिदाकृष्टैः पदैर्निर्मितानां पद्यानामुपहसनीयत्वात्। काव्यनिर्माणे तदर्थनिष्पत्तौ च शक्तिरेव बीजम्, न च कारणान्तरमिति वाच्यम्। रसगङ्गाधरकारोऽपि प्रतिभामेव केवलं काव्यहेतुत्वेन स्वीकुरुते। तद्यथा— 'तस्य च कारणं केवला कविगता प्रतिभा। सा च काव्यघटनानुकूलशब्दार्थोपस्थितिः।........तस्याश्च हेतुः क्वचिद् देवतामहापुरुषप्रसादादिजन्यमदृष्टं क्वचिच्च विलक्षणव्युत्पत्तिकाव्यकरणाभ्यासौ। बालादेस्तौ विनाऽपि केवलान्महापुरुषप्रसादादपि प्रतिभोत्पत्तेः।........ प्रतिभात्वं च कविताया: कारणतावच्छेदकम्, प्रतिभागतवैलक्षण्यमेव वा विलक्षणकाव्यं प्रति हेतुरि'ति[३]।

सेयं प्रतिभा सर्वत्र प्रमाणप्रमेयादिकं विभावयन्ती न तर्केणापह्नवनीया, प्रत्युत प्रतिजीवं सा निरन्तरं विद्यमानाऽवभासते। छायायामारोपितोऽपि वृक्षः प्रतिभाऽधीन एव प्रकाशमभिवर्द्धते छायां च जहदिव नः प्रतिभाति। आ स्थावरेभ्य आ च ब्रह्मणः खल्वियं प्रतिभा परमेश्वरस्य स्वरूपविलास एव नान्यत्। अत एवोक्तं प्रत्यभिज्ञाहृदये उद्धरणरूपेण —

१. चन्द्रालोकः, १।६। २. काव्यप्रकाशः, १।३।
३. रसगङ्गाधरः, प्रथमाननम्, पृ. ९-१०।

या चैषा प्रतिभा तत्तत्पदार्थक्रमरूषिता।
अक्रमानन्तचिद्रूपः प्रमाता स महेश्वरः[१]।।

क्रमरहितोऽनन्तचैतन्यस्वरूपलक्षणो महेश्वरः प्रमाता। प्रतिभाऽपि तस्यैव विलास इति तात्पर्यम्। ये खलु तार्किकास्तस्याः प्रामाण्यचिन्तने बद्धपरिकरा दृश्यन्ते, तान् प्रतीदमेव वक्तुं युज्यते— इयं प्रतिभा सर्वप्रमाणसाधारणी बोधमात्रस्याधिष्ठानभूता काचन औत्पत्तिकी (नित्या) स्फूर्त्तिः। तया विना का नाम प्रमाणादेश्चर्चा स्यादित्यलम्।



१. प्रत्यभिज्ञाहृदयम्, २०, वृत्तावुद्धरणम्।

# स्वातन्त्र्यशौर्यम्

**पण्डितश्रीशिवजी-उपाध्यायः**
आचार्योऽध्यक्षश्च, साहित्यविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी



## नान्दी

स्वातन्त्र्यक्रतुकुण्डदीप्तदहनज्वालोल्लसद्भूतिभृद्-
विष्वग्विश्वजनीनविश्रुतयशोभास्वद्विवस्वद्विभुम्।
शश्वद् भूरितरप्रभावविकसत् सौहार्दशान्तिप्रियं
भूयाद् भारतराष्ट्रमेतदनिशं विभ्रज्जगद्गौरवम्।।१।।

किञ्च—

स्वाधीनता जनिभृतां ननु जन्मसिद्धः
स्वात्माधिकार इति शाश्वतमन्त्रघोषः।
येन व्यधायि जगतो जनजागराय
सोऽयं चिरञ्जयति भारतभव्यदेशः।।२।।

अपि च—

न खलु खलजनानामुग्रघातप्रघातै-
र्जनितसुजनतार्तिर्जातु दृष्टिं प्रयातु।
न च जगति कुतश्चिद् राष्ट्रतो राष्ट्रमन्यत्
परिभवमनुभूयादीश्वरीयानुभावात्।।३।।

किं वा—

क्षेप्यास्त्रकाणविकशस्त्रवितानजन्य-
जन्यातिशङ्कितमनो जगदस्तु सुस्थम्।
नैवायुधोद्धतयुधि प्रधनप्रधानो
भूयो विनाशकृदहो प्रलयोऽभ्युदेतु।।४।।

अन्ते च—

स्वातन्त्र्यशौर्योदितसूर्यरश्मि-
प्रभाप्रभातप्रसरत्प्रकाशात्।
प्रकाशयद् विश्वमनारतं तद्
विभारतं भारतमाविभातु।।५।।

(नान्द्यन्ते प्रविशति सूत्रधारः)

**सूत्रधारः**— (पृष्ठतः शीघ्रं प्रविश्य) अलमलमतिविस्तरेण,

स्वातन्त्र्यशौर्योदितसूर्यरश्मि-
प्रभाप्रभातप्रसरत्प्रकाशात्।
प्रकाशयद् विश्वमनारतं तद्
विभारतं भारतमाविभातु।।६।।

(इति पद्यं मन्दस्वरेण पठन् यावत् परिक्रामति, तावत् प्रविशति नटी)।

**नटी**— (सूत्रधारमभिमुखीभूय प्रणम्य च) आर्य! स्वातन्त्र्यशौर्यमित्यादिना किं भवान् पठति?

**सूत्रधारः**— (सहर्षम्) आर्ये! इदं किल पठामि, शृणु तावत् (सम्पूर्णं पद्यं तारस्वरेण पुनः पठति)।

**नटी**— (आकर्ण्य सोल्लासम्) आर्य! इदं पद्यं तु सम्प्रति सम्प्रतिपन्नस्वातन्त्र्यशौर्यसमेधमानस्य स्वाभिमानविभारतस्य भारतस्य किमपि पराक्रमप्रभवं गौरवं स्मारयति।

**सूत्रधारः**— (सोत्साहम्) अथ किम्! अद्य खलु भारतं विश्वस्य बृहत्तमं प्रजातान्त्रिकं राष्ट्रं स्वात्मनः पञ्चाशद्वर्षात्मकं स्वर्णजयन्त्युत्सवं सम्मनुते। तदद्य तत्पराक्रमप्रभवं गौरवं सुतरां स्मरणीयमेव।

**नटी**— (सस्मितोल्लासम्) आर्य! समयोचितं साधूक्तं तत्रभवता, ध्रुवमात्मनः पराक्रमगौरवस्मरणेन न केवलं भारतस्य प्रत्युत भारतीयस्वातन्त्र्यशूराणामपि शौर्यगौरवस्मृतिर्जागर्ति, तेषामेव समर्पितसर्वस्वसम्पदां शूराणां सप्राणार्पणं बलिदानेन साम्प्रतिकीयं स्वातन्त्र्यस्वर्णजयन्ती अस्माभिः सम्भूय सम्भाव्यते।

**सूत्रधारः**— (समधिकोल्लासेन) आर्ये! आश्चर्यम्..........आश्चर्यम्, स्थाने किल स्मारितं स्वातन्त्र्यशूराणां शौर्यगौरवं तत्रभवत्या, नूनमस्माभिस्तद् गौरवस्मृतिरेव स्वातन्त्र्यस्वर्णजयन्त्यवसरोचितं सम्भावनीयेति वयं कृताभिनयसन्नाहा अत्र मञ्चोपरि वर्तामहे, तत् सत्सु बहुषु स्वातन्त्र्यशूरेषु कतमस्य गौरवस्मृत्या पुनरस्माभिरनुरञ्जनीया एषा वरिष्ठविद्वद्भूयिष्ठा सचेतसां परिषत्? इत्यचिरमुच्यताम्।

**नटी**— (सकौतुकम्) ननु आर्य! नूनमेषा वरिष्ठविद्वद्भूयिष्ठा परिषद् गीर्वाणवागुपासकानाम्, तदेतादृशस्यैव स्वातन्त्र्यशूरस्य गौरवस्मृत्या सेयं परितोषणीयेति ममोचितं प्रतिभाति।

**सूत्रधारः**— (सहर्षम्) आर्ये! सत्यमस्मद्हृदयसंवादीदं त्वद्वचनमाकर्ण्य मोमुद्यते नश्चेतः, तदवश्यं तादृशेनाभिनयसंविधानकेनात्रोपस्थातव्यमस्माभिः। तथा हि—

गीर्वाणवागधिगतात्मनवप्रबोधः
स्वातन्त्र्यशौर्यमतनोन्निजबाल्यकाले।
यश्चन्द्रशेखर इति श्रुतनामधाम्ना
लोकं प्रकाशयति सूर इवैकशूरः।।७।।

अतश्च—

तस्योदात्तचरित्रचिन्तनपरं शौर्यप्रकर्षोज्ज्वलं
सङ्घर्षप्रवणं स्वदेशसुयशोविस्तारिहारिस्वरम्।
स्वाधीनोत्तमजीवनं जनिमतामुद्यद्द्युरत्नप्रभं
आजादाह्वयचन्द्रशेखरमहाशूरस्य शौर्यं महत्।।८।।

तेन खलु —

स्वातन्त्र्यशौर्यप्रथिताभिधाने दृश्यात्मनैकाङ्क्षिनि नाटकेऽस्मिन्।
तद् विक्रमात्माहुतिपुण्यपूतं चारित्र्यमुच्चैरभिनेयमस्ति।।९।।

तथा च—

संवीक्ष्य संस्कृतात्मानस्तदेतद् दृश्यमुत्तमम्।
भारतीमातुरर्चायां जीवनं विनिवेद्यताम्।।१०।।

**नटी**— यथाऽऽज्ञापयति आर्यः। (उभौ निष्क्रान्तौ)

**।। इति प्रस्तावना ।।**

## ।। प्रथमं दृश्यम् ।।

[स्थानम् - वाराणसीस्था संस्कृतपाठशाला]

[एकस्याचार्यस्य अधिपीठासनमासीनस्य पुरतः पञ्च छात्राः किमपि उच्चैः पठन्तस्तिष्ठन्ति। एकोऽपरिचितो बालकः प्रविशति, आचार्यं प्रणमति च]

**आचार्यः**— (साशीर्दानमापृच्छति) अयि भोः! कस्त्वम्? कुत आगतः? किन्ते नामधेयम्?

**बालकः**— (सविनयम्) आचार्यवर! अहमस्मि ब्राह्मणबालकः मध्यप्रदेशस्य भाँवराग्रामवास्तव्यः। ततो जीविकोपार्जनाय मुम्बईनगरं गतः। परमध्येतुकामोऽहं ततः परावृत्य वाराणसीमागतोऽस्मि। केनापि सज्जनेन तत्रभवतो भवद्विद्यालयस्य च भूरिशः प्रशंसा कृता। तदाकर्ण्य भवत्सकाशमुपागतोऽस्मि। मम नाम '**चन्द्रशेखरतिवारी**' इत्यस्ति।

**आचार्यः**— (साश्चर्यम्) अये! यथानुमानं चतुर्दशपञ्चदशवर्षवयास्त्वम् एकाकी एव मुम्बईं गतः! ततश्चात्र प्रत्यागतः!! इति कुतः सम्भाव्यते?

**चन्द्रशेखरः**— (सोत्साहम्) आचार्यवर! किं न सम्भाव्यते भारतभूमेर्वीर-बालकानाम्, पश्यतु भवान् —

ऊनषोडशवर्षीयोऽभिमन्युर्नाम बालकः।
चक्रव्यूहं विनिर्भिद्य स्वीयं शौर्यमदर्शयत्।।११।।

तदहं तदवस्थापन्नो मुम्बईमुपेत्य ततः पुनरिहागतः, इत्यत्र किमसम्भाव्यम्?

**आचार्यः**— (सहर्षं वीक्ष्य) वीरबालक! चन्द्रशेखर! सत्यम्, वस्तुतस्त्वं भगवतश्चन्द्रशेखरस्य प्रसादांशसम्भूतो निर्भयो वीर्यवान् बालकोऽसि। अहं त्वत्तः प्रसन्नोऽस्मि। अद्य प्रभृति त्वमत्र विद्यालयस्य छात्रावासे निवसन् वीतचिन्तः संस्कृताध्ययनं कुरुष्व। (एकं छात्रमभिमुखीभूय) वत्स महेश! चन्द्रशेखरं त्वं छात्रावासं नय। अयं त्वयैव सह निवत्स्यति।

**महेशः**— (ज्येष्ठोऽपि तत्प्रभावाविष्टः) वयस्य! एहि, अद्यारभ्य त्वं मया सह छात्रावासे मम कक्ष एव निवत्स्यसि। आगच्छ, नित्यक्रियादिकं सम्पाद्य किञ्चिदल्पाहारं गृहाण, मध्याह्ने सामूहिकं भोजनं सम्पत्स्यते। इदानीं त्वं मम मित्रं संवृतोऽसि। (चन्द्रशेखर आचार्यं प्रणम्य महेशेन सह गच्छति)

**चन्द्रशेखरः**— (महेशम्) ननु भवान् मदपेक्षया वयोज्यायान्, कस्यां कक्षायां पठति? भवानत्रत्यो बाह्यो वा?

**महेशः**— अहं शास्त्रिकक्षायां पठामि। अत्रत्य एवास्मि। वाराणसीवास्तव्यः।

**चन्द्रशेखरः**— (साश्चर्यम्) अये! भवान् शास्त्रिकक्षायां पठति? अहन्तु प्रथमकक्षायां पठितुमागतोऽस्मि। मदपेक्षया भवान् न केवलं वयोज्यायान्, प्रत्युत योग्यतरोऽप्यस्ति।

**महेशः**— (सव्रीडम्) वयस्य चन्द्रशेखर! मैवं ब्रूहि। आचार्यवराणां समक्षं त्वया आत्मनो योग्यता प्रमाणिता। न कोऽपि छात्रस्त्वादृशो निर्भीकस्त्वद्योग्यताको वा भवितुमर्हति। यथा त्वया आचार्यवरः प्रभावितस्तथा न केनापीति साक्षान्मया दृष्टम्। यतो हि —

न शिक्षया नापि वयःसमीक्षया
न जन्मना नैव कुलप्रतिष्ठया।
सुयोग्यता सा तु समिद्धतेजसा
प्रमाणिता कस्यचन प्रसिद्ध्यति।।१२।।

अतश्च तादृशेन निर्भीकतेजसा नूनमस्मदपेक्षया योग्यतम इति निश्चप्रचम्।

**चन्द्रशेखरः**— (सविनयम्) मित्रवर महेश! अक्षरवैषम्येऽपि समानार्थकमावयोर्नामधेयम्, तद् योग्यता कुतोऽतिरिच्यते? साऽपि समाना स्यादेव। वस्तुतस्तु ज्येष्ठतया भवान् ममाग्रज इत्यधियोग्यताकत्वं मदपेक्षया भवदीयं सुतरां प्रतितिष्ठति। यतो हि —

समानशीलेषु कुलेषु जातिषु
प्रतिष्ठितोच्चैः पदवीं श्रितेष्वपि।
सदाग्रपूज्यो ध्रुवमग्रजो भवेद्
भवानतस्तादृश एव मत्कृते।।१३।।

अतो भवान् ममाग्रजो मदपेक्षया योग्यतरो मम पूज्यश्चेति निश्चप्रचम्।

**महेशः**— (सहासम्) वयस्य चन्द्रशेखर! वस्तुतस्त्वं प्रज्ञया पारदृश्वा कश्चिद् विपश्चिदिव प्रतिभासि। बाल्येऽपि तवेदृशी तीक्ष्णमतिर्मतिमतामप्याश्चर्य-जनिका। (उभौ परस्परं पश्यन्तौ प्रहसन्तौ च निष्क्रान्तौ)।

**चन्द्रशेखरः**— (परेद्युः सपुस्तकः प्रविश्य) आचार्यवर! चन्द्रशेखरोऽहं भवन्तं प्रणमामि।

**आचार्यः**— (सस्नेहं वीक्ष्य) चन्द्रशेखर! अपि कुशलं ते? महेशेन त्वदावास-भोजनादिव्यवस्था साधीयसी सम्पादिता? यदि त्वया किमप्यन्यथाऽनुभूतं तन्निःशङ्कमभिधीयताम्।

**चन्द्रशेखरः**— आचार्यवर! महेशसदृशे सहृदयोदारसुहृदि विद्यमाने सति सर्वथा मे कुशलं समेधते। अनेन मम सर्वा व्यवस्था आत्मनोऽप्यधिकतरा निष्पादिता। न किञ्चिदन्यथाऽनुभूतम्। परमा तुष्टिरधिगता।

**आचार्यः**— साधु, प्रसन्नोऽस्मि। (तस्य हस्ते पुस्तकं विलोक्य) किमिदं पुस्तकं गृहीतम्? अपि किञ्चित् संस्कृतं जानासि?

**चन्द्रशेखरः**— आचार्यवर! पुस्तकमिदम् 'अमरकोष' इति मित्रवरेण महेशेन प्रदत्तम्। ब्राह्मणकुलोद्भूततया संस्कृतेन सह अल्पः परिचयोऽस्ति। संस्कारसहकृताऽऽ-त्मज्ञानप्रतिभानजननार्थं संस्कृतमिति तदर्थमवैमि। तत्र भवतः सन्निधाने तत्प्रबोधोऽपि भविष्यतीति विश्वसिमि। (सर्वे छात्राश्चकिताः पश्यन्ति)

**आचार्यः**— (साश्चर्यं चक्षुःस्फारं तं पश्यन् स्वगतम्) नूनमेषोऽसाधारणः श्लक्ष्ण-लक्षणो विलक्षणो बालः परं वैचक्षण्यं बिभर्ति। (प्रकाशम्) साधूक्तं वत्स! परं संस्कृतशब्दस्यायमर्थस्त्वया कुतो ज्ञातः? कुत्रचिदन्यत्रापि पूर्वमधीतम्?

**चन्द्रशेखरः** — न हि, न हि आचार्यवर! इतः पूर्वं न कुत्रचित् किमप्यधीतम्। यथाप्रतिभानं तदर्थो निगदितः। भवदनुग्रह एवात्र हेतुरिति मन्यताम्।

**आचार्यः**— वत्स चन्द्रशेखर! यथा पूर्वं प्रथमदृष्ट्या त्वामवलोक्य मयाऽवगतम्, तथैव सत्यं त्वं भगवतश्चन्द्रशेखरस्य अंशसम्भूतः प्रभूतप्रतिभानवानसि। त्वादृशा बालकाः स्वजातेः कुलस्य देशस्य च गौरवमुन्नेतु-माविर्भवन्ति। अद्यत्वे यद् देशस्य गौरवं पारतन्त्र्यपाशप्रधर्षितं चतुरस्रमधरीकृतं दृश्यते, तद्रक्षणार्थमपेक्ष्यन्ते त्वादृक्षा एव तेजःशौर्यशालिनो बालयुवानः।

**चन्द्रशेखरः**— आचार्यवर! ननु कृपया स्पष्टार्थमुच्यताम्, पारतन्त्र्यपाशप्रधर्षितं देशस्य गौरवं चतुरस्रमधरीकृतमिति कथम्? किन्नु तत्कारणम्? तद्रक्षणार्थं कुतो नु मादृक्षा बालयुवानोऽपेक्ष्यन्ते?

**आचार्यः**— (सोच्छ्वासम्) वत्स चन्द्रशेखर! सम्प्रति वैदेशिककुशासनेन देशस्य गौरवं पारतन्त्र्यपाशप्रधर्षितं चतुरस्रमधरीक्रियमाणं वर्तते। तत्र तत्कुशासनमुत्पाट्य राष्ट्रे स्वातन्त्र्यप्रतिष्ठां विधातुं त्वादृशा बालयुवानो नितरामपेक्ष्यन्ते। यतो हि—

यद्राष्ट्रं भारताख्यं त्रिभुवनविदितं चारुचारित्र्यशालि-
श्रौतज्ञानप्रकाशादधिजगति दधौ मानवानां गुरुत्वम्।
यत्र श्रीरामकृष्णप्रभृतिनरवराः पूर्वलब्धावतारा-
स्तन्म्लेच्छैः पारतन्त्र्यप्रशमितविभवं शास्यते निर्विशङ्कम्।।१४।।

अपि च— (परितः परिक्रम्य)

बाला युवानः स्थविराः स्त्रियो वा
वैदेशिकैः क्रूरशठैर्हठेन।
निपीड्यमानाः किल पारवश्याद्
अजस्रमस्रं परिवाहयन्ति।।१५।।

अन्यच्च—

कारागृहेषु ननु केऽपि चिरान्निरुद्धाः
अन्ये प्रपीड्य निहताश्च दिवं प्रयाताः।
केचिन्निलीय निवसन्ति परे तु मौनं
तिष्ठन्ति हन्त! विपदः परतन्त्रतायाः।।१६।।

(भूयो दीर्घं निःश्वस्य)

वत्स चन्द्र! बलिनश्च बालकास्त्वादृशाः परबलप्रमाथिनः।
राष्ट्रगौरवपदाभिरक्षणे साम्प्रतं हि नितरामपेक्षिताः।।१७।।

अतस्त्वं तादृशयोग्यतासंवर्द्धनाय परां शक्तिमासाद्य देशस्य गौरवं पुनरुद्धर्तुं यतस्व।

**चन्द्रशेखरः**— (सोत्साहधीरभावम्) आचार्यवर! तत्रभवता यादृशः पाठोऽहमद्य पाठितस्तेन निखिलतत्त्वाधिगमो जातः। सोऽहं भवत्समक्षं भवन्तमेव साक्षीकृत्य प्रतिजाने—

यावन्न वैदेशिकशासनोत्थं दुःखानलं प्रज्वलितं प्रशाम्य।
देशोन्नमद्गौरवमभ्युदीयात् तावन्न शान्तिर्मम चेतसः स्यात्।।१८।।

किञ्च (क्षणं विचिन्त्य) हा........दैव!

सपदि भारतमातुरुदित्वरं
महिममण्डितविद्युतिभाश्वरम्।
सुचिरवैभवभासि यशः परं
पुनरुदेतुतरामिति चिन्तये।।१९।।

अतश्च (दृढं गाम्भीर्यं दर्शयन्)—

ब्रह्मचर्यं च कौमार्यं ध्रुवमेतद् व्रतद्वयम्।
बिभ्रदाजीवनं देशोद्धारायात्मानमर्पये।।२०।।

(आचार्यस्य पादयोः पतति। सर्वे आश्चर्यचकिताः पश्यन्ति पुष्पवृष्टिर्भवति)।

**आचार्यः**— (सोल्लासमुत्थाप्य परिष्वजन्) वत्स चन्द्रशेखर! इदं भीष्मप्रतिज्ञाद्वयमुद्घोषयन् त्वं नूनमद्य सत्यव्रतं भीष्ममतिक्रम्य वर्तसे। यतो हि—

भीष्मः पुरा राजपदं प्रहातुं यद् ब्रह्मचर्यव्रतमाचचार।
तदेकमद्य द्वितयोदयेन परास्तमस्ति ध्रुवमित्यवैमि।।२१।।

तदहं तवानेन शौर्यातिशयोचितेन व्रतद्वयेन प्रमुदितान्तरात्मना भीष्मसदृशम् इच्छामृत्युवरप्रदानेन त्वां संवर्द्धयामि।

युद्धमध्यं गतोऽपि त्वं शत्रुभिः परिवारितः।
पराभवमनासाद्य स्वेच्छामृत्युमवाप्स्यसि।।२२।।

**[तच्छिरसि पाणिं निदधाति]**

**चन्द्रशेखरः**— (जानुभ्यामुपविश्य सपादस्पर्शं प्रणम्य च हर्षातिशयमभिव्यञ्जयन्) आचार्यवर! तत्रभवता प्रदत्तोऽयं वरः शिरसा धार्यते। यावज्जीवनं स्वव्रतद्वयं पालयता मया वैदेशिकगौराङ्गशत्रुशासकैः पराक्रान्तां भारतमातृभुवमुन्मोचयितुं तद्गौरवं पुनः प्रतिष्ठापयितुं च प्राणार्पणपुरस्सरं प्रयतिष्ये।

**आचार्यः**— साधु वत्स! साधु।

**।। पटाक्षेपः ।।**

**।। इति प्रथमं दृश्यम् ।।**

## ।। द्वितीयं दृश्यम् ।।

[स्थानम् — काशीस्थो न्यायालय:। न्यायाधीश आसन्दिकामधितिष्ठति। अधिसंख्याका: स्वातन्त्र्यान्दोलनकारिणो दण्डिता:। अन्ते चन्द्रशेखरस्तस्य पुर: प्रत्यानीतो निर्भीक: शान्तगम्भीराकृतिरुपतिष्ठते।]

**न्यायाधीशः**— (साश्चर्यम्) अये! त्वमल्पवयस्को बालक: कथमान्दोलनकारिभि: सह सत्याग्रहापराधे गृहीतभागोऽसि?

**चन्द्रशेखरः**— (शान्तगभीरभावं न्यायाधीशं पश्यन्) श्रीमन्! पारतन्त्र्य-पाशप्रधर्षितस्य स्वदेशस्योद्धाराय समर्पितजीवनस्य मादृशस्य बालकस्याल्पवयो न निर्दिष्टलक्ष्यमवरुणद्धि। सत्याग्रहश्च अपराधशब्देन भवता नैव दूषणीय:। यतो हि—

सत्यमुद्दिश्य सत्यार्थं सर्वस्वत्यागपूर्वकम्।
सत्यमागृह्यते येन स वै सत्याग्रहो मत:।।२३।।

तस्मान्न सत्याग्रहो मिथ्याग्रहेण गर्हणीय:।

**न्यायाधीशः**— (साश्चर्यम्) हंहो, बालक! त्वं तु वस्तुतो युवकानप्यतिशेषे। मामपि शिक्षयसि। शासनविरुद्धमाचरणं सत्याग्रहसंज्ञयाऽभिधीयमानमपि अपराधकोटौ परिगण्यते,

(झटिति मध्ये आक्षिप्य)

**चन्द्रशेखरः**— (सावेशम्) महाशय! परशासनमिदं न स्वशासनमिति वक्तुं युज्यते, तस्मात् परकृतं शासनं पारतन्त्र्यम्, तद्विरुद्धमाचरणं सत्याग्रह एव इति मन्तव्यम्।

**न्यायाधीशः**— (सरोषमुच्चै: स्वरेण) अरे रे धृष्ट बालक! मौनमालम्बस्व। एष हि न्यायालय:। तस्यावमाननां कर्तुं नास्ति कस्याप्यधिकार:। यद्यपि त्वं प्रगल्भ: कृतापराधश्च, तथाप्यहं तव तीक्ष्णबुद्ध्या तुष्टोऽस्मि। त्वन्नाम किमस्ति?

**चन्द्रशेखरः** — (सोत्साहम्)

अजानामिव शत्रूणां व्यूहमाजमदन्नहम्।
'आजाद' इति विख्यातं तन्मे नामेति बुध्यताम्।।२४।।

**न्यायाधीशः**— (सव्यङ्ग्यं विहस्य) अहो! अस्तु, तव पितुर्नाम किमस्ति?

**चन्द्रशेखरः** — (सद्विगुणोत्साहम्)

आत्मा वै जायते पुत्रः, पितृत्वं चात्मनिष्ठितम्।
आत्मा स्वाधीनता ख्यातो मत्पिताऽस्तीति मन्यताम्।।२५।।

**न्यायाधीशः**— (सोपहासम्) साधु, साधु। श्रुतं तवौद्धत्यपूर्णं वचः। अपि त्वद्गृहं कुत्रास्ति?

**चन्द्रशेखरः**— (सत्रिगुणोत्साहम्) यत्र हि —

स्वीधीनवृत्तिराजादो न्यायव्याजान्निगृह्यते।
निराधारादतः कारागारमेव गृहं मम।।२६।।

**न्यायाधीशः**— (सोपष्टम्भम्) ननु रे धृष्टबालक! मौनमास्स्व। अलं बहुना तव प्रलापेन। अल्पवयस्कत्वादेव त्वामहं मर्षयामि। यदि स्वस्यापराधस्य कृते क्षमां याचसे, तदा त्वां मोचयिष्यामि। अन्यथा यथार्हं दण्डभाग् भविष्यसि।

**चन्द्रशेखरः**— (सगर्वम्) महाशय! न्यायाधीश! नूनमपरिचितोऽस्ति भवान् मादृशानां भारतार्यभूमेर्वीरबालकानाम्। श्रूयतां तावत् —

रणे पुरस्तान्मरणं वरेण्यं
विनिघ्नतः शत्रुजनं ममास्तु।
तथापि रक्षार्थमहं कदापि
क्षमां भवादृक्षजनं न याचे।।२७।।

**न्यायाधीशः** — (सरोषम्) एवम्, तद्भुङ्क्ष्व त्वमात्मनो धृष्टतायाः फलम्। नीयतामयं बालकः, नग्नपृष्ठोपरि पञ्चदशवेत्रप्रहारैर्दण्डविधिं विधाय प्रमुच्यताम्। (न्यायाधीश उत्थाय निष्क्रान्तः। आरक्षिद्वयेन चन्द्रशेखरो निगृहीतहस्तयुगो दण्डदानस्थलं नीयते)।

**प्रथम आरक्षी**— (काराधीक्षकमभिवाद्य) श्रीमन्! बालकोऽयं सत्याग्रहापराधात् पञ्चदशवेत्रप्रहारैर्दण्डनीय इत्यादिष्टं श्रीमता न्यायाधीशेन तदर्थं भवता दण्डविधिर्विधीयताम्।

**काराधीक्षकः**— (भटमाह्वयन्) भट! एहि सत्वरम्।

**भटः**— (सवेत्रदण्डं प्रविश्य काराधीक्षकमभिवाद्य च) श्रीमन्! किमाज्ञापयति भवान्। तत्कृते सज्जीभूतोऽहमस्मि।

**काराधीक्षकः** — एष बालकः सत्याग्रहापराधात् पञ्चदशवेत्रप्रहारैर्दण्डनीय इत्यादिष्टं न्यायाधीशमहाशयेन। तदस्य नग्नपृष्ठोपरि मत्समक्षं त्वं पञ्चदशवेत्रप्रहारान् कुरुष्व।

**भटः** — यथाज्ञापयति श्रीमान्। [ भटः हस्तेनागृह्य निर्दिष्टदण्डस्थलं नीत्वा तत्कञ्चुकमवमोचयति, बालकश्च गभीरमौनं तिष्ठति ]।

**काराधीक्षकः** — (उच्चादेशस्वरेण) भो भट! तैलाक्तं वेत्रदण्डमादाय अविराम-मैकैकः प्रहारस्त्वया कार्यः। घटीमालोक्य संख्यापूर्तौ सत्यां यदाऽहं निर्देक्ष्यामि तदा त्वं विरमिष्यसि।

**भटः**— (प्रहारोद्यतः) ननु भो बालक! सावधानो भूत्वा इदानीं वेत्रप्रहारान् सहस्व।

**चन्द्रशेखरः**— (सोत्साहम्) हंहो! भटापसद! सर्वथा सावधानोऽस्मि। त्वं सम्पूर्णबलोद्धतं वेत्रप्रहारान् विधेहि।

[ भटो वेत्रप्रहारान् करोति। चन्द्रशेखरश्च प्रतिप्रहारं 'जयतु भारतम्' भारतमाता विजयताम्' इति चोच्चैरुद्घोषयति। काराधीक्षको घटीमालोकयन् प्रहारान् गणयति ]।

**काराधीक्षकः**— (दक्षिणहस्तमुत्थाप्य) भो भट! विरम त्वमिदानीम्। नियतसंख्या-पूर्तिर्जाता। (चन्द्रशेखरस्य वैकल्यरहितं स्वरूपं दृष्ट्वा साश्चर्यं स्वगतम्) अहो! नैतादृशोऽद्भुतसाहसोत्साहशौर्यसम्पन्नोऽपूर्वधैर्यवान् वीरबालो मया दृष्टपूर्वः। प्रबलवेत्रप्रहारेऽपि अनेन नैकोऽपि शीत्कारशब्दः कृतः। (प्रकाशम्) भो बालक! गच्छेदानीं यथेच्छम्, सम्प्रति दण्डमुक्तः संवृत्तोऽसि। इमान् चतुःपणकान् गृहाण वेत्रपातसञ्जातप्रघातचिकित्सायै। (इति चतुःपणकान् तस्मै ददाति।)

**चन्द्रशेखरः**— (सरोषं पणकान् तन्मुखोपरि प्रक्षिप्य गर्जन्निव) अये क्रूरकाराधीक्षक! रक्षैतान् धातुखण्डान् त्वमात्मनो मुक्त्यर्थम्। अहन्तु समर्पितात्मजीवनोऽस्मि भारतमातृमुक्त्यर्थम्। श्रूयतां सकर्णस्फारं ममोद्देश्यम् —

जयतु भरतभूमिर्मातृरूपाऽभिवन्द्या
जयतु जगति वन्द्यं भारताखण्डराष्ट्रम्।
चिरविलयमुपैतु क्रूरवैदेशिकानां
कुटिलकुनयकूटोद्दामदुःशासनं च।।२८।।

किञ्च —

एकैकवेत्रप्रखरप्रहारप्रघातजातव्रणरक्तबिन्दून्।
गौराङ्गशत्रून् शतशो निहत्य प्रतर्पयिष्ये प्रतिकर्तुकामः।।२९।।

[ नेपथ्ये जनसमूहस्तारस्वरेण 'चन्द्रशेखर आजादो विजयताम्', 'चन्द्रशेखर आजादः अमरोऽस्तु', 'भारतमातुर्जयोऽस्तु', 'भारतराष्ट्रं स्वतन्त्रमस्तु' इति महान् कलकलः श्रूयते। एतन्मध्ये कारागारपरिसराद् बहिरेकः प्रौढपुरुषः प्रविशति ]।

**प्रौढः पुरुषः**— (हर्षातिरेकं दर्शयन्) चन्द्रशेखर! न त्वादृशो वीरबालकः क्वचिद् दृष्टः श्रुतो वा। ध्रुवमेषा भारतधरित्री त्वज्जनुषा धन्यधन्या जाता। त्वादृशेऽपूर्वशौर्यशालिनि वीरबालके सति भारतमाता नातिचिरं पारतन्त्र्यकदर्थिता स्थास्यति। एहि वीर! एहि, बहिस्तु करगृहीतपुष्पस्रजः सहस्राधिका जनास्ते स्वागताभिनन्दनं कर्तुं प्रतीक्षन्ते।

**चन्द्रशेखरः**— (श्लथकायोऽपि प्रौढपुरुषमवलोकयन्) महानुभाव! नूनं भवान् निजाकारचेष्टितेन कश्चिन्महापुरुषः प्रतिभाति। ममापरिचितोऽपि चिरपरिचित इव व्यवहरन् मामनुग्रहीतुमत्र सम्प्राप्तः।

**प्रौढः पुरुषः**— वीरवर चन्द्रशेखर! अहमस्मि नगरस्यास्य प्रधानश्रेष्ठी शिवप्रसादगुप्तसंज्ञकः। अद्य किल तवातिशयशौर्येण प्रभावाविष्टोऽहं त्वां प्रतिग्रहीतुमत्रागतः। नागरिकाभिनन्दनेन त्वदीयं सभाजनं कर्तुमुत्सुका नागरिकाः स्वप्रातिनिध्येन मां त्वामानेतुं न्ययोजयन्। नाद्य ते कश्चिदपरिचितः। सर्वेऽपि पौरास्त्वन्नामयशोविक्रमेण परिचिताः सगर्वमात्मगौरवमामनन्ति।

**चन्द्रशेखरः** — (पीडां निगूहयन्) महानुभाव! भवदनुग्रहेण कृतार्थोऽस्मि। भारतमातुः पारतन्त्र्यपाशोन्मोचनाय समर्पितात्मनो ममोत्साहसंवर्धनं विधातुं पवित्रलक्ष्याधिगमाय प्रेरणां प्रदातुं च भवादृशा महामानवा मादृशानामादर्शदर्शका भवन्ति।

**शिवप्रसादगुप्तः**— (प्रहर्षभरेण) वीरचन्द्रशेखर! अद्य न केवलं वाराणस्याः प्रत्युत सम्पूर्णदेशस्य प्रशस्तमस्तकं त्वं स्वस्यापूर्वशौर्यप्रकर्षेण सगर्वगौरवोन्नतमकार्षीः। तेन हि—

वीरप्रसूस्तव शुचिर्जननी प्रणम्या
यस्याः सुतस्त्वमसि निर्मितशौर्यमूर्तिः।
नूनं त्वया विकलभारतमातुरस्या
उन्नेष्यतेऽधिभुवनं धवला सुकीर्तिः।।३०।।

अपि च —

'आजाद'नाम्ना यदघोषि नव्यं
त्वयाऽभिधानं स्वयमात्मनीनम्।
मया समुद्घोष्य पुनः प्रदत्तं
तदेतदेव प्रथितं तवास्तु।।३१।।

**(वक्षसा तं मेलयति)**

**चन्द्रशेखर आजादः**— (प्रसन्नमुद्रया) महानुभाव! भवद्दत्तमिदं स्वाभिमानसूचकं पुण्याभिधानं सगर्वं स्वीकरोमि, अनेन '**आजाद**' इति नाम्ना समग्रं राष्ट्रं प्रतिष्ठामधिगच्छेदिति परमेश्वरं प्रार्थये च। (नेपथ्ये 'चन्द्रशेखर आजादो विजयताम्', 'वन्दे मातरम्', 'भारतमातुर्विजयोऽस्तु' इत्यादिः पुनर्जयघोषः।

**।। पटाक्षेपः ।।**

**।। इति द्वितीयं दृश्यम् ।।**

## ।। तृतीयं दृश्यम् ।।

[ क्रान्तिकार्यान्दोलने देशस्य चतुष्कोणेषु व्यूहरचनायां दीर्घकालं व्यतीत्य, अष्टवर्षानन्तरं झांसीजनपदस्यौरछाख्योपनगरस्य पार्श्वे हिमरपुरग्रामस्तत्र सोमारनद्याः कूले हनुमन्मन्दिरे कश्चित् साधुवेषो युवा तेजस्वी ब्रह्मचारी गृहीत-कम्बलकमण्डलुर्ग्रामे गृहाद् गृहान्तरं भिक्षमाणः प्रतिवसति। रात्रौ गूढं निभृतकर्मणि व्यापृतः, प्रातः सायञ्च रामायणादिधर्मग्रन्थप्रवचनेन कालं यापयति ]। (तत्र तत्रत्यारक्षिस्थानकात् तद्वृत्तमभिज्ञातुं द्वौ आरक्षिणौ प्रविशतः)

**प्रथम आरक्षी**— (समक्षमुपगत्य दृढस्वरेण) भो साधु-ब्रह्मचारिन्! त्वमत्र कुत आगत्य कियता कालेन प्रवससि? त्वन्नाम किमस्ति किमभिज्ञानम्? किं वा तवाभिजनम्? इत्यादि सर्वं स्पष्टं ब्रूहि। अत्रत्यः स्थानकाध्यक्षस्त्वद्-विषयकं रहस्यमवगन्तुमिच्छति, तेन सन्नियोजितौ आवामत्रागतौ इति।

**साधु-ब्रह्मचारी**— (सावधानो भूत्वा सस्मिताश्चर्यं प्रदर्श्य) अये! कर्मदक्षौ! आरक्षिणौ, किमस्मादृशानां साधुब्रह्मचारिणामपि किमपि रहस्यं ज्ञातव्यम्? यदवगन्तुमिच्छति युष्मत्स्थानकाध्यक्षः, मम नाम हरिशङ्करब्रह्मचारीति

विश्रुतम्, सर्वत्र पर्यटन् कियन्तं कालं प्रवसितुमत्रागतोऽस्मि, किञ्चिदभिज्ञानमभिजनं वा न साधूनां प्रष्टव्यं भवतीति।

**द्वितीय आरक्षी**— (सोपहासम्) साधुवर! साधूच्यते, न ते किमपि रहस्यं ज्ञातव्यमस्ति, किन्तु न त्वं कृतकच्छन्नवेशश्चिरं स्थातुं शक्ष्यसि, त्वन्निगूहितं रहस्योन्मीलनं कृत्वा त्वदीयवास्तविकं रूपमावाभ्यां दर्शयिष्यते।

**साधु-ब्रह्मचारी**— (साट्टहासम्) हन्त! वस्तुतो यथोक्तं मया युवां कर्मदक्षौ आरक्षिणौ तदेतदसत्कर्म साधुजनपीडनं नाम कथं कर्तुमुद्यतौ? कृतकच्छन्नवेशस्य मे कीदृग् रहस्यमुन्मीलयितुमिच्छथः? किं वा मदीयं वास्तविकं रूपं दर्शयिष्यथः? हा, हा, हा, हा.........।

**प्रथम आरक्षी**— (शङ्किताकारेण) साधु-ब्रह्मचारिन्! कृतकच्छन्नवेशस्त्वं किं प्रख्यातः क्रान्तिकारी आजादोऽसि! इत्याशङ्कावहे। सप्रमाणमेतस्या आशङ्काया निवारणं यावन्न स्यात्, तावन्न त्वाम् आवां मोक्तुकामौ स्वः। यदि त्वमाजादस्तदा नूनमस्मत्पञ्चाप्यङ्गुलयो घृतान्तर्गताः। तस्य निर्बन्धनेन तदुपरि घोषितलक्षरूप्यकद्रव्यराशिरावाभ्यां करस्थीकरिष्यते। (उभावुच्चैः प्रहसतः)

**साधु-ब्रह्मचारी**— (अतिसावधानम्) हा हा हा........अये भोः! सत्यं युवां ब्रूथः। साधवस्तु आजादरूपाः स्वच्छन्दस्वभावाः परितः पर्यटन्ति। ततोऽहमपि तथैव अवगन्तव्यः। यतो हि —

गृहान् निजान् बन्धुजनान् विहाय
मातुः पितुर्मोहमपास्य दूरम्।
उपास्यमीशं परमं शरण्यं
श्रिताः स्वतन्त्रा नु साधवस्ते।।३२।।

तेन हि —

अजो ब्रह्म तदुद्भूतं ज्योतिराजं ददाति यः।
सोऽहमाजादरूपोऽस्मि साधुरित्यवगम्यताम्।।३३।।

इदानीमस्मदीशस्य भगवतो हनूमतः सेवार्चनकालोऽतिक्रामति। अतोऽहं गच्छामि। युवामपि स्वनियोगमनुतिष्ठतम्। (गन्तुमिच्छति)

**द्वितीय आरक्षी**— (सवेगं पुरतः समेत्य) अये भोः साधु-ब्रह्मचारिन्! नैवं त्वामावां मोक्ष्यावः। आवाभ्यां सह स्थानकाध्यक्षस्य समीपं स्थानकं प्रचल। तदादेशादेव ते मुक्तिः सम्भवति। (उभौ तदेकैकहस्तं ग्रहीतुमिच्छतः।)

**साधु-ब्रह्मचारी**— (सावेगभ्रूभङ्गं रोषमभिनयन्) अरे रे आरक्षिदुर्जनौ! दूरं तिष्ठतम्, नो चेद् भस्मसाद् भविष्यथः। (उभौ सभयं दूरं तिष्ठतः।) ननु सावधानं शृणुतं तावत् —

अस्मदीशो महावीरो हनूमान् रुद्ररूपवान्।
तत्प्रभावाद् युवामत्र करिष्ये भस्मसादहम्।।३४।।

किञ्च —

त्वदीयः स्थानकाध्यक्षो नो महीयान् हनूमतः।
तदर्चार्थमहं यामि युवां यातं तदन्तिकम्।।३५।।

(सवेगं निर्गच्छति। तद्भयकम्पमानगात्रौ आरक्षिणौ साक्षिस्फारं पश्यतः।)

[ स्थानम् — साधुब्रह्मचारिणो हनुमन्मन्दिरस्य परिसरः ]।

समयः — तमिस्राया द्वितीयः प्रहरः ]।

(एका कृतावगुण्ठना युवतिः प्रविश्य साधुब्रह्मचारिणः पार्श्वे समुपविशति।)

**साधु-ब्रह्मचारी**— (सस्पन्दनस्पर्शमनुभूय युवतिं पुरो विलोकयन् साश्चर्यं) अयि देवि! कासि त्वम्? कुत आगतासि? अपि त्वं केनापि सङ्कटेन ग्रस्ता?

आहोस्वित् केनचिद् दुराचारिणा दुष्टेन आक्रान्तासि? स्पष्टं ब्रूहि। मत्तः किं ते प्रयोजनम्?

**युवतिः**— (लज्जां नाटयन्ती) ननु सुभग! अहमत्रत्यग्रामप्रमुखस्य कन्यकास्मि। न केनापि सङ्कटेन ग्रस्तास्मि, न वा केनचिद् दुराचारिणा दुष्टेनाऽऽक्रान्तास्मि। प्रत्युत त्वयि प्रेमानुरक्तं मे मनो मां त्वां प्रत्याकर्षयत्, अतोऽहमत्रागतास्मि। ममेयं प्रणययाचना न त्वया विफलीकार्या।

**साधु-ब्रह्मचारी** — (सानुक्रोशं विहस्य) देवि! अहमाजीवनं गृहीतब्रह्मचर्यव्रतः परित्यक्तजगत्प्रपञ्चो विगतगार्हस्थ्यमोहभ्रमः साधुरस्मि। त्वादृश्यो युवतयो मत्कृते देव्य इव पूज्याः सन्ति। अस्थाने तवेदं प्रेमानुरक्तं मनस्त्वां मां

प्रत्याकर्षयत्। देवि! शीघ्रं निवर्तस्व। यदि कश्चिद् रहोगतां त्वां मया सह कदाचित् पश्येत्, तदा महदनर्थकं सम्भवेत्। (सानुनयं तां प्रतिनिवर्तयितुमुत्तिष्ठति)

**युवतिः** — (सावेशम्) उत्थाय कृतकसाधो! कीदृशस्त्वं गृहीतब्रह्मचर्यव्रतः साधुरसि इत्यहं सम्यग् वेद्मि। त्वद्गतं रहस्यं विजानामि। गतमध्यरात्रे त्वत्पार्श्वे त्वां मन्त्रयितुमागतस्य त्वद्गूढमित्रस्य मुखादत्र प्रच्छन्नाहं तव नाम अश्रौषम्। त्वं हि प्रख्यातक्रान्तिकारी चन्द्रशेखर आजादोऽसि। अतो मैवं मां प्रतारयस्व। अहं हि —

त्वयि निबद्धरतिस्तरुणोत्तम! प्रतिपदं तव कार्यसहायिका।
विपदि सम्पदि चानुपलं सदाऽप्यनुगता तव जीवनसङ्गिनी।।३६।।

अपि च —

राष्ट्रस्वातन्त्र्यसङ्ग्रामे प्रसरत्क्रान्तिकर्मणि।
त्वदीयस्कन्धतः स्कन्धमामेल्य स्थास्यते मया।।३७।।

ततस्त्वं तरुणशिरोमणे! न मां वञ्चयितुमर्हसि।

**साधु-ब्रह्मचारी** — (सदीर्घोच्छ्वासं क्षणं विचिन्त्य स्वगतम्) मम रहस्यवेदिनीयं मया उपायान्तरेण तोषणीया। (प्रकाशम्) देवि! सत्यं ब्रवीषि। अहं तव पवित्रप्रणयावेदनं तिरस्कुर्वन् आत्मानमपि तिरस्करोमि, किन्तु या काचिदन्यादृशी प्रतिज्ञा मया कृता, सा त्वया सावहितं श्रूयताम् —

यावन्न राष्ट्रमखिलं परतन्त्रतायाः
पाशं छिनत्ति निजशत्रुजनान् निहत्य।
तावन्न जातु रमणीप्रणयानुबन्धाद्
आजीवनं परिणयं स्वमहं करिष्ये।।३८।।

किञ्च —

यदि त्वं स्वातन्त्र्यं कलयसि हृदा भारतभुव-
स्तदा देवि! स्वस्थं सुदृढमथ चित्तं कुरु निजम्।
यथाहं कौमार्यव्रतमनुचरन् कर्मनिरत-
स्तथा स्वीयं रम्यं शुचि नववयो यापय चिरम्।।३९।।

अथ च —

स्वाधीनशासने जाते स्वदेशे ध्रुवमावयोः।
सङ्गमो भविता भूयस्त्वमन्तस्तोषमाप्नुयाः।।४०।।

ततो देवि! मद्वचनात् स्वानुकूलक्षणं प्रतीक्षमाणा गृहं गच्छ (इति तां निवर्तयति)। (स्वगतम्) मयापि इदं स्थानं साधुरूपं च परित्यज्य त्वरितं स्थानान्तरं गन्तव्यम्। (उभौ निष्क्रान्तौ)।

**।। पटाक्षेपः ।।**

**।। इति तृतीयं दृश्यम् ।।**

## ।। चतुर्थं दृश्यम् ।।

[ स्थानम्—प्रयागस्थम् अल्फ्रेडनामकोद्यानम्। समयः—प्रातः सार्धनववादनम् ]

**चन्द्रशेखर आजादः**— (सदीर्घोच्छ्वासम्) मित्र चन्द्रकेतो! मन्ये मम स्वेच्छा-मृत्युवरणस्य स कालः सम्प्राप्तः। यतो हि —

दृष्टं मृत्युनिमन्त्रणं मम पुरो द्वारं ददद्धस्तकं
क्रूराचारकुशासनं प्रति पराक्रान्तिं चिरात्कुर्वतः।
रुद्धं दैवहतेन भाग्यपटलं किं वा विनाऽऽत्माहुतिं
स्वातन्त्र्यश्रियमुज्ज्वलां न वृणुते कश्चिन्नरो मादृशः।।४१।।

(परितः परिक्रम्य) किञ्च —

केचित् क्रान्तिप्रलयहुतभुक्भ्राष्ट्रभस्माङ्गभूताः
केऽप्याक्रान्ता रिपुखलदलैर्लब्धकाराधिवासाः।
यूथभ्रष्टाः करिकलभवद् दिक्षु चान्ये विलीना
हा! दैव! त्वं किमु नु कुरुषे निर्दयं निर्दहन् माम्।।४२।।

(क्षणं विरम्य साश्वासम्) अथवा —

यदि परीक्षितुमिच्छसि साम्प्रतं त्वमसहायमिव प्रविहाय माम्।
तदहमात्मपराजयमामृतेः परिवृणे न रणे परिपन्थिभिः।।४३।।

अतश्च —

अद्यारभ्य महाक्रान्तियुद्धारम्भक्रतूत्सवे।
रिपूणामाहुतीर्यच्छन् जुहोम्यात्मानमप्यहम्।।४४।।

(एकत्र चत्वरे सावेशवीरासनमुपविशति)।

**चन्द्रकेतुः**— (सानुनयमाश्वासयन्) वयस्यवर! अलं परितापेन। प्रतिकूलायामस्यां स्थितौ सधैर्यमार्यवीरा विघ्नान् विधूय महाविपद्वारिधिमुत्तरन्ति। महत्यपि सङ्कटे न कदापि भवता धृतिरुज्झिता। कोऽयमस्ति स्वेच्छामृत्यु-वरणस्य कालो यो भवन्तमनुबध्नाति?

**चन्द्रशेखर आजादः**— (सस्मितं दृढगाम्भीर्येण) चन्द्रकेतो! न खलु परितापप्रभावोज्झितधैर्योऽहमस्मि, प्रत्युत प्रतिकूलामिमां स्थितिं विक्रमार्जितपौरुषे निराकर्तुमुद्यतिष्ये। विघ्नैः सह क्रीडनं त्वस्मद्व्यसनम्, परं सहायकानां भगतसिंह-रामप्रसादविस्मिल-राजगुरुप्रभृतीनां क्रान्तिकारि-सुहृदां कारागृहान्तर्दुर्दशां स्मारं स्मारं दुःखमनुभवामि। (क्षणं दीर्घमुष्णं निःश्वस्य किञ्चिद् विहस्य च) ननु मित्र! यत्त्वया जिज्ञासितं स्वेच्छामृत्युवरणं नाम तन्ममायत्तम्। तस्य कालः सम्प्राप्त इत्यनुमिनोमि।

**चन्द्रकेतुः**— (सोत्कण्ठम्) वयस्यवर! कथमिदं भवदायत्तमिति भिन्नार्थमभिधातव्यम्। अपि च सहायकानां क्रान्तिकारिसुहृदां कारागृहान्तर्दुर्दशाविषयिका चिन्ता भवदुद्देश्यपथं विषमीकरिष्यतीति तन्मुक्तेन भवता स्थातव्यम्।

**चन्द्रशेखर आजादः**— (कक्षान्तर्निगूढां द्विनालिकां भुशुण्डिकां दक्षिणकरेणाकृष्य दर्शयन्) ननु मित्र पश्येमां सदैव मदेकान्तसहचारिणीम्। अनयैव मदायत्तं स्वेच्छामृत्युवरणम्। (अधिकर्णपटि भुशुण्डिकां संश्लेषयन्) ननु पश्य। एवमियं क्षणेन स्वेच्छामृत्युवरणं कर्तुं मां सफलीकरिष्यति। अहं हि —

युध्यमानो यथाशक्ति म्लेच्छैर्गौराङ्गशत्रुभिः।
स्वीकरिष्यामि तान् निघ्नन् स्वेच्छामृत्युमथान्ततः।।४५।।

**चन्द्रकेतुः** — (सखेदं दीर्घमुच्छ्वस्य भयमभिनयन्) वयस्यवर! मा मैवं भवानात्मविषयेऽमङ्गलं ब्रवीतु! नवीनाः सहायका भवत्साहाय्यं संविधातु-मेकत्रीभविष्यन्ति।

**चन्द्रशेखर आजादः**— (नैराश्यमभिनयन्) मित्र चन्द्रकेतो! क्व नु पुनस्ते सहायकाः सङ्कटकाले प्रतिपदं जागरूका मम साहाय्यं संविधातु-

मायास्यन्ति, क्व नु वा ते नवीना एकत्रीकृता निगूढतरक्रान्तिकर्मणि विश्वासस्थानमाप्स्यन्ति।

**चन्द्रकेतुः**— (सोत्साहम्) वयस्यवर! अहमितः किञ्चिद्दूरस्थितमधिगङ्गा-सरित्तटमेकमाश्रमपदमधिवसतः परमज्ञानतपस्तेजोमयस्य मत्पूर्वपरिचितस्य स्वामिस्वाधीनजीवनानन्दाख्यस्य महात्मवरस्य समीपं गत्वा भवतो निभृतावासव्यवस्थां विधास्यामि। स हि क्रान्तिकारिणां शरणप्रेरणाप्रदः। गौराङ्गास्तत्प्रभावातिशयात्तत्र न गन्तुमुत्सहन्ते। तत्र भवन्मनोऽनुकूलं सर्वं सेत्स्यति।

**चन्द्रशेखर आजादः**— (साश्वासोत्कण्ठम्) मित्र चन्द्रकेतो! नूनमहं तस्य महात्मनो महापुरुषस्य दर्शनार्थं त्वया सह जिगमिषामि। सति सौविध्ये तत्प्रेरणाप्रदोपदेशेन क्रान्तिकारिणां सङ्घटनं पुनरुद्दिधीर्षामि। उत्साहाति-रेकेण शीघ्रतया निर्विमर्शकृताभियानेन सर्वेऽपि क्रान्तिकारिसहायकाः छिन्नभिन्नाः समभूवन्।

**चन्द्रकेतुः**— (समाश्वासयन्) वयस्यवर! त्वादृशा वीरपुरुषा विपरीतदशायामपि विक्रमोत्साहशालिनो न पराभूतिमुपगच्छन्ति। यतो हि—

पराक्रमप्रसूतपुण्यपूतधैर्यशालिनो
भवादृशा दधत्समिद्धतेजसाऽवभासिनः।
असंख्यशत्रुहस्तिसङ्घभङ्गदक्षकेसरि-
प्रतापभास्वदुग्रविग्रहा विभान्ति सङ्गरे।।४६।।

ततश्च —

लक्ष्यमालक्ष्य गौराङ्गरक्षोभिः क्षोभितामिमाम्।
भारताम्बां परित्रातुं भवानेकोऽप्यनेकवत्।।४७।।

अतो वयस्यवर! स्वनियोगमनुष्ठातुमद्य बद्धपरिकरो भवानुत्तिष्ठतु। (चन्द्रशेखरो यावत् किञ्चिद् विवक्षति तावद् नेपथ्ये महान् कोलाहलः, आग्नेयास्त्रध्वनिश्च श्रूयते।)

**चन्द्रशेखर आजादः**— (करगृहीतभुशुण्डिः सावधानमुत्थाय) ननु मित्र! चन्द्रकेतो! बहिर्गत्वा पश्य, कीदृशोऽयं कोलाहलः, आग्नेयास्त्रसङ्घट्टध्वनिश्च श्रूयते? मन्ये, यथोक्तसङ्कटकालः प्रत्यासन्नः।

(चन्द्रकेतुर्बहिर्गत्वा शताधिकान् गौराङ्गसैनिकान् दृष्ट्वा च सोद्वेगं प्रत्यागच्छति।)

**चन्द्रकेतुः**— (स्खलद्गतिः सत्वरं प्रविश्य) हा हन्त! महत् सङ्कटं प्रत्यासन्नम्। गृहीताग्नेयास्त्राः शताधिका गौराङ्गसैनिका उद्यानं परितो निरुध्य तिष्ठन्ति। तदिदानीं न कश्चिदात्मरक्षणोपायः प्रतीयते, ऋते पौरुषप्रदर्शनात्।

**चन्द्रशेखर आजादः**— (सुदीर्घमुच्छ्वसन् आकाशं चतुर्दिशो भुवञ्चावलोक्य) मित्र चन्द्रकेतो! ममान्तकालः स्वेच्छामृत्युवरणस्य पुरस्तादासन्नः; किन्तु भूयसो दुष्टारातीन् गौराङ्गसैनिकान् निहत्य तथा कर्तुमाकाङ्क्षे। त्वं हि तेषामनभिज्ञातोऽसि। अतो झटिति निर्गच्छ।

**चन्द्रकेतुः**— (सखेदमार्तभावं दर्शयन्) वयस्यवर! आपद्गतस्य भवादृशः श्रेष्ठसुहृदः परित्यागलक्षणेन कलङ्केन न मां दूषयितुमर्हति भवान्। अहमप्यत्र भवत्सङ्गतो मृत्युमङ्गीकरिष्ये।

**चन्द्रशेखर आजादः**— (सस्नेहरोषम्) चन्द्रकेतो! नायं प्रतिवादकालः, न वा केनापि कलङ्केन त्वं दूषितो भविष्यसि, प्रत्युत जीवन् नः शेषकार्यं साधयिष्यसि। एष ममादेशः 'शीघ्रं निर्गच्छ' इति। (करधृतभुशुण्डीको वृक्षान्तरितकायः सावधानं तिष्ठति ) (खिन्नमनस्कश्चन्द्रकेतुश्चन्द्रशेखरं वीक्षमाणो निर्गच्छति)।

**गौराङ्गसेनानायकः**— (नेपथ्ये) आजाद चन्द्रशेखर! त्वं परितो निरुद्धोऽसि। यद्यात्मानं क्षणद्वयेन शीघ्रं न समर्पयसि, तदा सैनिकानामाग्नेयास्त्रप्रहारैर्मृत्युमुखं प्रवेक्ष्यसि। (दीर्घकालं गोलिकाध्वनिः श्रूयते। चन्द्रशेखरो बहुशः सैनिकान् निपात्य अन्त्यगोलिकयाऽऽत्मानं निर्भिद्य स्वेच्छामृत्युं वृणोति।)

**चन्द्रकेतुः**— (प्रद्रवन् स्वामिस्वाधीनजीवनानन्दाश्रमं प्रविश्य सदीर्घोच्छ्वासम्) स्वामिवर! महदनर्थकं संवृत्तम्। आजादश्चन्द्रशेखरो गौराङ्गसैनिकैः अल्फ्रेडोद्याने परितो निरुद्धस्तैः सह सुचिरं युध्यमानोऽन्त्यगोलिकया स्वकर्णपटीं निर्भिद्य स्वेच्छामृत्युं गतः। (इति वदन् तत्पादयोः पतति)।

**स्वामिस्वाधीनजीवनानन्दः**— (चन्द्रकेतुमुत्थाप्य समाश्वासयन्) वत्स! धैर्यमाधत्स्व। इदं महदनर्थकं खलु नासम्भावितं संवृत्तम्। चन्द्रशेखर आजादो नूनं स्वराज्यबीजमारोप्य वीरगतिं गतो भगवतश्चन्द्रशेखरस्य शिवस्य सायुज्यमगच्छत्। यतो हि—

श्रीचन्द्रशेखरशिवस्य सदंशभूतोऽभूच्चन्द्रशेखरनराकृतिभव्यभूतिः।
येनात्मजीवनमहो निजदेशमुक्त्यै सानन्दमर्पितमपूर्वमदर्शि शौर्यम्।।४८।।

अपि च —

(परिक्रम्य मध्ये मञ्चमास्थाय)

चन्द्रशेखरमणी रमणीयस्वर्गराज्यमधिरुह्य राजताम्।
यत्स्वराज्यमधिगन्तुमुप्तवान् बीजमत्र सफलं तदेधताम्।।४९।।

तथापीदमस्तु— (दक्षिणहस्तमुद्यम्य)

**भरतवाक्यम्**

स्वातन्त्र्यश्रियमाश्रयत्पुनरिदं राष्ट्रं समुद्योततां
वैदेश्यप्रसरत्प्रशासनपदं विध्वंसमापद्यताम्।
विश्वं शश्वदनन्तशान्तिविकसत्सौहार्दमुज्जृम्भतां
सम्पुष्यत्सुरभारतीसुमनसामन्तः समुद्भासताम्।।५०।।

**(सर्वे निष्क्रान्ताः)**

**।। पटाक्षेपः ।।**

**।। इति पण्डितेन्द्रमहाकविसम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयसाहित्यविभागाचार्य-श्रीशिवजी-उपाध्यायप्रणीतस्य स्वातन्त्र्यशौर्यस्य चतुर्थं दृश्यं सम्पूर्णम् ।।**

**।। समाप्तञ्चेदं नाट्यम् ।।**



# महाकविभवभूतिनाट्यसाहित्यादर्शे भारतदर्शनम्

**डॉ. बालकृष्णशर्मा**

सहायकप्राध्यापकः साहित्यविभागाध्यक्षश्च
शासकीयसंस्कृतमहाविद्यालये
ग्वालियरनगरम् (म.प्र.)



अनुरसितललितपदावलीकं काव्यं गभीरार्थावलीभरितमुदात्तकथावस्तुविन्यासव्याजेन समकालीनसमाजसंस्कृतिसभ्यतानां कमनीयचित्रं प्रस्तौति, येनास्य समाजादर्शत्वेन ख्यातिः प्रथिताऽस्ति। कविप्रतिभाभासमानेऽस्मिन् काव्यसाहित्यादर्शे देशकालपरिस्थितीनां धर्मदर्शनकलासंस्कृतीनां राजनैतिकसामाजिकसांस्कृतिकसमुन्नतीनाञ्च प्रतिबिम्बा भासन्ते। अतस्समसामयिकभारतीयसंस्कृतिकलाधर्मदर्शनसमाजराजनीतिप्रभृतीनां दर्शनाय तत्कालीनकाव्यसाहित्यानुशीलनमपेक्षितमिति सुविदिततरं सर्वेषां विदुषां चिन्तकानाम्। प्रातिभचक्षुष्मन्तः कवयोऽतीतानागतवर्तमानविषयाणामनुभूतीः सरसभावाभिव्यञ्जनासमाश्रयेण चित्रयन्ति काव्यफलके, येन सहृदयहृदयाह्लादहेतुभूतचित्रगीतमूर्तिस्थापत्येति ख्यातानां ललितकलानां जनमानसास्तीर्णधर्मदर्शनसंस्कृतिमान्यतानां जीवनाङ्गभूतविविधकर्तव्याचरणानाञ्च यथावसरं ललितविन्यासहेतोः प्रतिकाव्यमेकं भारतं भासमानमाभाति। अनेनैव सह प्रकृतिनटीनिरीक्षणपटिष्ठः कविरभिनिवेशपूर्वकं स्वकाव्येषु यथाप्रसङ्गमनेकप्रदेशनगरग्रामजनपदमार्गनदीसङ्गमगिरिकान्तारवनभूमिलोकानां वर्णनं प्रस्तौति। अतस्तस्य काव्येषु ललितभारतमनारतं लीलायमानमनुभूयते। काव्ये चित्रितानामेतेषां विषयाणामनुशीलनेन तदानीन्तनभारतस्य विग्रहः सहजतया दृश्यो भवति। विना भारतदर्शनप्रस्तुत्या न कोऽपि कविः स्वकाव्यं पूरयितुं शक्नोति। तथ्यमिदं मनसि निधाय काव्यशास्त्रिभिर्नाटकमहाकाव्यादिषु नगरार्णवशैलर्तुमन्त्रदूतमृगयावनसागरादीनां निबन्धनायानुशासितम्[१]। मेघदूतस्थमेघमार्गवर्णनेन रघुवंशमहाकाव्यस्थ-

---

१. दण्डिनः काव्यादर्शे, १।१४-१७, विश्वनाथस्य साहित्यदर्पणे च-६।३२२-३२४।

रघुदिग्विजयविन्यासव्याजेन तत्रत्यत्रयोदशसर्गस्थभारतदर्शनेन उत्तररामचरितस्थ-चित्रदर्शनाङ्कनिबन्धनेन च भारतस्य सजीवं दर्शनं भवति। एवमेव मुरारिकवेः अनर्घराघवस्य सप्तमाङ्के राजशेखरप्रणीतबालरामायणनाटकस्य च दशमाङ्के लङ्कातः अयोध्यापर्यन्तविस्तीर्णानां भारतभूभागानां जीवन्तवर्णनं प्राप्यते। एभिर्वर्णनैः कः सहृदयो न परिचितः? एतेषु स्थलेषु तत्कालीनभारतमेव मूर्तिमदिव चित्रितं प्रतिभाति। एतद्भवभूतेर्मालतीमाधवप्रकरणमेवास्ति यत्रेसवीयाष्टमशताब्द्या भारतस्य वैभवशालिनी नगरी पद्मावती मूर्तिमतीव चित्रिता विभाति। यथा मालतीमाधवप्रकरणस्थवर्णनैः प्रमाणितं भवति—

पद्मावती विमलवारिविशालसिन्धु-
पारासरित्परिकरच्छलतो बिभर्ति।
उत्तुङ्गसौधसुरमन्दिरगोपुराट्ट-
सङ्घट्टपाटितविमुक्तमिवान्तरिक्षम्[१]।।

[ एवं सुविचारितसुस्थकाव्यशास्त्रेण अविचारितरमणीयकाव्यैश्च विषयोऽयं प्रमाणितो भवति यत् काव्येषु भारतदर्शनमतिरमणीयत्वादुपादेयत्वाच्चावश्यं निबन्धनीयम्। सिद्धान्तस्यास्य प्रकाशे महाकविभवभूतिनाट्यसाहित्यपरिशीलनानन्तरं तथ्यमिदं विशदीभवति यदसौ कविरवहितचेतसा स्वरूपकेषु स्थाने स्थाने भारतीयसंस्कृति-कलाधर्मदर्शनानि सामाजिकराजनैतिकदशाश्च निपुणतया चित्रितवान्। प्रथमन्तावद् भवभूतेर्भारतस्य कालपरिवेशौ ज्ञातव्यौ स्तः। तत्र यथा विज्ञैर्निर्णीत-मीसवीयाष्टमशताब्द्या भारतमेव भवभूतेर्भारतमस्ति। कालेऽस्मिन् भारतवर्षस्य विदर्भराज्ये राष्ट्रकूटशासनं कान्यकुब्जराज्ये च यशोवर्मणः शासनमासीत्। एतत् शासनकालीनमेव भारतं भवभूतेर्भारतमस्ति। भवभूतिवर्णिता पद्मावती-नगरी कान्यकुब्जराज्यक्षेत्रे अवस्थिता आसीत्, भवभूतिश्च कान्यकुब्जेश्वरयशोवर्मणा सभाजितस्य राजसभायां प्रतिष्ठितश्चासीत्।

महाकविभवभूतिः स्वमालतीमाधवप्रकरणे भारतस्य दक्षिणापथक्षेत्रपद्मपुर-नगरकालप्रियानाथपद्मावतीनगरीसुवर्णबिन्दुमहादेवविदर्भदेशकुण्डिनपुरनगरप्रभृतिभिः परिचितः प्रतिभाति। विशेषतः पद्मावतीनगर्याः सूक्ष्मनिरीक्षणसापेक्षवर्णनैः कवेः पद्मावतीनगर्यभिज्ञता तत्सम्बद्धता च प्रमाणिते भवतः। अस्या नगर्याः समीपस्थै-र्बृहद्द्रोणीशैलकान्तारगिरिनगरग्रामसरिदरण्यवरदासिन्धुपारालवणामधुमतीनदी-

१. मालतीमाधवप्रकरणे, ९।१।

सुवर्णबिन्दुमहादेवविविधवृक्षवनस्पतिश्मशानभूमिभगवतीकरालायतनप्रभृतिस्थानैः कविरसौ सुपरिचितो विभाति। एवमेव विन्ध्यपर्वतश्रीशैलादिभिरपि कविः परिचितः। प्रकरणेऽस्मिन् कवितदानीन्तनभारतस्य क्षेत्रेऽस्मिन् प्रचलितान् कांश्चित् लोकप्रयोगान् गृह्णाति। तद्यथा लडह-मैरेय-उलपजन्ययात्रा-गल्ल-गल्लूरण-रल्लिप्रभृतिप्रयोगा भवभूतेर्देशकालौ सूचयन्ति, तदानीन्तनभारतस्य स्वरूपञ्च ख्यापयन्ति।

महावीरचरितमिति नाटके भवभूतिः कालप्रियानाथविश्वामित्राश्रममिथिलाञ्चलायोध्यामहेन्द्रद्वीपचित्रकूटशरभङ्गाश्रमागस्त्याश्रमपञ्चवटीप्रस्रवणगिरिदण्डकारण्यकुञ्जरवानञ्चलपम्पासरोवरमतङ्गाश्रमादिस्थानान्युल्लिखति। अस्य नाटकस्य सप्तमाङ्के कविस्तथैव भारतदर्शनं प्रस्तौति यथा कालिदासेन रघुवंशस्य त्रयोदशसर्गे प्रस्तुतमस्ति। अत्र भारतीयसागरतटतमालवनकावेरीनद्यगस्त्याश्रमपम्पासरोवरसह्याद्र्यार्यावर्तकैलासाञ्जनकाञ्चनगन्धमादनहिमालयपर्वतविश्वामित्राश्रम-प्रभृतिभूभागा हृदयावर्जकरूपेण जीवन्ततया च वर्णिताः। भवभूतिप्रतिभापरिपाकप्रणीतोत्तररामचरितनाटकस्य प्रथमाङ्के कविश्चित्रदर्शनव्याजेन पुनरनेकभूभागनदीपर्वतवनाश्रमसरोवरप्रभृतीनां चित्रणं करोति। भारताभिज्ञानभूतभागीरथीचित्रणमिदं कस्य सहृदयस्य चित्तं नावर्जयति—

तुरगविचयव्यग्रानुर्वीभिदः सगराध्वरे
कपिलमहसामर्षात् प्लुष्टान् पुरा प्रपितामहान्।
अगणिततनूतापं तप्त्वा तपांसि भगीरथो
भगवति तव स्पृष्टानद्भिश्चिरादुददीधरत्[१]।।

इत्थं प्रतीयते यदस्माकं महाकविः सम्पूर्णभारतवर्षेण सुपरिचितः। स्वसमये देशस्यास्य विभिन्नभागेषु प्रचलितानां विविधलोकाचाराणां शास्त्राचाराणाञ्च निबन्धनं कृतवानसौ त्रिष्वेव रूपकेषु। एवमेवानेकधार्मिकवादानामैतिहासिकतथ्यानां राजनैतिकपरिस्थितीनां सांस्कृतिकपरम्पराणां सामाजिकप्रथानामपि च विन्यासः कविना यथावसरं स्वकृतिषु कृतः। क्वचिन्महाकविः सीतारामयोरादर्शदाम्पत्यजीवनचित्रणव्याजेनोदात्तभारतं प्रस्तौति, क्वचिन्मालतीमाधवप्रणयोद्वाहनिबन्धनव्याजेन प्रेमप्रवणं भारतं निरूपयति। एकत्र स सीताचरितव्याजेन भारतीयनारीमनोविज्ञानं विज्ञापयति, अन्यत्र जानकीनिर्वासनव्यथितरामस्य करुणविलापविन्यासव्याजेन धृतैकपत्नीव्रतपुरुषप्रत्यभिज्ञातभारतीयचरित्रं चित्रयति। क्वचित् कविस्तान्त्रिकवामाचारचर्चितं भारतं निबध्नाति, क्वचिच्च कापालिकसंस्कृतिसम्पृक्तं

---

१. उत्तररामचरिते-१।२३।

भारतं प्रदर्शयति। एतेषां सर्वेषां विषयाणामत्र समासेन निरूपणं विधीयते भवभूति-नाट्यसाहित्यप्रकाशे येन भवभूतिकालिकभारतदर्शनं याथातथ्येन सम्भवेत्।

**भवभूतिकालिकभारतवर्षे लोकाचारः**

भवभूतिकालिकभारतवर्षे प्रचलिता अनेकलोकाचाराः कवे रूपकेषु विन्यस्ताः। यतो हि नाटके नानावस्थान्तरात्मकं लोकचरितमेवाभिनेयरूपे निबद्धं भवति। तद्यथा नाट्यशास्त्रकारेणोक्तम्— 'लोकस्य चरितं नाट्यम्'[1]।

अपि च—

'नानाभावोपसम्पन्नं नानावस्थान्तरात्मकम्।
लोकवृत्तानुकरणं नाट्यमेतन्मया कृतम्'[2]।।

महार्कावर्महावीरचरितमिति नाटके रामसीताविवाहावसरे 'कङ्कणमोचन'-रूपलोकाचारस्योल्लेखं करोति। यथा प्रतिभाति—

'देव्यः कङ्कणमोचनाय मिलिता राजन् वरः प्रेष्यताम्'[3]।।

अग्रे भवभूतिः कङ्कणमोचनरूपकृत्यमिदं लोकाचारनाम्ना व्यवहरति। तद्यथा— 'जामदग्न्यः— क्रियतां लोकधर्मः'[4]।

उत्तररामचरितनाटकस्य चित्रदर्शनाङ्केन तदानीन्तने काले जीवनस्य विविधघटनानां चित्राङ्कनस्य परम्परा प्रमाणिता भवति, याऽधुना यावत्तथैव प्रचलति। कवेस्त्रयाणां रूपकाणां प्रस्तावनाभिस्तदानीन्तने भारते यात्रामहोत्सवाद्यवसरेषु नाट्याभिनयस्य लोकपरम्परा प्रमाणिता भवति। इयं परम्पराऽप्यधुना यावत् प्रचलति। भवभूतिः कालप्रियानाथस्य यात्रामहोत्सवे स्वरूपकाणां प्रयोगस्य सूचनां ददाति। तद्यथा —

'सूत्रधारः— मारिष सुविहितानि रङ्गमङ्गलानि। सन्निपतितश्च भगवतः कालप्रियानाथस्य यात्राप्रसङ्गेन नानादिगन्तवास्तव्यो जनः। तत् किमित्युदासते भरताः। आदिष्टोऽस्मि विद्वत्परिषदा यथा— अद्य त्वयाऽपूर्ववस्तुप्रयोगेण वयं विनोदयितव्या इति'[5]।

---

१. नाट्यशास्त्रे-३६।११; २. तत्रैव-१।११२।
३. महावीरचरिते-२।५०; ४. तत्रैव-२।५० अनन्तरम्।
५. मालतीमाधवप्रथमाङ्कारम्भे।

मालतीमाधवप्रकरणानुशीलनेन तदानीन्तने भारते मांसविक्रयणनरबलिप्रभृतिपरम्पराणामस्तित्वं प्रमाणितं भवति। तद्यथा प्रतिभाति —

'अशस्त्रपूतमव्याजं पुरुषाङ्गोपकल्पितम्।
विक्रीयते महामांसं गृह्यतां गृह्यतामिति'[१]।।

अपि च— 'वत्से कपालकुण्डले भगवत्या करालया यन्मया प्रागुपयाचितं स्त्रीरत्नमुपहर्तव्यम्, तदत्रैव नगरे विदितमास्ते' इति'[२]।।

एवमेवाध्ययनाय दूरदेशगमनं मनोकामनापूर्त्यर्थं देवीदेवाराधनं व्याघ्रादिवन्यजीवपालनञ्चेति लोकाचाराणां सङ्केतो मालतीमाधवप्रकरणे प्राप्यते, येन तदानीन्तने भारते एतेषां लोकाचाराणां प्रचलनमनुमीयते। अस्मिन्नेव प्रकरणे कन्याविवाहावसरे जन्ययात्राया उल्लेखं करोति भवभूतिः, येन तदानीन्तने भारते वरयात्रिकागमनरूपलोकपरम्परायाः सूचना मिलति। तद्यथा —

'भो राजानश्चरमवयसामाज्ञया सञ्चरध्वं
कर्तव्येषु श्रवणसुभगं भूमिदेवाः पठन्तु।
चित्रं नानावचननिवहैश्चेष्ट्यतां मङ्गलेभ्यः
प्रत्यासन्नस्त्वरयतितरां जन्ययात्राप्रवेशः'[३]।।

भवभूतेर्भारते लोके व्याकरणमीमांसावेदान्तादिशास्त्राणामध्ययनस्य प्रतिष्ठितपरम्परा आसीत्। एतस्मादेव कारणाद् भवभूतिरात्मानं पदवाक्यप्रमाणज्ञरूपेण प्रस्तौति, आत्रेयी च वाल्मीकिपार्श्वादगस्त्याश्रममायाति निगमान्तविद्याध्ययनायोत्तररामचरितनाटके। तदानीन्तनभारतीयलोकस्य महती श्रद्धा आसीत् कल्पसूत्रेषु विविधशास्त्रेषु च। आसन्नप्रसवायाः स्त्रिया दोहदपूर्तिरूपलोकपरम्परोल्लेखोऽप्युत्तररामचरिते उपलभ्यते। तद्यथा— 'अष्टावक्रः— इदञ्च भगवत्यारुन्धत्या देवीभिः शान्तया च भूयो भूयः सन्दिष्टम्। यः कश्चिद् गर्भदोहदोऽस्या भवति, सोऽवश्यमचिरात् सम्पादयितव्यः' इति[४]।

एवमेव लोके बालकस्य जन्मसंवत्सरसङ्ख्यामङ्गलग्रन्थिसमायोजनस्य परम्पराऽपि सूच्यते भवभूतिना। यथा वचनेनाधोलिखितेन प्रतिभाति — 'तमसा—

---

१. मालतीमाधवे-५।१२; २. तत्रैव-५।४ अनन्तरम्।
३. तत्रैव-६।२; ४. उत्तररामचरिते प्रथमाङ्के।

उक्तमत्र भगवत्या भागीरथ्या—वत्से देवयजनसम्भवे सीते, अद्य खल्वायुष्मतोः कुशलवयोर्द्वादशस्य जन्मसंवत्सरस्य सङ्ख्यामङ्गलग्रन्थिरभिवर्तते'[१]।

भ्रातृजायया देवरं प्रति क्रियमाणहासपरिहासपरम्पराया गुरुजनानां सम्मुखे पत्नीवृत्तान्तोल्लेखजनितलज्जानुभूतिरूपलोकाचारस्य च सङ्केतोऽप्युत्तररामचरिते प्राप्यते। तदित्थम् —

'सीता— वत्स, इयमप्यपरा का?

लक्ष्मणः— (सलज्जस्मितम्। आत्मगतम्) अये! उर्मिलां पृच्छत्यार्या। भवतु, अन्यतः सञ्चारयामि'[२]।

अनेनैव प्रकारेण मदनमहोत्सवायोजनस्य परम्पराऽपि भारतवर्षे प्राचीनकालादेव प्रचलिताऽस्ति। अस्याः परम्पराया उल्लेखं करोति भवभूतिर्मालतीमाधवप्रकरणे। यथा प्रमाणितं भवति वचनेनाधोलिखितेन—

'अवलोकिता— माधवोऽपि कौतूहलमुत्पाद्य मया प्रवृत्तमदनमहोत्सवं मदनोद्यानं प्रभातेऽनुप्रेषितः'[३]।

इत्थमनेकलोकाचाराणां तदानीन्तनभारतीयसमाजे प्रचलितानामुल्लेखं यथावसरं कुर्वन्नसौ महाकविः प्रकारान्तरेण समकालीनभारतवर्षस्य जीवन्तचित्रं प्रस्तौति। एकत्र मालतीमाधवे कविर्लोकव्याप्तां कन्याजन्मजनितजुगुप्सां चित्रयति, स्वसमयेऽपि च कन्याजन्मनिन्दाप्रचलनं प्रमाणयति। तद्यथा—

'लवङ्गिका— गृहे गृहे पुरुषाः कुलकन्यका उद्वहन्ति। न च कोऽपि लज्जाप्रसाधनमनपराधमुग्धस्वभावं कुलकुमारीजनं प्रभवामीति वागनलेन प्रज्वलयति। एते खलु ते आमरणसम्भ्रियमाणदुःसहपरगृहनिवासवैराग्यकारिणो हृदयशल्यनिक्षेपा महापरिभवाः। येषां कृते स्त्रीजन्मलाभं जगुप्सन्ते बान्धवाः'[४]।

वस्तुतो महाकविभवभूते रूपकाणि समकालीनभारतवर्षे प्रचलितानामनेकलोकाचाराणां याथातथ्येन विन्यासं कुर्वन्ति येषां परिशीलनेन विना तदानीन्तनभारतस्वरूपं सम्यक्तयावगन्तुं न शक्यते। अतस्तदानीन्तनभारतीयलोकाचारदर्शनाय भवभूतिरूपकाणामस्त्युल्लेखनीयमवदानम्।

---

१. उत्तररामचरिते तृतीयाङ्के; २. तत्रैव प्रथमाङ्के।
३. मालतीमाधवे प्रथमाङ्के; ४. तत्रैव सप्तमाङ्के।

## भवभूतिकालिकभारतवर्षे शास्त्राचारः

महाकविभवभूतिर्यथा स्वरूपकेषु विविधलोकाचाराणां विन्यासं कृतवान्, तथैव स स्थाने स्थाने लोकस्वीकृतरूपेणानेकशास्त्राचाराणामप्युल्लेखं विदधाति। येन तदानीन्तने भारते तेषां प्रचलनमनुमीयते। उत्तररामचरितनाटकस्य प्रथमाङ्के केशान्तापरनामगोदानाचारस्य चित्रं चित्रवीथिकायामङ्कितं वर्ण्यते। अतस्तदानीन्तने समये आचारस्यास्य प्रचलनं प्रमाणितं भवति। तद्यथा—

'एते खलु तत्कालकृतगोदानमङ्गलाश्चत्वारो भ्रातरो विवाहदीक्षिता यूयम्'[1]।

इत्थमेव महावीरचरितस्य प्रथमाङ्केऽपि गोदानाचारस्य वर्णनं निबध्नाति कविः। तदीदृग्वर्तते— 'राज्ञो यज्ञपरिसमाप्तौ विततगोदानमङ्गलाः कुमाराः परिणेष्यन्तीति'[2]।

उत्तररामचरितस्य द्वितीयाङ्के कविना चौलकर्मविद्याध्ययनवेदाध्ययनरूपानेक-शास्त्रीयाचारः सङ्केतिताः। यथाऽऽत्रेयीवचनेन प्रतिभाति—

'आत्रेयी—......निवृत्तचौलकर्मणोश्च तयोस्त्रयीवर्जमितरास्तिस्रो विद्याः सावधानेन परिनिष्ठापिताः। समनन्तरञ्च गर्भैकादशे वर्षे क्षात्रेण कल्पेनोपनीय गुरुणा त्रयीविद्यामध्यापितौ'[3]।

अस्मिन्नेव नाटके कविरश्वमेधयज्ञाचारस्य तस्मिन् च सहधर्मचारिणी-प्रतिकृतिस्थापनाया अप्युल्लेखं विदधाति। यथाऽऽत्रेयीवासन्ती-वचनाभ्यां प्रमाणितं भवति—

'आत्रेयी— तेन राज्ञा क्रतुरश्वमेधः प्रक्रान्तः।

वासन्ती— का तर्हि यज्ञे सहधर्मचारिणी?

आत्रेयी— हिरण्यमयी सीताप्रतिकृतिः'[4]।

भवभूतिकालीनभारतवर्षेऽपि दम्पत्योराकर्षणकेन्द्रः पुत्रसन्ततिरेवासीदिति प्रमाणयति पद्यमिदम्—

---

१. उत्तररामचरिते-१।१७ अनन्तरम्।
२. महावीरचरिते-१।५८ अनन्तरम्।
३. उत्तररामचरिते द्वितीयाङ्कविष्कम्भके।
४. तत्रैव।

'अन्तःकरणतत्त्वस्य दम्पत्योः स्नेहसंश्रयात्।
आनन्दग्रन्थिरेकोऽयमपत्यमिति बध्यते'[१] ।।

एतेन तदा—

'पुन्नाम्नो नरकाद्यस्मात्त्रायते पितरं सुतः।
तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा'[२] ।।

इत्यादिधर्मशास्त्रीयवचनानां प्रचुरप्रचार आसीदित्यनुमातुं शक्यते। स्वकाले मधुपर्काचारस्य प्रचलनमपि सङ्केतितं महाकविनोत्तररामचरिते। श्रोत्रियाभ्यागताय समांसमधुपर्कप्रस्तुतेराम्नायोदितां परम्परामुल्लिखन् महाकविः स्वसमये अस्याः सद्भावं प्रमाणयति। अतस्स उत्तररामचरितस्य चतुर्थाङ्के सौधातिक-दाण्डायन-संवादव्याजेन'— 'समांसो मधुपर्क इत्याम्नायं बहुमन्यमानाः श्रोत्रियाभ्यागताय वत्सतरीं महोक्षं वा महाजं वा निर्वपन्ति गृहमेधिनः। तं हि धर्मं धर्मसूत्रकाराः समामनन्ति'[३] इति कथनं प्रस्तौति। यथा शास्त्रेषु अतिथेर्दैवीमहत्ता प्रतिपादिताऽस्ति, तथैव भवभूतेर्भारतवर्षेऽपि अतिथिसत्काररूपाचारः प्रचलित आसीदिति साधु प्रमाणयत्युत्तररामचरितस्थपद्यमिदम्—

'वनदेवता (अर्घ्यं विकीर्य)

यथेच्छं भोग्यं वो वनमिदमयं मे सुदिवसः
सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवति ।
तरुच्छायातोयं यदपि तपसो योग्यमशनं
फलं वा मूलं वा तदपि न पराधीनमिह वः'[४] ।।

मालतीमाधवप्रकरणे चित्रितस्य समाजस्य सम्पूर्णपरिवेशस्तान्त्रिक-वामाचारप्रभावितः प्रतिभाति। अत्र कपालकुण्डलकापालिकाघोरघण्टकराला-यतनमांसविक्रयणश्मशानचित्रणकटपूतनावर्णनप्रभृतिविन्यासैः कविस्तदानीन्तने भारते कापालिकसंस्कृतेस्तत्सम्बद्धाचाराणाञ्च सद्भावं निरूपयति, कौलतन्त्रप्रचारञ्च प्रमाणयति। प्रकरणेऽस्मिन् तन्त्रमन्त्रयोगाभियोगसम्बद्धाकर्षिणीसिद्धिप्रभृतिवर्णनै-र्विविधशास्त्राचाराणां द्भावोऽनुमीयते। तद्यथा—

---

१. उत्तररामचरिते-३।१७;　　२. मनुस्मृतौ-९।१३८।
३. उत्तररामचरितचतुर्थाङ्कविष्कम्भके;　　४. तत्रैव-२।१।

'गुरुचर्यातपस्तन्त्रमन्त्रयोगाभियोगजाम् ।
इमामाकर्षिणीं सिद्धिमातनोमि शिवाय वः'[1] ।।

एकस्मिन् पद्ये कविर्भूतकतर्पणाचारमुल्लिखति, येन तदानीन्तनभारतेऽस्य प्रचुरप्रचार उपलक्ष्यते। तद्यथा—

'आजन्मनः सहनिवासितया मयैव
मातुः पयोधरपयोऽपि समं निपीय।
त्वं पुण्डरीकमुखबन्धुतया निरस्त-
मेको निवापसलिलं पिबसीत्ययुक्तम्'[2] ।।

एवं प्रकारेण सिद्ध्यति यद् भवभूतेर्भारतवर्षे विविधकल्पसूत्रीयाचाराणां धर्मशास्त्रीयकृत्यानां निगमागमविचाराणां वाममार्गीयानुष्ठानानां विविधस्मृति-विधानानाञ्च प्राचुर्येण प्रचार आसीत्। अतो भवभूतिकालिकभारतवर्षीय-विविधशास्त्रीयाचाराणां लोकप्रचारावबोधाय कवे रूपकाणां परिशीलन-मतिमहत्त्वपूर्णमस्ति।

**भवभूतिकालिका भारतीयधार्मिकस्थितिः**

भवभूतिकालिकभारतवर्षे वैदिकधर्म-बौद्धधर्म-जैनधर्म-शैवागम-शाक्ततन्त्राणां समाजे प्राचुर्येण मान्यताऽऽसीत्। कविः स्वयं शिवभक्तिभावितमना प्रतिभाति। यतो हि स स्वोत्तररामचरिते वाक्स्तुतिं प्रस्तौति सामान्यतया महावीरचरिते च चैतन्यज्योतिर्नमति तथैव; परन्तु मालतीमाधवप्रकरणे कविः सुसङ्घटितशब्दावल्यां विशेषेण सपरिकरञ्च शिवं स्तौति, येन तस्य भक्तिः प्रमाणिता भवति। पुनः प्रकरणस्यास्य नवमाङ्कविष्कम्भके भगवन्तं भवानीपतिमपौरुषेयप्रतिष्ठं सुवर्ण-बिन्दुरिति ख्यातं शङ्करं नमति कविः। तद्यथा—

'जय देव भुवनभावन जय भगवन्नखिलवरद निगमनिधे।
जय रुचिरचन्द्रशेखर जय मदनान्तक जयाऽऽदिगुरो'[3] ।।

महावीरचरितनाटकस्य सप्तमाङ्के समुद्रवर्णनव्याजेन कविः शङ्करं स्मरति। तद्यथा—

---

१. मालतीमाधवे-९।५३; २. तत्रैव-९।४०; ३. तत्रैव-९।४।

'साक्षत्किलाष्टमूर्तेस्तस्यैषा मूर्तिरप्मयी प्रथमा।
गीतः सागर इति नृभिरपरिच्छेद्यात्मगाम्भीर्यः'[१] ।।

इत्थं कवेः शिवविषयिका निष्ठा भूयो भूयः प्रमाणिता भवति। विशेषरूपेण मालतीमाधवप्रकरणे भवभूतेः शङ्करनिष्ठता बहुत्र चित्रिता वर्तते[२]।

महाकविभवभूतिसमकालीनभारतवर्षे भगवतो भास्करस्य पूजाऽपि प्रचलिता आसीत्। भवभूतिः 'कालप्रियानाथ'शब्देन कालपीस्थभगवन्तं भास्करमेवोपादत्ते, न तु शङ्करम्। यतो हि 'कालप्रिया' 'कालप्रियः' वा स्थानवाचकपदमस्ति, न तु शिवस्य पार्वत्या वा वाचकम्। यथा 'काशीनाथः' शङ्करस्य वाचकं पदमस्ति तस्य काशीस्थितत्वात्, तथैव 'कालप्रिये'ति स्थाने स्थितत्वात् तत्रत्यसूर्यस्य 'कालप्रियनाथ' इत्यभिधानं समुचितमेव प्रतिभाति। भवभूतिः स्वयमपि मालतीमाधवे सूत्रधारव्याजेनाशेषभुवनद्वीपदीपं सूर्यं नमति। तद्यथा —

'कल्याणानां त्वमसि महसां भाजनं विश्वमूर्ते!
धुर्यां लक्ष्मीमिह मयि भृशं धेहि देव! प्रसीद ।
यद्यत् पापं प्रतिजहि जगन्नाथ! नम्रस्य तन्मे
भद्रं भद्रं वितर भगवन् भूयसे मङ्गलाय'[३] ।।

उत्तररामचरितनाटकेऽपि कवेः सूर्यविषयिका निष्ठा स्थाने स्थाने प्रकटीभवति। निदर्शनमेकमत्र प्रस्तूयते—

'तमसा—........। तदात्मनः पुराणश्वसुरमेतावतो मानवस्य राजर्षिवंशस्य प्रसवितारं सवितारमपहतपाप्मानं देवं स्वहस्तावचितैः पुष्पैरुपतिष्ठस्व'[४]।

एतावता भवभूतेर्भारतवर्षे सूर्यपूजायाः प्रचारः प्रमाणितो भवति। शिवसूर्याभ्यां तुल्यं तदानीन्तने भारतवर्षे शक्तिपूजनमपि प्रचलितमासीत्। मालतीमाधवप्रकरणे 'करालायतनस्य' शक्तिपूजायाश्च स्पष्टमेव चित्रणं कृतमस्ति कविना। मालमतीमाधवमहावीरचरितयोः स्वपरिचयोपन्यासमाध्यमेन कविना तदानीन्तने भारते वैदिकधर्माचाराणां प्रचारस्य चित्रणं कृतमस्ति। तद्यथा—

'अस्ति दक्षिणा पद्मपुरं नाम नगरम्। तत्र केचित्तैत्तिरीयाः काश्यापाश्चरणगुरवः पङ्क्तिपावनाः पञ्चाग्नयो धृतव्रताः सोमपीथिन उदुम्बरनामानो

१. महावीरचरिते-७।९;
२. मालतीमाधवपञ्चमाङ्के।
३. तत्रैव-१।३;
४. उत्तररामचरिते तृतीयाङ्कस्य विष्कम्भके तमसोक्तौ।

ब्रह्मवादिन: प्रतिवसन्ति। तदामुष्यायणस्य तत्रभवतो वाजपेययाजिनो महाकवे: पञ्चम:...........'[१]। मालतीमाधवेऽपि इत्थमेवोल्लिखन् कविस्तत्राग्रे इष्टापूर्तकर्मणोरपि समुल्लेखं करोति। तद्यथा—

'ते श्रोत्रियास्तत्त्वविनिश्चयाय भूरिश्रुतं शाश्वतमाद्रियन्ते।
इष्टाय पूर्ताय च कर्मणोऽर्थान् दारानपत्याय तपोऽर्थमायु:'[२]।।

मालतीमाधवप्रकरणस्थपद्येनैकेन बौद्धधर्मस्य प्रचारं प्रभावञ्चानुमातुं शक्यते भवभूतिकालिकभारतवर्षे। तद्यथा—

'वन्द्या त्वमेव जगत: स्पृहणीयसिद्धि-
रेवंविधैर्विलसितैरतिबोधिसत्त्वै:।
यस्या: पुरा परिचयप्रतिबद्धबीज-
मुद्भूतभूरिफलशालिविजृम्भितेन'[३]।।

एवं प्रकारेण प्रतीयते यद् भवभूतेर्भारतवर्षे वैदिकाचाराणां बहुमान्यता आसीत्। कर्मकाण्डस्य प्रचलनेन सह तान्त्रिकवामाचाराणामपि लोके मान्यता आसीत्। समाजे बहुदेववादानुसारेणानेकदेवीदेवानामुपासनाया: प्रचलनमासीत्। बौद्धजैनधर्मयो: प्रभावो ह्रासमानो दृश्यते। कल्पसूत्रीयाचाराणां श्रौतस्मार्तधर्माणाञ्च समाजे प्रचुरप्रचार: प्राप्यते। पशुबलि-नरबलि-मांसभक्षणप्रभृतिकृत्यानां सद्भावो दृश्यते। इष्टापूर्तकर्मणां लोके महनीयताऽऽसीत्। एतासां सर्वासां प्रवृत्तीनां विवेचनाय तदानीन्तनभारतदर्शनाय च भवभूतिरूपकाणामस्ति महदवदानम्। तस्य रूपकाणि न केवलं रूपकाण्यपि तु समकालीनभारतवर्षस्यादर्शभूतानि प्रतिभान्ति। एतस्मादेव कारणाद् भवभूतिरूपकाणामध्ययनं प्राचीनभारतावबोधाय परमावश्यकमस्ति।

### भवभूतिकालिकभारतीयसांस्कृतिकस्थिति:

शिक्षासंस्कृतिकलादीनां परिज्ञानाय सांस्कृतिकाध्ययनं विधीयते। अतो भवभूतिकालिकभारतीयसांस्कृतिकस्थितिविवेचनाय तदानीन्तनशिक्षाकलाजीवनचर्या-दैनिकाचारातिथिसत्कारसंस्कारप्रभृतिविषयाणां विवेचनमपेक्षितमस्ति। महाकवि-भवभूति: स्वरूपकेषु विषयाणामेतेषां विन्यासं यथावसरं समुचितरूपेण विदधाति, येन तदानीन्तनसांस्कृतिकस्थितिमवगन्तुं शक्यते। शिक्षाया अतिमहत्त्वपूर्णं

१. महावीरचरतिस्य प्रथमाङ्कारम्भे; २. मालतीमाधवे-१।५।
३. तत्रैव-१०।२१।

स्थानमासीत्तदा समाजे। अध्ययनाय दूरातिदूरदेशगमनमपि दृश्यते। उत्तररामचरिते आत्रेयी निगमान्तविद्याध्ययनाय वाल्मीकिपार्श्वादगस्त्याश्रममायाति। तद्यथा—

अस्मिन्नगस्त्यप्रमुखाः प्रदेशे भूयांस उद्गीथविदो वसन्ति।
तेभ्योऽधिगन्तुं निगमान्तविद्यां वाल्मीकिपार्श्वादिह पर्यटामि[१]।।

एवमेव मालतीमाधवप्रकरणे माधवः कुण्डिनपुरात् पद्मावतीनगरीमायात्यान्वीक्षिकीश्रवणाय। यथा स्पष्टं भवति—

'तदिदानीं विदर्भराजस्य मन्त्रिणा सता देवरातेन माधवं पुत्रमान्वीक्षिकीश्रवणाय कुण्डिनपुरादिमां पद्मावतीं प्रहिण्वता सुविहितम्'[२]।

समये तस्मिन्नष्टादशविद्याप्रमुखाणां सर्वेषां विषयाणामध्ययनाध्यापने प्राचलताम्। ऋषीणामाश्रमा विश्वविद्यालयाश्च विद्याध्ययनकेन्द्रा आसन्। सहाध्ययनस्य प्रचलनमासीद् बालिकाबालकयोः। यथाऽऽत्रेयीवचनेन प्रमाणितं भवत्युत्तररामचरिते—

'आत्रेयी—......। न ह्येताभ्यामतिप्रदीप्तप्रज्ञामेधाभ्यामस्मदादेः सहाध्ययनयोगोऽस्ति'[३]।

भवभूतेः सुपरिचिता नगरी पद्मावती प्रसिद्धविद्याकेन्द्र आसीत्। यतो हि विदर्भदेशाद् माधवोऽत्राध्ययनाय आयाति। एवं भवभूतिकालिके भारते शिक्षायाः स्थितिरत्युन्नताऽऽसीत्।

शिक्षया तुल्यं चित्रगीतनाट्यस्थापत्यप्रभृतिकलानां लोके विशिष्टमान्यता आसीत्। उत्तररामचरितस्य चित्रदर्शनाङ्केन तदानीन्तनी चित्रकलायाः समुन्नतरूपं दृष्टिगोचरं भवति। एवमेव नाट्यगीतादीनामपि प्रचुरप्रचलनमासीत्। भवभूतिरूपकाणामभिनयस्य स्पष्टसङ्केतः प्राप्यते। स गीतनृत्यवाद्यनाट्यानां सूचकं तौर्यत्रिकेति पदं प्रयुङ्क्ते स्वोत्तररामचरिते[४]। मालतीमाधवे पद्मावतीवर्णनप्रसङ्गे कविः स्थापत्यकलाया उत्कर्षं प्रतिपादयति, तत्रत्योन्नतोत्कृष्टसौधादीनां वर्णनव्याजेन। तद्यथा—

'पद्मावती विमलवारिविशालसिन्धुपारासरित्परिकरच्छलतो बिभर्ति।
उत्तुङ्गसौधसुरमन्दिरगोपुराट्टसङ्घट्टपाटितविमुक्तमिवान्तरिक्षम्'[५]।।

---

१. उत्तररामचरिते-२।३;
२. मालतीमाधवे-१।११ प्राक्।
३. उत्तररामचरिते-२।४ प्राक्;
४. तत्रैव, चतुर्थाङ्के जनक-लवसंवादे।
५. मालतीमाधवे-९।१।

एवमेव संस्कारातिथिसत्काराश्रमव्यवस्थापुरुषार्थचतुष्टयवर्णव्यवस्थादीनामपि यथाप्रसङ्गं सङ्केतः प्राप्यते महाकवे रूपकेषु। अतो वक्तुं शक्यते यद् भवभूतेर्भारते शिक्षासंस्कृतिकलादीनामुत्कर्षस्तदानीन्तनभारतवर्षस्यापि सौभाग्यं सूचयति। तत्कालिकशिक्षाप्रभृतिप्रवृत्तीनामवबोधाय भवभूतिरूपकाणामनुशीलनमवश्यमेव करणीयम्।

**भवभूतिकालिकभारतीयसामाजिकस्थितिः**

भवभूतिकालिकभारतीयसमाजे आर्यसंस्कृतिः प्रतिष्ठिताऽऽसीत्। एतस्मादेव कारणादुत्तररामचरितनाटके लवणासुरत्रासं श्रुत्वा रामव्याजेन कविराश्चर्यमभिव्यञ्जयति। तद्यथा— 'आः कथमद्यापि राक्षसत्रासः'[१]।

कवेः समाजो वर्णव्यवस्थां प्रति प्रगतिशीलः प्रतिभाति। एतस्मादेव कारणाद् भवभूतिः शूद्रमुने रामकृतवधवृत्तमनिच्छया निबध्नाति, तत्प्रतिकूलप्रतिक्रियाञ्च प्रकटीकरोति राममुखात्। तद्यथा—

'हे हस्त दक्षिण मृतस्य शिशोर्द्विजस्य-
जीवातवे विसृज शूद्रमुनौ कृपाणम्।
रामस्य बाहुरसि निर्भरगर्भखिन्न-
सीताविवासनपटोः करुणा कुतस्ते'[२]।।

अपरञ्च समाजे तान्त्रिकवामाचाराणामपि प्रचलनमासीत्। सम्पूर्णमालतीमाधवप्रकरणस्य वातावरणं तान्त्रिकवामाचारप्रभावितं प्रतिभाति। कविः कुत्रचित् श्मशानस्य बीभत्सचित्रणं प्रस्तौति, कुत्रचिच्च मांसविक्रयदृश्यं निबध्नाति। एकत्र स बलिदानं चित्रयति, अन्यत्र प्रेतपिशाचचित्रणं करोति। अघोरघण्टकपालकुण्डलेति पात्रयोर्विन्यासः कविना तान्त्रिकवामाचारप्रदर्शनायैव कृतः। श्रमणसंस्कृतेरपि प्रकरणेऽस्मिन् दर्शनं भवति। कामन्दकीविन्यासव्याजेन कविस्तत्कालिकभारते प्रसृतां श्रमणसंस्कृतिं सूचयति। समाजे स्त्रीणां स्थितिः समुन्नताऽऽसीत्। स्त्रीशिक्षायाः प्रचलनमासीत्। सर्वेषु कार्येषु तासां सहभागित्वमासीत्। रामस्य सीतानिर्वासनरूपकृत्यं निन्दन्त्या वासन्त्या विन्यासव्याजेन कविः स्त्रीणां जागरूकतामपि सूचयति। तद्यथा—

'अयि कठोर यशः किल ते प्रियं किमयशो ननु घोरमतः परम्।
किमभवद्विपिने हरिणीदृशः कथय नाथ कथं बत मन्यसे'[३]।।

---

१. उत्तररामचरितप्रथमाङ्के; २. तत्रैव-२।१०; ३. उत्तररामचरिते, ३।२७;

भोज्यपदार्थेषु घृताक्तभक्तादीनां प्रचलनमासीत् तदानीन्तने भारते। यथोत्तररामचरितश्लोकेन प्रमाणितं भवति—

'नीवारौदनमण्डमुष्णमधुरं सद्यःप्रसूता प्रिया
पीतादभ्यधिकं तपोवनमृगः पर्याप्तमाचामति।
गन्धेन स्फुरता मनागनुसृतो भक्तस्य सर्पिष्मतः
कर्कन्धूफलमिश्रशाकपचनामोदः परिस्तीर्यते'[१]।।

एवमेव निम्बतैलरसोनादीनां पदार्थानामपि प्रचलनं तदाऽऽसीदिति सूचयति कविः। तद्यथा— 'इदं च पुराणनिम्बतैलाक्तपरिभृज्यमानरसोनकरसगन्धिभिश्चिताधूमैरधस्ताद्विभावितस्य श्मशानवाटस्य नेदीयः करालायतनम्'[२]।

समाजे मञ्जीरकिङ्किणीवलयमौक्तिकहारप्रभृत्यलङ्काराणां सिन्दूरकुङ्कुमकर्पूराङ्गरागरागचन्दनप्रभृतिसौन्दर्यप्रसाधनानाञ्च प्रचलनमासीत्। एवमेव तदानीन्तने समाजे मदनमहोत्सवायोजनस्य प्रचलनमासीत्। चौर्यविवाहबलिप्रदानजन्ययात्राभूतावेशमन्त्रतन्त्रप्रभावचित्रकलादीनां सद्भावो भवभूतिरूपकाणामनुशीलनेनानुमीयते तदानीन्तने भारते। एवं समासेन भवभूतिचित्रितसमाजस्य निरूपणं कृतमत्र। वस्तुतस्तदानीन्तनसमाजस्याध्ययनाय भवभूतिरूपकाणामनुशीलनमतिमहत्त्वपूर्णमस्ति।

निष्कर्षरूपेण वक्तुं शक्यते यत् काव्यसाहित्यं समकाकालिकधार्मिकसांस्कृतिक-सामाजिक-राजनैतिकगतिविधीनामादर्शो भवति। यादृश्यः स्थितयो देशे समाजे वा दृश्यन्ते, तादृश्यो एव काव्ये चित्रिता भवन्ति। अतः समकालिकविविधगतिविधीनां ज्ञानाय विवेचनाय वा तदानीन्तनसाहित्यपरिशीलनमपेक्षितं भवति। लोकवृत्तमेव काव्ये नाट्ये वा कान्तासम्मितोपदेशरूपेण व्यञ्जनासमाश्रयेण च चित्रितं भवति। जगत्सत्यमेतत् काव्ये शिवसौन्दर्यसम्प्रोतं कामप्यनिर्वचनीयकमनीयतामावहति। तथ्यमिदं मनस्यवधाय भवभूतिनाट्यसाहित्यपरिशीलनमिदं विहितं स्थालीपुलाकन्यायेनेति शम्।



१. उ.रा. ४।९; २. मालतीमाधवप्रकरणे ५।४ अनन्तरम्।

# माघकाव्ये राजसंस्कृतिः

**डॉ. रामाशीषपाण्डेयः**
आचार्योऽध्यक्षश्च, संस्कृतविभागस्य
मारवाड़ीमहाविद्यालये, राँची



अलङ्कृतशैल्यां रचितेषु महाकाव्येषु माघकाव्यमन्यतमम्। महाकविमाघस्य शिशुपालवधनामकमेकमेव महाकाव्यं संस्कृतजगति प्रशस्यतरं तथा बृहत्त्रय्यां विश्रुतमिति जानन्त्येव विद्वांसः। माघकवेः शिशुपालवधमहाकाव्यमिदं माघकाव्यमित्यनेन नामधेयेनापि विदितम्। माघकाले भारतं राजतन्त्रात्मकमासीदिति हेतोर्महाकाव्येऽस्मिन् राजसंस्कृतेश्चित्रणं प्रभूतं दृश्यते। महाकाव्यलक्षणे प्रोक्तम्—

'चतुर्वर्गफलोपेतं चतुरोदात्तनायकमि'ति दण्डिनः काव्यादर्शे[१]। तत्र महाकाव्यस्य नायको धीरोदात्तगुणान्वितो भवति[२]। दिव्योऽदिव्यो दिव्यादिव्यो वा नायको देवः, क्षत्रियो वा भवति[३]। ज्ञातव्यमस्ति यन्माघकाव्यस्य नायको भगवान् श्रीकृष्णो वर्तते प्रतिनायकश्च शिशुपालः[४]। वीररसप्रधानेऽस्मिन् महाकाव्ये राज्ञां चरित्रं विशेषेण वर्णितमस्ति। महाकाव्यस्य कथावृत्तं रामायणमहाभारतादिग्रन्था-दितिहासपुराणाच्च गृह्यते[५]। अत्र महाभारतीया या कथा माघकाव्ये गुम्फिता, सा

---

१. काव्यादर्शे-१।१४-२२।

२. महासत्त्वोऽतिगम्भीरः क्षमावानविकत्थनः।
स्थिरो निगूढाहङ्कारो धीरोदात्तो दृढव्रतः।। (दशरूपके-२।४-५)

३. सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः।
सद्वंशक्षत्रियो वाऽपि धीरोदात्तगुणान्वितः।।
एकवंशभवा भूपाः कुलजा बहवोऽपि वा
(साहित्यदर्पणे, षष्ठपरिच्छेदे)

४. वंशवीर्यश्रुतादीनि वर्णयित्वा रिपोरपि।
तज्जयन्नायकोत्कर्षः कथनं च धिनोति नः।। (काव्यादर्शे-१।२२)

५. इतिहासकथोद्भूतमितरद्वा सदाश्रयम्। (काव्यादर्शे-१।२)

ऐतिहासिकीति। भगवतः कृष्णस्य कथेयं श्रीमद्भागवतपुराणादिष्वपि प्राप्यते। भारतीयमहाकाव्ये सर्वत्र राजतन्त्रात्मकव्यवस्थाया उपस्थितिर्दृश्यते। माघकाव्येऽपि राजसंस्कृतावेव वृत्तस्य नायकस्य प्रतिनायकस्य तेषामङ्गाश्रितानां कार्यसम्पादकानाञ्च वर्णनं विद्यते।

राजते शोभत इति राजा, तेषां राज्ञां संस्कृती राजसंस्कृतिः। संस्कृत-महाकाव्येषु राजसंस्कृतावेव सर्वाणि कार्याणि सम्पाद्यन्ते, यतो हि महाकाव्यस्य पृष्ठभूमी राजसंस्कृतिरेव। माघकाव्येऽपि राजसंस्कृतेरायामितमङ्गं चित्रितमस्ति। राजसंस्कृतौ राज्ञां वर्णनं तेषामावासस्य सांस्कृतिकराजनीतिकधार्मिकार्थिक-प्राशासनिकादिचित्रस्य च प्रदर्शनं भवति। काव्यं समाजस्य दर्पणभूतं समाजस्यैव चित्रं सर्वेषां समक्षं समुपस्थापयति। भारतीयसाहित्ये विशेषतो महाकाव्ये समाजस्य यानि चित्राणि चित्रितानि, तानि प्रायो राजसंस्कृतेश्चित्राण्येव सन्ति। माघकाव्ये तस्याश्चित्रणं कीदृशमिति जिज्ञासायां समाजोपकाराय प्राचीनभारतस्येति-वृत्तज्ञानाय जनजागरणाय च विदुषां मनांसि परितोषायात्र राजसंस्कृतिः प्रस्तूयते।

**माघकाव्ये राज्ञां वर्णनम्**

शिशुपालवधमहाकाव्यस्य नायको भगवान् कृष्णो दिव्यादिव्यगुणान्वितः क्षत्रियवंशोत्पन्नो द्वारकापुर्य्यां विराजते। ग्रन्थारम्भ एव प्रकाशितमस्ति यदयं जगन्निवासो जगदाधारभूतो जगत् शासितुं श्रीमति श्रीसम्पन्ने लक्ष्मीयुक्ते वसुदेवसद्मनि द्वारकायां तिष्ठति[१]। तत्र श्रियः पतिः लक्ष्म्या रुक्मिणीरूपायाः श्रियः पतिः श्रीकृष्णः जगत् शासितुं दुष्टनिग्रहशिष्टानुग्रहाभ्यां नियन्तुं निरतो वर्तते। श्रीकृष्णो राजा वर्तते। राज्ञो लक्षणं माघकाव्ये यथा—

'बुद्धिशस्त्रः प्रकृत्यङ्गो घनसंवृतिकञ्चुकः।
चारेक्षणो दूतमुखः पुरुषः कोऽपि पार्थिवः'।। (२।८२)

एते सर्वे गुणाः कृष्णे विद्यन्ते। तस्य राजशासनमन्येषां राज्ञां शासनापेक्षयाऽमितमिति कृष्णस्य वैशिष्ट्यमादावेव दर्शितम्। प्रतिनायकोऽत्र चेदिवंशस्य नृपतिः शिशुपालः[२]। रावण एव जन्मान्तरमवाप्य शिशुपालरूपेण प्रादुर्भूत इति नारदोक्तिः[३]। जन्मकाले स वपुषा चतुर्भुजः पूर्णेन्दुनिभस्त्रिलोचन

---

१. शिशु.-१।१ सर्वङ्कषायाम्; २. तत्रैव-१५।१।
३. तत्रैव-१।६९, २।६।

आसीत्[१]। भगवतः कृष्णस्य स्पर्शेण तस्य भुजद्वयं निपतितमिति महाभारते प्राप्यते। कृष्णस्य पितृस्वस्रेयः शिशुपालो रावणादप्यधिको जनानां पीडको बभूव। शिशुपालस्य वीरतां प्रभुत्वं पराक्रमञ्च माघो नितरां वर्णितवान्। नायकस्य रिपोः प्रतिनायकस्यापि वर्णनं महाकाव्ये वर्णनीयमिति काव्यशास्त्रीयसिद्धान्तः। परिणामतः शिशुपालस्य बलवीर्यादिकमत्र भृशं वर्णितम्।

अत्रानेके राजानो वर्णिताः सन्ति नायकप्रतिनायकाभ्यामतिरिक्ता दितिपुत्रस्य हिरण्यकशिपोः[२], लङ्काधिपस्य रावणस्य[३], देवाग्रगण्यस्य देवेन्द्रस्य[४], कुबेरस्य[५], वरुणस्य[६], यमस्य[७], युधिष्ठिरस्य[८], तस्य भ्रातॄणाम्, बलरामस्य[९], भौमासुरस्य[१०], मगधाधिपस्य जरासन्धस्य[११], बाणासुरस्य[१२], कालयवनस्य[१३], दन्तवक्रस्य[१४], रुक्मि-सात्यकिप्रभृतिराज्ञाञ्च वर्णनमत्र विद्यते।

महाभारतस्य प्रमुखपात्राणां पाण्डवपुत्रादीनां राज्ञां वर्णनमपि विद्यते। युधिष्ठिरस्य राजसूययज्ञे समुपस्थितः ससेनो भगवान् कृष्णस्तैः पूजितः शिशुपालेन भृशं निन्दितस्तत्रैव युद्धे संलग्न आसीत्। कुरुपाण्डवानां पितामहो भीष्मोऽपि तत्रैव विराजते[१५]। भारतवर्षे समुपस्थिताः सर्वे राजानः प्रायो युधिष्ठिरस्य यज्ञे समागता माघकाव्ये वर्णिताः। कृष्णपक्षीयाः शिशुपालपक्षीयास्तदितरे राजानोऽपि तत्रोल्लिखिताः।

## राज्ञामलङ्करणम्

राजतन्त्रात्मके युगे राजभवनमैश्वर्यैरुपेतमासीत्। तदा राज्ञां भवनं विविधोपादानैरुपेतं दुर्गप्राकारसमन्वितं सर्वथाऽलङ्कृतं मनोज्ञमाकर्षकञ्च वर्णितम्। प्रशस्ते सुसज्जिते राजभवने राजा प्रोच्चसिंहासने तिष्ठति स्म। राज्ञामासनं सिंहाकारं वीरतायाः प्रतीकभूतं सिंहासननाम्ना प्रसिद्धम्। सिंहासनं हेमनिर्मितत्वाद्

---

१. शिशु.-१।७०;
२. तत्रैव-१।४२,१९।५२।
३. तत्रैव-१।४८;
४. तत्रैव-१।५३।
५. तत्रैव-१।५५;
६. तत्रैव-१।५६।
७. तत्रैव-१।५७, ६३;
८. तत्रैव-२।१,६,६५,१०४।
९. तत्रैव-२।१४;
१०. तत्रैव-२।३९।
११. तत्रैव-२।६०;
१२. तत्रैव-२।९७, ३।६१, १५।४२।
१३. तत्रैव-१५।५६;
१४. तत्रैव-१५।५२।
१५. तत्रैव-१४।५३।

हेमवर्णत्वाच्च हैमासनमपि ख्यातम्। कृष्णबलरामोद्धवास्त्रिभिः सिंहैराक्रान्तानि सिंहत्रयाकारयुक्तानि सिंहासनान्यधितस्थुः। प्रतीयते समवेतानां सिंहत्रयाणामाकृतिभिर्युक्तं सिंहासनं तदा निर्मीयते स्म। कालान्तरे सर्वाणि राज्यासनानि सिंहासनशब्देनाख्यातानि[1]। सिंहासनस्य पार्श्वे पादन्यासाय मणिमयनिर्मितं पादपीठमपि वर्णितम्[2]। नृपसदनदर्शनानन्तरं कृष्णो युधिष्ठिरश्च विपुले सिंहासने समुपविष्टौ[3]। राज्ञामलङ्करणे राजमुकुटं प्रशस्तम्[4]। भगवतः कृष्णस्य मुकुटगता माणयो महतीभिरनेकवर्णाभिः प्रभाभिर्गोवर्धनपर्वतस्य शोभामापुः[5]।

राज्ञामलङ्करणे राजछत्रं चामरं[6] कुण्डलं केयूराभूषणं मुक्ताहारो महार्घो मणिः कटकरसनाप्रभृतयोऽलङ्कारा वर्णिताः। राजछत्रं तु राज्ञां प्रतीकमासीत्। युधिष्ठिरस्य यज्ञे प्रस्थितः कृष्णः प्रस्थानकाले छत्रं धारयति[7]। इन्द्रप्रस्थनगर्य्यामायोजिते यज्ञे समागतस्य कृष्णस्य छत्रमर्जुनो दधाति[8]। भगवान् कृष्णः कौस्तुभमणिं[9] मुक्ताहारञ्च धारयति। अन्ये राजानोऽपि मुक्ताहारं दधति[10]। कृष्णस्य चक्रं सुदर्शनाख्यं गदा कौमोदकीति। तस्य शार्ङ्गं धनुः पाञ्चजन्यः शङ्खश्चेति। यद्यपि कृष्णस्य शङ्खचक्रगदापद्मादिधारणमत्र वर्णितं परं स चतुर्भुजो न वर्णितः।

शिशुपालोऽपि विविधालङ्कारैर्विभूषितोऽस्ति। तस्य सैनिकाः सैनिकानुरूपं वेषं दधति, तदा सामान्यजना अपि विविधालङ्कारैरलङ्कृता भवन्ति स्म। स्त्रियो विशेषेणालङ्कारैर्वस्त्रैश्च विभूषिता आसन्। पादेषु रागादिकै· रञ्जनस्य प्रचलनमासीत्। इन्द्रप्रस्थनगर्य्यामागतं कृष्णं द्रष्टुं तत्रस्थालङ्कृताः शृंगारकर्मणि संलग्नाश्च नार्यस्त्वरितं गृहाद्बहिर्निर्गताः। अतः प्रतीयते यत् तदा स्त्रीणां मध्ये प्रसाधनस्य प्रचलनमासीत्।

विशिष्टजनानां वस्त्रमपि सविशेषमासीत्। भगवान् श्रीकृष्णः पीताम्बरधरो बलरामः कृष्णाम्बरधरो विद्येते। राज्ञां परिधानं सामान्यलोकानां परिधानापेक्षया भिन्नमासीत्।

---

१. शिशु. २।५;  २. तत्रैव-१।१२।
३. तत्रैव-१३।६४;  ४. तत्रैव-१।४६।
५. तत्रैव-३।४;  ६. तत्रैव-३।३।
७. तत्रैव-३।२;  ८. तत्रैव-१३।२१।
९. तत्रैव-३।९;  १०. तत्रैव-३।८।

**माघस्य राजसंस्कृतौ वर्णाश्रमव्यवस्था**

ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत।। (ऋ. १०।९०।१२)

इत्यनेन ब्राह्मणादयो वर्णा वैदिककालादेव विश्रुताः। ब्राह्मणादिवर्णानां वयसाऽनुरूपा ब्रह्मचर्यगार्हस्थ्यवानप्रस्थसंन्यासाश्रमा भारतीयसंस्कृतेराधारभूता भारतीयसमाजस्यादर्शं स्थापयन्ति। माघस्य राजसंस्कृतावपि ब्राह्मणादयो वर्णा ब्रह्मचर्यादयो आश्रमाश्च वर्णिताः। मानवानामैहिकामुष्मिकाभिवृद्धये वर्णाश्रम-व्यवस्था नितरां प्रभावपूर्णा, जीवनस्य संयमने सदाचाराश्रयणे च समर्थतरा।

ब्राह्मणानां कर्त्तव्यं षट्कर्मनिरतत्वञ्च माघकाव्ये वर्णितम्। यज्ञकर्मणि संलग्नेभ्यो वेदज्ञेभ्यो ब्राह्मणेभ्यो दक्षिणायां प्रभूतं धनं प्रयच्छति राजा युधिष्ठिरः[१]। राजसूययज्ञावसरे दक्षिणार्हेभ्यो ब्राह्मणेभ्यो धनादिकस्य दानस्य वर्णनं नितरामाकर्षकमस्ति। अध्ययनाध्यापनादिनिरता ब्राह्मणास्तदाऽऽसन्निति प्राप्यते[२]।

भगवान् कृष्णस्तस्य पक्षीया वीरा प्रायेण क्षत्रिया आसन्। (युधिष्ठिरादयोऽपि युद्धकर्मविशारदाः क्षात्ररक्षाव्रते संलग्ना विद्यन्ते[३]। गोपालका अश्वपालका हस्तिपालकाः पशुपालकाः कृषकाश्चेत्यादयो वैश्याः सन्ति। माघकाव्ये वणिजोऽपि वर्णिताः[४]। सैनिकसेवायां संलग्ना राजसेवायामन्येषां वर्णानां सेवायामपि संलग्नाः शूद्रा विद्यन्ते। यद्यपि स्वयं भगवान् कृष्ण उपदेशकाले ब्राह्मणस्य, युद्धकाले क्षत्रियस्य, पशुपालनकर्मणि निरतो भूत्वा वैश्यस्य, युधिष्ठिरयज्ञेन्यत्रापि सेवायां संलग्नो भूत्वा शूद्रस्य च कार्यं कुर्वन् सर्वेषां वर्णानां स्वात्मनि समाहारं कृतवान्। द्विजेन्द्रकान्तो[५] ब्राह्मणोत्तमप्रियः श्रीकृष्णो विनयादिभिर्गुणैरन्वितः सर्वस्मिन् कर्मणि समासक्तः कर्मसिद्धान्तस्य प्रतिमूर्तिरासीत्।

शिशुपालवधमहाकाव्ये गजचालकाः[६] किराताः[७] सारथिनः[८] कर्षका[९] मागधा[१०] वैतालिकादयो[११] वर्णिताः। राजसंस्कृतौ स्तुतिपाठकानां विशेषेण वर्णनं प्राप्यते। प्रभातकाले सायंकाले यात्रायां प्रस्थानकाले विविधमहोत्सवावसरे च

---

१. शिशु.-१४।३५; २. तत्रैव-१२।३।
३. तत्रैव-१२।३५; ४. तत्रैव-१२।२६,३५।
५. तत्रैव-१२।३; ६. तत्रैव-१२।५।
७. तत्रैव-१२।५१,५४; ८. तत्रैव-१२।८।
९. तत्रैव-१४।७; १०. तत्रैव-१२।३५।
११. तत्रैव-११।१।

मङ्गलवचनं यशोगानमुत्साहवर्धनार्थं मागधैर्वैतालिकैश्च प्रस्तूयते स्म। प्रभाते मागधाः प्राभातिकं गिरन्ति। तक्षारथकारः शिथिलं रथं भग्नं वा रथाङ्गं शीघ्रमेव संयोजयति यथा वैद्यो रोगिणे ज्वरादिचिकित्सायाः प्रक्रमे निरतो भवति[१]। अनेन कर्मानुसारं जातेरुपलब्धिः प्रतीयते। राज्ञां भवने विविधानि कार्याणि सम्पादनायानेके कर्मकरा आसन्। 'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः'[२] इति गीताया वचनेन गुणकर्माश्रिताया वर्णव्यवस्थाया समाश्रयणं माघकाव्येऽपि दृश्यते।

यत्र सर्वे वर्णा विश्रामं प्राप्नुवन्ति स्वानि विहितकर्माणि च सम्पादयन्ति, स एवाश्रमः। माघकाव्ये गृहस्थाश्रमस्य प्रभूतं वर्णनं विद्यते। यद्यपि सर्वे आश्रमा यत्र तत्र वर्णिताः सन्ति। एकस्मिन्नेव श्लोके चतुर्णामाश्रमाणां वर्णनमस्ति, यथा—

तत्प्रणीत-तमसामुपेयुषां द्रष्टुमाह वनमग्रजन्मनाम्।
आतिथेयमनिवारितातिथिः कर्त्तुमाश्रमगुरुः स नाश्रमत्[३]।।

राजा युधिष्ठिरो ब्रह्मचर्यादिविविधाश्रमाणां नियन्ताऽऽसीत्। अनेन प्रतीयते यन्माघकाले राजभिराश्रमाणां व्यवस्था सञ्चाल्यते स्म।

### माघस्य राजसंस्कृतौ वास्तुकला

माघकाव्ये राज्ञां भवनानि विशेषेण वर्णितानि। द्वारकायां कृष्णस्य भवनं महेन्द्रालयं देवेन्द्रभवनमिव वर्तते[४]। तदा राज्ञां भवनं प्राकारपरिखादिना शत्रुभिर्दुर्लङ्घ्यं भवति स्म[५]। राजभवने सभामण्डपं मन्त्रणागृहादीनि निर्मिता-न्यासन्[६]। सभाभवने विशेषेण राजमानायां सभावेद्यां विशिष्टजनानां कृते आसनस्य पृथग् व्यवस्था आसीत्। सभाभवने स्थिता रत्नस्तम्भा नितरां शोभाधायका वर्णिताः[७]। सभामण्डपे मण्डपवेद्यामुत्तुङ्गहेमनिर्मितानि सिंहासनानि न्यस्तान्यासन्[८]।

युधिष्ठिरस्य राजधानीन्द्रप्रस्थनगर्यामासीत्। इन्द्रप्रस्थनगरोऽयं हस्तिना-पुरनाम्नाऽपि ख्यातः। वर्तमानदिल्लीनगरमेव माघकाले इन्द्रप्रस्थनगरमासीत्। तस्य लोकोत्तरवैभवं वर्णितमस्ति। माघे इन्द्रप्रस्थस्य कृते हरिप्रस्थशब्दोऽपि प्रयुक्तः'[९]। तत्र स्वर्णमयानि प्रोच्चभवनान्यासन्, यत्र गवाक्षा अपि सुशोभिताः। भवनानि

---

१. शिशु. १२।२५;
२. श्रीमद्भगवद्गीता-४।१३।
३. शिशु. १४।३८;
४. तत्रैव-१।११।
५. तत्रैव-१।४५;
६. तत्रैव-२।२।
७. तत्रैव-२।४;
८. तत्रैव-२।५।
९. तत्रैव-३।१।

सुधाद्रव्यैर्लिप्तानि[१] चन्द्रकिरणैः प्रकाशितानि भवन्ति स्म। प्रासादस्योपर्य्यारोहणाय स्वर्णसोपानपङ्क्तयो विनिर्मिताः। कृष्णास्यागमनकाले नार्यः प्रासादमारुह्य गवाक्षजालेन पश्यन्ति स्म। प्रासादेषु पताका अपि विद्यमाना आसन्[२]। तत्र विविधरत्नेभ्यो निर्मिताः सभाभवनस्य भूमयो विशेषेणोल्लेख्याः[३]। तत्रालङ्कृतानि भवनानि महोत्सवस्य दृश्यं स्थापयन्ति स्म।

कृष्णस्य राजधानी द्वारकापुर्य्यां वर्तते। माघकाव्ये द्वारकापुरी विशेषेण वर्णिता। समुद्रमध्ये सुवर्णप्राकारैरुपेता वाडवाग्नेर्ज्वालेव प्रतीयते[४]। द्वारकाया रचना स्वयं ब्रह्मणा एव कृता, यत्र भूमिभृतां राज्ञामधिष्ठाना विद्यन्ते। पुरीयं जलधेर्जलेषु स्वच्छाया इव दृश्यते[५]। अस्या नगर्य्या मध्ये विविधपन्थानो विद्यन्ते। वणिक्पथे पुञ्जीकृतानि रत्नानि समुद्रेऽपि मिलितानि भवन्ति[६]। इत्थं वास्तुकलादृष्ट्या द्वारकानगरी नितरां मनोहराऽऽसीत्।

शिशुपालस्य राजधानी माहिष्मतीनगर्य्यां विद्यते[७]। माघकाव्ये सामान्यजनानां भवनानि नातिदीर्घानि वर्णितानि। तदा राजपथस्य शोभना व्यवस्था आसीत्[८]। ग्रामस्थानां कृषकाणां भवनानि तादृशान्युन्नतानि नासन्।

**माघकाव्ये राजनीतिर्धर्मनीतिरर्थनीतिश्च**

राज्ञां नीतिः, राज्यसञ्चालनार्थं प्रतिपादिता वा नीती राजनीतिः। देवानामिन्द्रस्य च सन्देशं गृहीत्वा समुपागतो नारदः कृष्णाय सर्वं जगाद। कस्मिन्नपि कार्ये सहसा निर्णयो न विधेय इति। द्वितीयसर्गे त्रयो कूटनीतिज्ञा राजनीतिज्ञाः कृष्णबलरामोद्धवा मन्त्रणां चक्रुः। तत्र विचारपथमानीतो विषयः प्रथमं शिशुपालस्योपर्य्याक्रमणं युधिष्ठिरस्य यज्ञे प्रस्थानं वा समुचितमिति। बलरामोऽऽत्मोदयः शत्रोर्हानिरिति राजनीतिं स्वीकरोति, कथयति च— समृद्धा अपि वयं सन्तुष्टा न भवेम, यतो हि सन्तुष्टा महीभुजो नष्टा भवन्ति[९]। पौरुष-

---

१. शिशु. १३।३१;
२. तत्रैव-१३।३४-३७।
३. तत्रैव-१३।५३-६३।
४. तत्रैव-३।३३।
५. तत्रैव-३।३४।
६. तत्रैव-३।३५।
७. तत्रैव-३।३८;
८. तत्रैव-२।६४।
९. असन्तुष्टा द्विजा नष्टाः सन्तुष्टाश्च महीभुजः।
सलज्जा गणिका नष्टा निर्लज्जा च कुलाङ्गना।। (शिशु. २।३१ सर्वङ्कषायाम्)

हीनाद्दैवमपि जुगुप्सत इति किरातार्जुनीयस्य भीमेन सदृशो बलरामो वक्ति[१]। पराक्रमादेव सर्वं कार्यं साधनीयमिति कथनं राजनीतिमूलकम्[२]। उद्धवस्य कथने बुद्धेः प्राधान्यं दृश्यते। कृतधियो महोद्योगा भवन्ति[३]। राज्ञो लक्षणे स प्रतिपादयति— 'बुद्धिशस्त्रः' प्रकृत्यङ्गो घना मन्त्रगुप्तिरेव कञ्चुको यस्य, चारेक्षणो दूतमुखः पुरुषः पार्थिवो भवति[४]। राजनीतिज्ञो विद्वान् कीदृश इति प्रतिपादयन् कथयति— 'राजनीतिज्ञो दैष्टिकतां नालम्बते न केवलं पौरुषे निषीदति प्रत्युत सत्कविः शब्दार्थाविव पौरुषं दैवञ्चोभयमपेक्षते'[५]। राजनीतिविषये उद्धवस्योक्तिर्द्रष्टव्या—

'अनुत्स्यूतपदन्यासा सद्वृत्तिः सन्निबन्धना।
शब्दविद्येव नो भाति राजनीतिरपस्पशा'।। (२।११२)

त्रयाणां राजनीतिज्ञानां मध्ये निर्णयो भवति यद् युधिष्ठिरस्य यज्ञ एव गन्तव्यम्। माघकाव्यस्य द्वितीयसर्गस्तु पूर्णतो राजनीतिविषयसम्बद्धो विद्यते। राजनीतेर्विविधान्यङ्गान्यत्र विशेषेणोपस्थितानि, स्थालीपुलाकन्यायेनात्र केवलमुपस्थापितानि।

प्राचीनकाले युद्धोऽपि धर्मनीत्या प्रचलति स्म। पदातिसैनिकैः सह पदातिसैनिका रथसैनिकैः सह रथसैनिकाः, गजसैनिकैः सह गजसैनिकाः, एवमेवाश्वसैनिकैः सहाश्वसैनिका युद्धेऽयुध्यन्त। धर्मनीत्या पूर्वं युद्धस्य घोषणा क्रियते पश्चाद् युद्धं भवति। वाक्यरक्षणं धर्मनीतौ प्रशस्तम्। भगवता कृष्णेन स्वस्वस्रे वचोदत्तं यत् शिशुपालस्य शतसंख्यायां दोषाः क्षन्तव्या भविष्यन्ति। परिणामतः शिशुपालस्य शतसंख्यायां दोषा यदा नापक्रामन्ति, तदा तस्य वधो नैव क्रियते। धर्मेण पृथिवीं जित्वा युधिष्ठिरो राज्यभारं पुनस्थेभ्यो विजितेभ्यो राजभ्यः समर्पयति[६]। ये राजानोऽस्य राजच्छत्रे निवसन्ति तेषां रक्षणं स धर्मनीत्या करोति। अनेन प्रकारेण माघकाव्ये राजसंस्कृतौ धर्मनीतिर्नितरां वर्णिता।

पुरुषार्थेष्वर्थस्यान्यतमत्वात् सर्वथार्थो राज्ञां शासने महत्त्वमादधाति। राज्यशासनमर्थनीतौ समाश्रितमस्ति। प्रजानां रक्षणं राज्ञां कर्त्तव्यमस्ति। विविधमार्गेणागतं धनं कररूपेण गृहीतं वा धनं राजा राजकल्याणाय

---

१. शिशु. २।३२, किरा. द्वितीयसर्गे; २. शिशु. २।३३।
३. तत्रैव-२।७९; ४. तत्रैव-२।८२।
५. तत्रैव-२।८६; ६. तत्रैव-१४।४३।

प्रजाकल्याणाय नियोजयति। राजसूययज्ञावसरे सङ्गृहीतमुपहाररूपेण प्राप्तं धनं राजा युधिष्ठिरः ऋत्विग्भ्यो ब्राह्मणेभ्यो याचकेभ्यः प्रयच्छति[१]। वस्तुतः 'आदानं हि विसर्गाय सतां वारिमुचामिव'[२] इत्यर्थनीतिर्माघकाव्येऽपि प्रचलिता दृश्यते।

## माघस्य राजसंस्कृतौ शिक्षा

स्वरवर्णाद्युच्चारणप्रकारो यत्रोपदिश्यते सा शिक्षेति[३]। प्राचीनकाले शिक्षा वेदाङ्गेषु परिगणिता[४]। तदा शिक्षा स्वरवर्णाद्युच्चारणप्रकारोपदेशिका ध्वनिशास्त्र-विशेषस्य बोधिका चासीत्। सम्प्रति शिक्षा ज्ञानस्य विद्याग्रहणस्याध्ययनाध्यापन-प्रक्रियाया बोधिका वर्तते। शिक्षायां शिक्षकाः शिक्षार्थिनः शिक्षाविषयाश्च स्तम्भरूपाः। मानवानां कृते शिक्षाग्रहणं परमावश्यकम्, यतो हि शिक्षा एव मानवे मानवत्वमानयति, स्वात्मविकासे राष्ट्रविकासे च योगं प्रयच्छति।

प्राचीनकाले शिक्षार्थिनो गुरुकुले निवसन्तः पठन्ति स्म। तत्र विविध-विद्यासु नैपुण्यं प्राप्य दीक्षिता भूत्वा गृहस्थाश्रमे विशन्ति स्म। शिक्षार्थिनस्तदा विद्यार्थिनोऽन्तेवासिनो माणवकाश्च भवन्ति स्म। स्वयं भगवान् कृष्णः स्वभ्रात्रा बलरामेण सहोज्जयिन्यां सान्दीपनिगुरोर्गृहे गुरुकुले निवसन् चतुःषष्टिदिवस एव चतुःषष्टिकलामधीतवान्। बलरामोऽपि चतुःषष्टिकलासु निपुणो बभूव[५]। गुरुशिष्ययोश्चर्चा माघकाव्ये प्राप्यते[६]। शिक्षाविषयमधिकृत्य बहुषु स्थलेषु विवरणमुपलभ्यते। शिशुपालसकाशादागतो गुप्तचरस्तस्य सन्देशं कृष्णाय श्रावयति। तस्य भाषा श्लेषमयी वर्तते यस्यां प्रियमप्रियञ्चार्थद्वयं सङ्गच्छते। अनेन प्रतीयते यद् दूतास्तदा ज्ञानसम्पन्ना भाषणकलासु पूर्णतो दक्षा भवन्ति स्म[७]। दूतस्योक्तिर्दर्शनीया—

उभयं युगपन्मयोदितं त्वरयाशान्त्वमथेतरच्च ते।
प्रविभज्य पृथङ्मनीषया स्वगुणं यत्किल तत्करिष्यसि।। (१६।१२)

माघस्य द्वितीयसर्गे राजनीतिविषयाणां गम्भीरचिन्तनमुपन्यस्तम्। बलराम-स्योद्धवस्य च वाक्येषु राजनीतेरङ्गप्रत्यङ्गानि प्रकाशितानि सन्ति। प्रतीयते राजनीतिप्रधानोऽयं सर्गः राजनीतिशिक्षणायैव समुपसृष्टः।

---

१. शिशु. १४।३६-३८; २. रघु. ४।८७।
३. ऋ.भा.भू. ३९ पृष्ठे सायणः; ४. मुण्डकोपनिषदि-१।१।४।५।
५. शिशु. ३।६०; ६. तत्रैव-१३।२४; ७. तत्रैव-१६।२-४१।

माघकाव्ये विविधविद्यासु कलासु च वेदस्य[१], व्याकरणस्य[२], सृष्टिक्रम-ज्ञानार्थं मन्वादिधर्मशास्त्रस्य[३], सांख्यदर्शनस्य[४], मन्त्रशास्त्रस्य[५], [६]न्यायशास्त्रस्या-युर्वेदशास्त्रस्य[७], पुराणविद्यायाः[८], नाट्यशास्त्रस्य[९] गजशास्त्रस्य[१०] अश्वशास्त्रस्य[११], सङ्गीत-शास्त्रस्य[१२], विविधकलायाश्च प्रभूतं वर्णनं प्राप्यते।

अनेन स्पष्टं भवति यन्माघकाले राजसंस्कृतौ शिक्षायाः स्थितिरुन्नता विकसिता चाऽऽसीत्। राजकीयपुरुषाणां शिक्षा राजनीतिपूर्णा नीतिपूर्णा राज्यकल्याणसमन्विता प्रशासनोपयुक्ता भवति स्म। तदा सामान्यजना अपि शिक्षिता विविधकलासु निपुणा आसन्। शिक्षाया व्यवस्था राज्ञा एव सम्पाद्यते स्म। सर्वेषां विषयाणां वेदोपवेदवेदाङ्गोपनिषदादिग्रन्थानां प्रायोगिकानां ज्योतिषायुर्वेद-प्रभृतिशास्त्राणामपि शिक्षाया व्यवस्थाऽऽसीत्। ज्योतिषायुर्वेदतत्त्वानां भृशं वर्णनमत्र प्राप्यते। युधिष्ठिरस्य यज्ञे समुपस्थिता ऋत्विजो वेदवेदाङ्गेषु धर्मशास्त्रादिषु पारङ्गताः सन्ति[१३]। ललितकलाया विशेषरूपेणोल्लेखो प्राप्यते। माघे विविधवाद्ययन्त्रस्य वर्णनं सङ्गीतकलाया विकासस्य द्योतकमस्ति। वास्तुकलायाः सौन्दर्यं तु पूर्वमेव प्रतिपादितम्।

**माघस्य राजसंस्कृतौ युद्धकला**

वीररसप्रधानेऽस्मिन् महाकाव्ये युद्धस्य प्रभूतं वर्णनं विद्यते। तदानीं सेनायां चतुरङ्गिण्या हयदल-गजदल-रथदल-पदातिसेनायाश्च समुल्लेखो विद्यते[१४]। श्रीकृष्णस्य शिशुपालस्य चोभयोः सेना चतुरङ्गिण्यासीत्। युद्धस्य सूचना पटहनिनादेन शंखध्वनिना[१५] रणदुन्दुभिना[१६] च दीयते स्म। उभयपक्षीया वीराः

---

१. शिशु. १।२८, १२।११, १४।२१।
२. तत्रैव-२।४७,९५,११२, १४।६६, १९।७५।
३. तत्रैव-९।९।
४. तत्रैव, १।३३,१४।१९।
५. तत्रैव-२।८२।
६. तत्रैव, २।९१।
७. तत्रैव-२।५४,८४,९३,९६,१२।२५।
८. तत्रैव-१।१५,४९,५०,२।३८-४१,६०,३।६१,४।२,५।३१,६६,६।१७,८।६४, ९-१४,८०,११।३।
९. तत्रैव-२।४४, १०।४०;
१०. तत्रैव-५।३६, ४८-४९।
११. तत्रैव-५।१०, ६०;
१२. तत्रैव-१।१०,२।२६,११।१,१३।६६
१३. नत्रैव-१४।२०,२१;
१४. तत्रैव-१६।६९।
१५. तत्रैव-१५।७२;
१६. तत्रैव-१५।७३।

कवचेनावृता भूत्वा युद्धे संलग्ना भवन्ति स्म। युद्धपूर्वं तेषां मद्यपानस्य चर्चाऽपि प्राप्यते[१]।

माघकाव्ये चतुर्विधस्यास्त्रस्य वर्णनं लभ्यते। तत्र धनुषादिकमस्त्रं तस्य बहिः सन्धानमपास्त्रं परशुप्रभृति व्यस्त्रम्, आग्नेय-वायव्य-गारुडप्रभृतिमहास्त्रञ्च विद्यन्ते[२]। सामान्येनास्त्रं द्विविधं मुक्तास्त्रममुक्तास्त्रञ्चेति। तत्र मुक्तास्त्रे बाणादिकममुक्तास्त्रे खड्गादिकञ्च। बाणा अपि तदानीं वैशिष्ट्यसम्पन्ना वर्णिताः। बाणेषु स्वर्णपुङ्खयुक्तत्वं विशेषेण वर्णितम्[३]।

कृष्णस्यास्त्रेषु सुदर्शनं चक्रम्, शार्ङ्गं धनुः, कौमोदकी गदा, नन्दकः खड्गश्च विशेषेणोल्लिखिताः[४]। कृष्णस्य पुष्परथो गरुडध्वजश्च वर्णितौ। माघमहाकाव्ये विविधास्त्रस्य समुल्लेखो विद्यते। वत्सदन्तस्य[५], तोमरस्य[६], स्वापनास्त्रस्य[७], यमपाशतुल्यस्य भुजगास्त्रस्य[८], गरुडास्त्रस्य[९] आग्नेयास्त्रस्य,[१०] मेघास्त्रस्य[११] च वर्णनं प्राप्यते। युद्धेषु बाहुयुद्धस्य[१२], तुमुलयुद्धस्य, द्वन्द्वयुद्धस्य[१३],विविधास्त्रसमन्वितस्य युद्धस्य चाकर्षकं वर्णनं लभ्यते।

द्वादशसर्गस्यारम्भ एव रथाश्वगजनिषादिनां नृपाणां गणः प्रस्थानकाले हरिं प्रतीक्षितवानिति रथनिषादिनामश्वनिषादिनां गजनिषादिनाञ्च सेनानां वर्णनमुपलभ्यते। लघुरथेषु वेसराणां वत्सतराणामुष्ट्राणामपि संयोजनं भवति स्म[१४]। कृष्णस्यैकच्छत्र-सेनाया बहुच्छत्रसेनायाश्च वर्णनं लभ्यते[१५]। कृष्णस्यैकच्छत्रसेनायामनेके तत्पक्षीया राजानः स्वच्छत्रं गृहीत्वा सम्मिलिता आसन्, येनैकच्छत्रेऽपि बहुच्छत्रसेना प्रादुर्भूता। अनेन प्रकारेण सेनायाः प्रस्थानस्य युद्धस्य चाकर्षकं वर्णनं लभ्यते। शिशुपालेन युद्धावसरे विविधानि शस्त्रास्त्राणि प्रयुक्तानि तान्यनेकानि वीर्यमन्त्रोत्साहैः सञ्चालितान्यासन्। शिशुपालस्य स्वापनास्त्रप्रयोगेण यदा श्रीकृष्णस्य सेनायां सैनिकानां लोचनानि निद्रया धूर्णितान्यभूवन्, तदा तस्य पक्षीया बहवो राजानो धनुषि निषण्णा अभवन्, तथाऽन्येषां वीराणां शस्त्रं निद्रया भूमौ पतितम्, तदा

---

१. शिशु. १५।७६,८०,१७।२१; २. तत्रैव-१८।११।
३. तत्रैव-२०।१३; ४. तत्रैव-१७।२६, ३।१८-२०।
५. तत्रैव-२०।२५; ६. तत्रैव-२०।२९।
७. तत्रैव-२०।३२; ८. तत्रैव-२०।४१।
९. तत्रैव-२०।५२; १०. तत्रैव-२०।५९।
११. तत्रैव-२०।६५; १२. तत्रैव-१८।१२।
१३. तत्रैव-१९।१; १४. तत्रैव-१२।२४।
१५. तत्रैव-१२।३३।

कृष्णस्य दृष्टिः कौस्तुभमणावपतद् येन समुद्गतेन प्रकाशेन सर्वेषां वीराणां निद्रा भग्ना जाता। अनेन प्रकारेण शिशुपालस्य यमपाशतुल्यस्य भुजगास्त्रस्य प्रयोगे गारुडास्त्रेण, आग्नेयास्त्रप्रयोगे मेघास्त्रेण युद्धं कृत्वा कृष्णः शिशुपालश्च स्वस्वयुद्धकौशलं प्रदर्शितवन्तौ। चान्ते सुदर्शनचक्रेण कृष्णः शिशुपालस्य शिरश्चकर्त।

**राजसंस्कृतावाचारः**

माघस्य प्रथमसर्गे यदा महर्षिर्नारदो द्वारकायामागच्छति, तदा भगवान् कृष्णस्तस्मै स्वागतं करोति। प्रथमं तु समागतं नारदं दृष्ट्वा सिंहासनादुत्तिष्ठति तथा तमर्घ्यादिभिः पूजयति[१]। प्रोच्चसिंहासने तं प्रोषितवान्, तथा तस्मै स्वागतवाक्यं जगाद। अतिथेरागमनानन्तरं प्रसन्नतां प्रकटयितुं कथयति—

'हरत्यघं सम्प्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः।
शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम्'।।(१।२६)

सर्वस्यातिथिर्गुरुरिति सिद्धान्तो माघकालेऽपि प्रचलितः। 'अतिथिदेवो भव' इति श्रुतिवाक्येन अतिथेः पूजनं शास्त्रपद्धत्याऽत्र दृश्यते, किं बहुना—

'तृणानि भूमिरुदकं चतुर्थी वाक् च सूनृता।
सर्वदैव सतां गेहे नोच्छिद्यन्ते कदाचन'।।

सूक्तिरियं माघकाले नियमितेति प्रतीयते। अतिथेः सत्कारस्य चर्चाऽन्यत्रापि विद्यते[२]।

प्रस्थानकाले राजा छत्रं चामरं मुकुटं कटककुण्डलादिकमाभूषणं शोभनं वस्त्रञ्च धारयति स्म[३]। मङ्गलार्थे स्त्रियो मार्गे आचारलाजान् विकिरन्ति स्म[४]। आगतेभ्योऽतिथिभ्यः सत्कारायोत्सवस्यायोजनमपि भवति स्म[५]। कृष्णो हस्तिनापुरे युधिष्ठिरस्य गृहे आगत्य बन्धुजनस्यारोग्यादिकं समाचारं पृच्छति[६]। ब्राह्मणोऽतिथिर्देवर्षिर्वा राज्ञां गृहे गत्वा तीर्थजलैः राज्ञामभिषेकं करोति स्म[७]।

---

१. शिशु. १।१२,१४; २. तत्रैव, ३।८१।
३. तत्रैव-३।२-४; ४. तत्रैव, १३।३६।
५. तत्रैव-१३।६७।
६. ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम्। मनु. २।१२७ (शिशु.; १३।६८)
७. शिशु. १।१८।

अनेन प्रकारेण माघस्य राजसंस्कृतौ राज्ञामाचारस्य[1], दानस्य[2], अर्घ्यपुरुषस्य[3], युद्धाचारस्य[4] च वर्णनं प्राप्यते। षडर्घ्यभाजोऽत्र वर्णिताः— स्नातका गुरवो बन्धवो ऋत्विजो जामाता राजानश्चार्घ्यास्तदासन्[5]। युधिष्ठिरस्य राजसूययज्ञावसरे विहिताचारस्य प्रभूतं विवरणं लभ्यते।

**उपसंहारः**

निष्कर्षतः कथनमिदं सङ्गतं भविष्यति यन्माघकाव्ये या राजसंस्कृतिश्चित्रिता तत्र राजसम्बद्धं राजनीतिकं सामाजिकं धार्मिकं दार्शनिकं शैक्षणिकमार्थिकं सांस्कृतिकञ्च तथ्यं नितरां गुम्फितम्।

राजतन्त्रात्मके युगे सामान्यजनानां ग्रामस्थितानां नगरस्थानाञ्चावस्था कीदृशीति विवेचितम्। पुनश्च ग्राम्यजीवने कृषेः कर्म वाणिज्यादिकं पशुपालनादीनि कर्माणि कथं सम्पाद्यन्त इति माघकाव्ये सर्वं प्राप्यते। राजनीतिकचित्रणे राज्ञां नीतिर्विशेषतश्चित्रिता। धर्मशास्त्रानुमोदितं राज्ञां कर्त्तव्यादिकमेव माघकाव्ये विद्यते। भारतीयसंस्कृतेर्गायको महाकविमाघो भारतीयपरिवेशे राजसंस्कृतेर्जीवितं चित्रं माघकाव्ये चित्रितवान्। माघस्य द्वितीयसर्गे बलरामस्योद्धवस्य च वाक्यैः राजनीतिरेव प्रकाशिता। राजतन्त्रात्मिकाऽऽर्थिकी राजनीतिकी शैक्षिकी सामाजिकी व्यवस्था माघेन प्रतिपादिता। युद्धकलाया वास्तुकलाया ललितकलायाः काव्यकलायाश्च सविस्तरं विवरणमत्र लभ्यते। वीररसप्रधानेऽस्मिन् महाकाव्ये वीररसस्य विविधतत्त्वानि शृङ्गारादिरसानाञ्च तत्त्वानि गुम्फितानि। तेषां विभावादिदशा अपि चित्रिताः। राजसंस्कृतेः प्राङ्गणे राजतन्त्रसम्बद्धानां विविधफलपुष्पाणां पादपेभ्योऽलङ्कृतमुद्यानं माघकाव्यमिति।

आधुनिकयुगेऽपि माघवर्णितस्याचारस्य विविधव्यवहारस्य नीतिनिर्धारणस्य युद्धादिप्रकारस्य तत्र गृहीतस्य सैन्यसाहाय्यस्य विविधसंस्कारस्य शिक्षायाः कलायाः संस्कृतेश्चाचरणं दृश्यते। किं बहुना, माघकाव्यमिदं कान्तासम्मिततयोपदेशेन[6] सम्प्रति स्वकीयां प्रासङ्गिकतां स्थापयतीति दिक्।



---

१. शिशु. ४।९;
२. तत्रैव-१४।४५, ४६, ४९।
३. तत्रैव-१४।५५;
४. तत्रैव-१८।२।
५. तत्रैव-१४।५५;
६. काव्यप्रकाशे, प्रथमोल्लासे।

# सुहृत्तत्त्वविमर्शः

**डॉ. सङ्कठादेवपाण्डेयः**
साहित्यविभागाध्यक्षः
श्रीरामाचारिसंस्कृतमहाविद्यालये
अस्सी, वाराणसी



**सुहृच्छब्दस्यार्थः–**

सुष्ठु यद्वा सुशोभनं हृदयं यस्येति विग्रहे हृदयशब्दस्य हृदादेशे व्युत्पादितोऽयं सुहृच्छब्दो बहुविधेष्वर्थेषु प्रयुक्तो दृश्यते। तत्र प्रथमस्ताव-न्मित्ररूपोऽर्थः सर्वथा प्रसिद्ध एवास्ति। तद्यथा—

'मित्रे सदैवानुगते, आकरस्वपरभूरिकायानां प्रायशो हि सुहृदोः सहवासः'। (पृष्ठे ८८५) इति चिन्तामणिकोषे श्रीसुखानन्दनाथेन, 'सुष्ठु हृदयं यस्य मित्रार्थे हृदादेशः' (पृ. ५३२३) इति वाचस्पत्ये श्रीतारानाथभट्टाचार्येण किञ्च, 'सुहृन्मित्रं सखा' इत्यमरकोषे, शब्दकल्पद्रुमेऽपि— 'सुशोभनं हृत् हृदयं यस्य, मित्रं सखा इत्यमरः' (पञ्चमकाण्डे, पृ. ३८९) इति रूपेण व्युत्पादितत्वाच्च।

कवयो महाकवयश्चापि मित्रार्थे सुहृच्छब्दं प्रयुञ्जन्तो दृश्यन्ते। यथोक्तं महाकविना कालिदासेन मेघदूते—

'मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः'। (पूर्वमेघः, श्लो. ४२)

एवमेव विक्रमोर्वशीये पुरूरवाश्चित्ररथं प्रियसुहृच्छब्देनाभिनन्दति— 'स्वागतं प्रियसुहृदे' (पृ. १५३ प्रथमोऽङ्कः)। चित्ररथोऽपि दैत्यहस्तादपाच्छिद्येन्द्रहस्ते उर्वश्याः समर्पणे इन्द्रस्य मित्ररूपेण पुरूरवसं प्रतिपादयति—

'पुरा नारायणेनेयमतिसृष्टा मरुत्वते।
दैत्यहस्तादपाच्छिद्य सुहृदा सम्प्रति त्वया'।। (१।१६)

मालविकाग्निमित्रेऽपि यथा—

'नहि बुद्धिगुणेनैव सुहृदामर्थदर्शनम्।
कार्यसिद्धिपथः सूक्ष्मः स्नेहेनाप्युपलभ्यते'।। (४।६)

अभिज्ञानशाकुन्तलेऽपि—

'कृताः शरव्यं हरिणा तवासुराः शरासनं तेषु विकृष्यतामिदम्।
प्रसादसौम्यानि सतां सुहृज्जने पतन्ति चक्षूंषि न दारुणाः शराः'।(६।२९)

चारुदत्ते महाकविना भासेन यथा—

'सत्यं न मे धनविनाशगता विचिन्ता
भाग्यक्रमेण हि धनानि पुनर्भवन्ति।
एतत्तु मां दहति नष्टधनश्रियो मे
यत् सौहृदानि सुजने शिथिलीभवन्ति'।। (२।५)

पुनश्च—

'दारिद्र्यात्पुरुषस्य बान्धवजनो वाक्ये न सन्तिष्ठते
सत्त्वं ह्रासमुपैति शीलशशिनः कान्तिः परिम्लायते।
निर्वैरा विमुखीभवन्ति सुहृदः स्फीता भवन्त्यापदः
पापं कर्म च यत्परैरपि कृतं तत्तस्य सम्भाव्यते'।। (१।६)

दूतवाक्येऽपि मित्रार्थे सुहृच्छब्दो यथा—

'पुण्यसञ्चयसम्प्राप्तामधिगम्य नृपश्रियम्।
वञ्चयेद् यः सुहृद्बन्धून् स भवेद् विफलश्रमः'।। (१।२५)

कविविभूतिना महाकविना भवभूतिना मालतीमाधवस्य प्रस्तावनायां यथा— 'अतो यदस्माकमर्पितं प्रियसुहृदाऽत्रभवता भवभूतिनाम्ना प्रकरणं स्वकृतिर्मालतीमाधवं नाम (पृ. १७) मालतीमाधवे बहुषु स्थलेषु मित्रार्थे सुहच्छब्दो दृश्यते। तेषु कानिचिदुदाहरणानि प्रस्तूयन्ते—

'यन्मां विधेयविषये स भवान्नियुङ्क्ते
स्नेहस्य तत्फलमसौ प्रणयस्य सारः।
प्राणैस्तपोभिरथ वाभिमतं मदीयैः
कृत्यं घटेत सुहृदो यदि तत्कृतं स्यात् ।। (पृ. २५)

पुनश्च—

'अपत्यसम्बन्धविधिप्रतिज्ञा प्रियस्य नीता सुहृदः स्मृतिं च।
अलोकसामान्यगुणस्तनूजः प्ररोचनार्थं प्रकटीकृतश्च'।। (पृ. २६)

एवञ्च— 'अत्र बालसुहृदा मकरन्देन सह विद्यामान्वीक्षिकीमधिगच्छति' (पृ. ११८) एवमेव बहून्युदाहरणानि सन्ति।

महाकविना विश्वनाथेन चन्द्रकलानाटिकायां यथा—

'सखे सदृशमाचरितं प्रतिज्ञातस्य प्रतिदिनमुपचीयमानस्य च सौहृदस्य' (पृ. ३२, द्वितीयाङ्कः)।

महाकविना भट्टनारायणेन वेणीसंहारनाटके यथा—

'भीष्मे द्रोणे च निहते य आसीदवलम्बनम्।
वत्सस्य च सुहृच्छूरो राधेयः सोऽप्ययं गतः'।।(५।१२)

पुनश्च यथा—

'अन्धोऽनुभूतशतपुत्रविपत्तिदुःखः
शोच्यां दशामुपगतः सह भार्ययाऽहम्।
अस्मिन्नशेषितसुहृद्गुरुबन्धुवर्गे
दुर्योधनेऽपि हि कृतो भवता निराशः'।।(५।१३)

महाकविना दिङ्नागेन कुन्दमालायां यथा—

'प्रकामभुङ्क्ते स्वगृहाभिमानात्
सुहृज्जनेनाहितयागवह्नौ।
आर्यस्य रम्ये भवनेऽपि वास-
स्तव प्रवासे वनवास एव'।। (१।९)

पुनश्च यथा— 'वयस्य न हि मादृशास्तादृशीं कोपावस्थामवगाहते, यस्यां वर्तमानायां सुहृदामनाश्रवा भवन्ति' (अङ्कः ५, पृ. १७२)।

महाकविना श्रीशूद्रकेण मृच्छकटिके यथा—

'एतत्तु मां दहति नष्टधनाश्रयस्य
यत् सौहृदादपि जनाः शिथिलीभवन्ति'।।

किञ्च—

'दारिद्र्यात् पुरुषस्य बान्धवजनो वाक्ये न सन्तिष्ठते
सुस्निग्धा विमुखीभवन्ति सुहृदः स्फारीभवन्त्यापदः'।। (१।३६)

एवञ्च—

'कथं राज्ञा पालकेन प्रियसुहृदार्यको मे बद्धः'। (पृ. २२४)

अपि च—

'द्वयमिदमतीव लोके प्रियं नराणां सुहृच्च वनिता च।
सम्प्रति तु सुन्दरीणां शतादपि सुहृद्विशिष्टतमः'।।(४।२५)

पुनश्च—

'गुणप्रवालं विनयप्रशाखं विस्रम्भमूलं महनीयपुष्पम्।
तं साधुवृक्षं स्वगुणैः फलाढ्यं सुहृद्विहङ्गाः सुखमाश्रयन्ति'।। (४।३१)

एवमेव बहुषु स्थलेषु मृच्छकटिके मित्रार्थे सुहृच्छब्दः प्रयुक्तोऽस्ति।

**२. सहायकः**

सुहृच्छब्दस्य सहायकरूपेऽप्यर्थे प्रयोगो दरीदृश्यते। तद्यथा— 'शोभनं हृदयमस्य। सुहृद्दुर्हृदाविति साधुः। सहाये। यथाह—

चन्द्रश्चन्दनमिन्दुधामधवला रात्र्यो द्विरेफावली-
झङ्कारोन्मुखरा विलासविपिनोपान्ता वसन्तोदयाः।
मन्द्रध्वानघनोदयाश्च दिवसा मन्दाः कदम्बानिलाः
शृङ्गारप्रमुखाश्च कामसुहृदो नार्यां जितायां जिताः।।
कामस्य सुहृदः सहायाः नार्यां जितायां जिताः'।

(शब्दार्थचिन्तामणिकोषः, पृ. ८८५)

**३. लग्नाच्चतुर्थं स्थानम्**

ज्यौतिषशास्त्रानुसारं सुहृच्छब्दस्य लग्नाच्चतुर्थस्थानमप्येकोऽर्थः, येनेदं ज्ञायते यत् कस्यामवस्थायां कथं ग्रहाः परस्परं मित्राणि भवन्ति। यदा चतुर्थस्थाने शुभग्रहो भवति, तथा चतुर्थाधिपतिः शुभभावस्थश्च भवति, तदा सुहृद्भावत्वं जायते।

शब्दकल्पद्रुमे यथा—

'एकस्माल्लग्नात्तच्चतुर्थलग्नम्'।

यथा च—

'पातालं हितकञ्चैव सुहृदम्भश्चतुर्थकम्'।

इति ज्योतिस्तत्त्वम्।

'शशिनः सुहृद्गृहगतः करोति चातुर्य्यहास्यधनवन्तं वत्तसामधिपः' इत्यादि कोष्ठीप्रदीपः। (शब्दकल्पद्रुमः, पञ्चमः काण्डः, पृ. ३८९)

यदुक्तं होरारत्ने—

'केन्द्रेषु सौम्या यदि पापहीनाः सर्वेषु जातस्य मितिर्न वाच्या।
उच्चाश्रिता वा ह्यविसंज्ञा विमिश्रिता वा मनुजस्य तज्ज्ञैः।।
सुहृद्गृहस्थैः सकलैस्तु तुङ्गमथ प्रयातैर्गृहमंशकं वा।
आयुः परं सूत्रनरस्य वाच्यं सर्वैश्च वै वृद्धिगृहप्रयातैः'।।

(होरारत्ने, १।९-१० आयुर्ज्ञाने)

पुनश्च तत्रैव—

'लग्नेऽष्टमे विस्तृतपीनदेहो निम्नोदरः पिङ्गगभीरनेत्रः।
पित्तान्वितो मध्यविलग्नघोषो विश्वासहो मातुरनिष्टकर्ता।।
स्थिरः प्रचण्डो विषमस्वभावो ईर्ष्युः सुहृद्द्रोहकरो महाभूः।
परान्नभोक्ता वधभेदकारी शूरोऽन्यनारीनिरतोऽरियुक्तः'।।

(अध्यायः २, लग्नफले, २३-२४)

जातकालङ्कारेऽपि यथा—

'स्वक्षेत्रे तुर्यनाथस्तनुपतिसहितः स्यादकस्माद्गृहाप्तिः
सौहार्दं वा सुहृद्भिस्तदितरगृहगश्चेद्गृहालभ्ययोगः'।
यावन्तः पापखेटा धनदशमगृहप्रान्त्यपैश्चेत्त्रिकस्था
युक्तास्तावत्प्रमाणाः ज्वलनवशगता क्लेशदाः स्युर्ग्रहा न'।। (२।९)

लघुजातकेऽपि—

शत्रू मन्दस्मितौ समश्च शशिजौ मित्राणि शेषा रवे-
स्तीक्ष्णांशुर्हिमरश्मिजश्च सुहृदौ शेषाः समाः शीतयोः।
जीवेन्दूष्णकराः कुजस्य सुहृदौ ज्ञोऽरिः सितार्कौ समौ
मित्रे सूर्यसितौ बुधस्य हिमगुः शत्रुः समाश्चापरे ।।
सूरेः सौम्यसितावरो रविसुतो मध्योऽपरे त्वन्यथा।
सौम्यार्कौ सुहृदौ समौ कुजगुरुः शुक्रस्य शेषावरी ।।
शुक्रज्ञौ सुहृदौ समः सुरगुरुः सौरेश्च अन्येऽरय-
स्तत्काले च दशा११ऽयबन्धु४सहज३स्वान्त्येषु मित्रं स्थिताः।।

(पृ. २४,१-३)

## ४. महादेवः

सुहृच्छब्दस्य महादेवरूपोऽप्यर्थः कोषकारैः प्रतिपादितोऽस्ति। तत्र चिन्तामणौ 'सर्वान्तर्यामिणि' (पृ. ८८५), हिन्दीविश्वकोषेऽपि 'महादेव' इति (पृ. ३८०, चतुर्विंशो भागः) 'महादेव' इति शब्दकल्पद्रुमेऽपि (पञ्चमः काण्डः, पृ. ३८९)।

## ५. शस्तचित्ते

शस्तं प्रशस्तं कल्याणभावनायुक्तं चित्तं मनो यस्यैवंभूतेऽप्यर्थे सुहृच्छब्दो दृश्यते। यः कश्चित् पूर्वस्नेहं विना प्रत्युपकारमनपेक्ष्य परस्योपकारं करोति, सोऽपि सुहृद् एव। यथोक्तम्—

'शस्तचित्ते प्रत्युपकारनिरपेक्षतयोपकारिणि प्रत्युपकारमनपेक्ष्य पूर्वस्नेहं सम्बन्धञ्च विनैवोपकर्त्तरि'। (शब्दार्थचिन्तामणिकोषः, पृ. ८८५)।

## ६. कृतोपकारे

यदा केनचित् पूर्वं कस्यापि जनस्योपकारः कृतः। कृते चोपकारे तयोः सम्बन्धो जायते। तयोश्चोभयोः स सम्बन्धः सौहार्द एव। एवं कृतोपकारे सम्बन्धिनि सुहृच्छब्दः प्रयुज्यते। यथोक्तम्—

'कृतोपकारे सम्बन्धिनि' इति (तत्रैव, पृ. ८८५)।

### ७. नर्मसुहृदि

परिहासशीलस्य जनस्यापि कृते सुहृच्छब्दः प्रयुक्तोऽस्ति। पुरा काले राज्ञामन्तःपुरे प्राय एतादृशानां जनानां नियुक्तिर्भवति स्म, ये स्वकीयैर्वाक्पाटवैः कुपितवधूनां मानभञ्जनं तासां हृदयानां प्रासाद्यं च सम्पादयन्ति स्म। अन्तःपुरवासिनीनां कामिनीनां सकला व्यवस्थाऽपि तेषामेव कर्त्तव्यमासीत्। नृपदाराणां वेशभूषादीनां चयनम्, यद्वा तासामलङ्करणादीनामपि व्यवस्था तैरेव सम्पादनीया भवति स्म। ते च राज्ञां मनोऽनुकूलं नायिकानां सकलां व्यवस्थां व्यवस्थापयन्ति स्मेति ते नर्मसुहृत्पदेन व्यपदिश्यन्ते स्म।

नर्मसुहृत्पदं कविविभूतिना भवभूतिना मालतीमाधवे प्रयुक्तमस्ति। तत्र नन्दनो नृपस्य नर्मसुहृदासीत्, यो राजमुखेन अमात्यस्य भूरिवसोः कन्याम्, सकलकमनीयकामिनीजनशेखरेषु मालतीमालामिव विराजमानां मालतीं याचते स्म। यदर्थं बौद्धभिक्षुण्यपि भगवती कामन्दकी चोरिकाविवाहे प्रवृत्ता जाता—

'तां याचते नरपतेर्नर्मसुहृन्नन्दनो नृपमुखेन ।
तत्साक्षात्प्रतिषेधः कोपाय शिवस्त्वयमुपायः' ।।

(मालतीमाधवम्, अ.१, पृ. २७)

पुनश्च—

'राज्ञः प्रियाय सुहृदे सचिवाय कार्याद्
दत्त्वात्मजां भवतु निर्वृतिमानमात्यः ।
दुर्दर्शनेन घटतामियमप्यनेन
धूमग्रहेण विमला शशिनः कलेव' ।। (तत्रैव, पृ.११२)

एषु सप्तविधेष्वर्थेषु महादेवरूपमर्थं परित्यज्यापरे तु प्रायः समानार्थिन एव सन्ति। यतो हि यः खलु मित्रं भवति, सः शस्तचित्तः सकलेषु कार्येषु, समायां विषमायाञ्च सकलायां परिस्थितौ सहायको भवति, सर्वतोभावेन स्वकीयस्य मित्रस्य कार्यं साधयति, कल्याणं च सम्पादयति। यथोक्तं मित्रलक्षणप्रस्तावे नीतिकारैः—

'पापान्निवारयति योजयते हिताय
गूह्यं निगूहति गुणान् प्रकटीकरोति ।
आपद्गतं च न जहाति ददाति काले
सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः' ।।

यस्य हृदयं प्रशस्तं न भवति, स कस्याप्युपकारं न करोति, न चान्येन कृतमुपकारं मनुते, अर्थात् स्वोपकर्तरि कृतज्ञतां च न ख्यापयति, न च सहायक एव भवति कस्यापि, न च किञ्चिच्छुभं करोति। यः सुहृद् भवति, स सर्वथा तस्योपकरोत्येव। यथोक्तं पञ्चतन्त्रे—

'सुहृदामुपकारकारणाद् द्विषतामप्यपकारकारणात् ।
नृपसंश्रय इष्यते बुधैर्जठरं को न बिभर्ति केवलम्'।।

(पञ्चतन्त्रे, मित्रभेदः, श्लोकः २२)

'स सुहृद्व्यसने यः स्यादन्यजात्युद्भवोऽपि सन्।
वृद्धौ सर्वोऽपि मित्रं स्यात्सर्वेषामेव देहिनाम्।।
स सुहृद् व्यसने यः स्यात् स पुत्रो यस्तु भक्तिमान्।
स भृत्यो यो विधेयज्ञः सा भार्या यत्र निर्वृतिः'।।

(तत्रैव-३६७-६८)

अत एव प्रस्तुतेऽस्मिन्निबन्धे सुहृत्पदस्य महादेवरूपोऽर्थो न प्रक्रान्तः, अन्ये तु सर्व एव प्रक्रान्ताः, समानार्थकत्वात्। कस्य सुहृदः सहाया मित्राणि उपकारका इति जिज्ञासायां नायकस्येति ज्ञेयम्। एवञ्च निबन्धेऽस्मिन् सहायकानां चरित्राणि विवेचनीयानि सन्ति।

## सुहृदां लक्षणम्

यो हितमेव कामयते, स सुहृत्, यश्च व्यसने साहाय्यं करोति स सुहृदिति—

'सुहृदां हितकामानां न करोतीह यो वचः ।
स कूर्म इव दुर्बुद्धिः काष्ठाद् भ्रष्टो विनश्यति'।।३४४।।
'स सुहृद् यो व्यसने स्यादन्यजात्युद्भवोऽपि सन् ।
वृद्धौ सर्वोऽपि मित्रं स्यात्सर्वेषामेव देहिनाम्'।।३६७।।

(पञ्चतन्त्रम्, मित्रभेदः)

ये खलु स्नेहसम्पन्नाः, लोचनानन्ददायिनश्च भवन्ति, ते सुहृद इति—

'सुहृदः स्नेहसम्पन्ना लोचनानन्ददायिनः ।
गृहे गृहवतां नित्यं नागच्छन्ति महात्मनाम्'।।१६।।

(पञ्चतन्त्रम्, मित्रसम्प्राप्तिः)

पुनः पञ्चतन्त्रकारः कथयति यस्य चित्तं कदाचनापि वित्ते विकारतां न याति, स मित्रमिति—

'विकारं याति नो वित्ते चित्तं यस्य कदाचन।
मित्रं स्यात्सर्वकाले च कारयेन्मित्रमुत्तमम्'।।११४।।

किञ्च आपत्तिकाले यो मित्रं भवति, स एव वस्तुतो मित्रमिति संज्ञामर्हति—

'आपत्काले तु सम्प्राप्ते यन्मित्रं मित्रमेव तत्।
वृद्धिकाले तु सम्प्राप्ते दुर्जनोऽपि सुहृद्भवेत्'।।११६।।

वस्तुतस्तु स एव सुहृद्भवति यः प्रियमेव वक्तव्यमिति भावनां विहायाप्रियमपि वदति; किन्तु सर्वदा तथ्यं पथ्यं च वदति—

'अप्रियाण्यपि पथ्यानि ये वदन्ति नृणामिह।
त एव सुहृदः प्रोक्ता अन्ये स्युर्नामधारकाः' ।।१६७।।

(पञ्चतन्त्रे, मित्रसम्प्राप्तिः)

सर्वं सङ्कल्य्य नीतिशतककारेण श्रीभर्तृहरिणा मित्रलक्षणमेवमुक्तम्— यः पापाद् निवारयति' अर्थाद् इदं कर्म न कर्त्तव्यम्, अनेन पापो भविष्यतीति तस्मात्कार्यान्निवार्य हितकर्मणि योजयते, गोपनीयं सर्वथा निगूहति, गुणानां विज्ञापनं करोति, आपत्तिकाले न जहाति, साहाय्यं ददाति' तत् सन्मित्रमिति—

'पापान्निवारयति योजयते हिताय
गुह्यं निगूहति गुणान् प्रकटीकरोति।
आपद्गतं च न जहाति ददाति काले
सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः'।।

यः खलु उत्सवे व्यसनेऽपि समानरूपेण वर्तते, स एव बान्धवः। यथोक्तम्'—

'उत्सवे व्यसने चैव दुर्भिक्षे शत्रुसङ्कटे।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः'।।

सङ्क्षेपेण यः सर्वदा, सर्वथा, मनसा वाचा कर्मणा च परोक्षापरोक्षतया वा हितं कामयते करोति च स सुहृत् सन्मित्रमिति लक्षणं निष्पन्नम्।

## मित्रताकारणानि

किं कारणमस्ति येन कश्चित् कस्यचिन्मित्रं कस्यचिच्च शत्रुर्भवतीति विचारणायां सामान्यतया सङ्कल्पविकल्पात्मकं मन एव कारणत्वेन प्रतिपादयन्ति विपश्चितः। यथा—

'प्रद्वेषो बहुमानो वा सङ्कल्पादुपजायते'। (स्वप्नवासवदत्तम्)

इति महाकविर्भासः। पञ्चतन्त्रेऽपि तथैवोक्तम्—

'मित्रं कोऽपि न कस्यापि नितान्तं न च वैरकृत्।
दृश्यते मित्रविध्वस्तात्कार्याद् वैरी परीक्षितः'।।

तथा च—

'न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिद्रिपुः।
व्यवहारेण जायन्ते मित्राणि रिपवस्तथा'।।

किन्तु नेदं वस्तुतत्त्वम्। न कदाचित् किञ्चिदपि कार्यं कारणं विना सम्भवतीति लोकप्रसिद्धिरिति मित्रतायां शत्रुत्वेऽपि कारणेनावश्यमेव भाव्यमिति—

'कारणान्मित्रतां याति कारणादेति शत्रुताम्।
तस्मान्मित्रत्वमेवात्र योज्यं वैरं न धीमता'।।३३।।

(पञ्चतन्त्रे मित्रसम्प्राप्तिः)

तत्रैव मित्रताकारणतां प्रतिपादयता पञ्चतन्त्रकारेणोक्तं यत् सामान्यमनुष्याणां मित्रता उपकाराद् भवति, मृगाणां पक्षिणाञ्च मित्रता निमित्तविशेषाद् भवति, मूर्खाणां च जनानां मित्रता भयाल्लोभाच्च भवति, किन्तु सतां जनानां मित्रता केवलं दर्शनादेव भवति—

'उपकाराच्च लोकानां निमित्तान्मृगपक्षिणाम्।
भयाल्लोभाच्च मूर्खाणां मैत्री स्याद्दर्शनात्सताम्'।।

(तत्रैव, श्लो. ३६)

## सुहृदां महत्त्वम्

विश्वस्मिन्नस्मिन् सुहृदामतीवमहत्त्वमस्ति। अस्ति मनुष्य एकः सामाजिकः प्राणीति मनुष्यस्य सर्वाणि कार्याणि व्यवहारेणैव जायन्ते। कस्यापि कार्यस्य सुचारुरूपतया सम्पादने सुहृदां साहाय्यमवश्यमेवापेक्षते। मित्राणां साहाय्येन दुष्कराण्यपि कार्याणि सुकराणि भवन्ति—

'मित्रवान्साधयत्यर्थान्दु:साध्यानपि वै यत: ।
तस्मान्मित्राणि कुर्वीत समानान्येव चात्मन:' ।।२७।

(पञ्चतन्त्रे मित्रसम्प्राप्ति:)

किञ्च—

'अपि सम्पूर्णतायुक्तैः कर्त्तव्या सुहृदो बुधैः ।
नदीशः परिपूर्णोऽपि चन्द्रोदयमपेक्षते'।। (श्लो. २८ तत्रैव)

अर्थाद् यथा जलैः परिपूर्णोऽपि जलनिधिः स्वकीयाभिवृद्ध्यर्थं परिपूर्णस्य पूर्णिमचन्द्रस्योदयमपेक्षत एव, तथैव सर्वतोभावेन परिपूर्णेनापि जनेन भूयो भूयः समधिकामुन्नतिं कर्तुं सुहृदोऽवश्यमेव कर्त्तव्याः। यस्य जनस्य दृढानि मित्राणि भवन्ति, तस्य पार्श्वे लक्ष्मीः स्वयमेव निवासहेतोरागच्छति—

'उत्साहसम्पन्नमदीर्घसूत्रं क्रियाविधिज्ञं व्यसनेष्वसक्तम् ।
शूरं कृतज्ञं दृढसौहृदं च लक्ष्मी स्वयं गच्छति वासहेतोः' ।।

प्राणस्य नाशेऽपि समुपस्थिते यदि सन्मित्रस्य दर्शनं स्यान्नाम तदा प्राणात्ययो वा भवतु प्राणरक्षणं वा, उभयथैव सुखोत्पत्तिर्जायते, यदि प्राणरक्षणं स्यात्तदा मित्रस्य साहाय्यं पुष्टं भवति, यदि च मृत्युरेव भवेत्तदा अन्तिमे क्षणे मित्रस्य दर्शनमपि न जातमिति क्लेशो न जायते मनसीति उभया प्रीतिरेव—

'प्राणात्यये समुत्पन्ने यदि स्यान्मित्रदर्शनम्।
तद्द्वाभ्यां सुखदं पश्चाज्जीवतोऽपि मृतस्य च'।। १७५।।

(पञ्चतन्त्रे, मित्रसम्प्राप्तिः)

आपत्तिरूपसरितस्तरणार्थं मित्ररूपनौकाया आवश्यकता भवति, मित्रविवर्जितो जनो न तरति आपदमिति महन्महत्त्वं मित्रस्य—

'आपन्नाशाय विबुधैः कर्त्तव्याः सुहृदोऽमलाः ।
न तरत्यापदं कश्चिद्योऽत्र मित्रविवर्जितः' ।।१७८। (तत्रैव)

यथा सौहृदयुक्ते स्वामिनि, अनुगामिन्यां भार्यायां गुणवति च भृत्ये निवेदनेन दुःखमपि सुखं सञ्जायते, यद्यपि स्वामी वा भार्या वा भृत्यो वा दुःखस्य निवारणार्थं समर्थो भवतु न वा, किन्तु तत्रानन्यहृदये स्वकीयं दुःखं निवेद्य सुखी भवति—

'सुहृदि निरन्तरचित्ते गुणवति भृत्येऽनुवर्तिनि कलत्रे ।
स्वामिनि सौहृदयुक्ते निवेद्य दु:खं सुखी भवति'।। ११०।

(पञ्चतन्त्रे, मित्रभेद:)

महाकविना कविताविलासेन कालिदासेनापि स्वकीयेऽभिज्ञानशाकुन्तले स्निग्धजनेन संविभक्ते दु:खे दु:खस्य सह्यवेदनत्वं प्रतिपादितमस्ति—

'स्निग्धजनसंविभक्तं हि दु:खं सह्यवेदनं भवति'।

(अभिज्ञानशाकुन्तले, अङ्कः-३, पृ. ४४)

हितकामानां सुहृदां हितकरं वचनं यो न करोति, स जनो मूढो भवति, किञ्च काष्ठाद् भ्रष्ट: कूर्म इव स्वल्पेनैव विनश्यति—

'सुहृदां हितकामानां न करोतीह यो वच:।
स कूर्म इव दुर्बुद्धि: काष्ठाद् भ्रष्टो विनश्यति'।।३३४।

(पञ्चतन्त्रे, मित्रभेद:)

यथा बलवान्, महान्, सुप्रतिष्ठितश्चैको वृक्षो वातेन सरलतयोत्पाट्यते; किन्तु संहतान् सुप्रतिष्ठितान् वृक्षान् रौद्रोऽप्यनिल उत्पाटयितुं किं घर्षयितुमपि समर्थो न भवति, तथैव एकाकी पुरुष: कियदपि शौर्यसमन्वितं भवतु, द्विषद्भि: तिरस्कृतिं हिंसां च याति। तेजस्वी समर्थोऽपि सहायकैर्विना किञ्चिदपि कर्तुं समर्थो न भवति, यथा अनिलं विना अनलं नालं भवति ज्वलने—

'महानप्येकजो वृक्षो बलवान्सुप्रतिष्ठित:।
प्रसह्य इव वातेन शक्यो घर्षयितुं यत:।।५३।।
अथ ये संहता वृक्षा: सर्वत: सुप्रतिष्ठिता:।
तेन रौद्रानिलेनापि हन्यन्ते ह्येकसंश्रयात्।।५४।।
एवं मनुष्यमप्येकं शौर्येणापि समन्वितम्।
शक्यं द्विषन्तो मन्यन्ते हिंसन्ति च तत: परम्।।५५।।
असुहृद: समर्थोऽपि तेजस्वी किं करिष्यति।
निर्वाते ज्वलितो वह्नि: स्वयमेव प्रशाम्यति'।।५६।।

(पञ्चतन्त्रे, काकोलूकीयम्)

सुहृदस्तु दुर्लभा भवन्ति यथा दिनं दिनं दिनकरस्योदयम्, ताम्बूलवीटिका, महाभारतीया कथा, पतिव्रता च भार्या दिने दिने अपूर्वं सुखं ददाति, तथैव सुमित्रमपि ददाति नित्यनवीनं सुखमिति। यस्य गृहे नित्यमेव सुहृदः समागच्छन्ति, तत्सुखस्य तुल्यमपरं सुखं नैव भवति—

'सुहृदः स्नेहसम्पन्ना लोचनानन्ददायिनः।
गृहे गृहवतां नित्यं नागच्छन्ति महात्मनाम्।।१६।।
आदित्यस्योदयं तात! ताम्बूलं भारती कथा।
इष्टा भार्या सुमित्रं च अपूर्वाणि दिने दिने।।१७।।
सुहृदो भवने यस्य समागच्छन्ति नित्यशः।
चित्ते च तस्य सौख्यस्य न किञ्चित्प्रतिमं सुखम्' ।।१८।।

(पञ्चतन्त्रे, मित्रसम्प्राप्तिः)

एवं लोके सुहृदां महन्महत्त्वमस्तीति नास्ति सन्देहः।

**सुहृदां योग्यता**

सुहृदा कथं भाव्यम्? कस्य केन गुणयुतेन कथं वा सौहार्दं कार्यमित्यपि विषयो विचारणीय एवास्ति। न हि सर्वो जनः सकलस्य जनस्य सौहार्दं याति। कञ्चित्प्रति कस्यचित् स्वत एव आकर्षणं भवति, कृतेऽपि प्रयासे कञ्चित् प्रति न भवति सौहार्दम्, अपि तु द्वेष एव जायते। यथा धूम्रयानयात्री सत्यपि स्थाने कदाचित् कस्मैचित् स्थानं न ददाति, अपि तु स्वयमेव रिक्तमपि स्थानमाच्छादयति, कदाचिच्च स्वयमुत्थाय कमप्युपवेशयति— इति महान् विसंवादो दृश्यते। तथैव कश्चित् कदाचित् स्वत एव कमप्युपकरोति साहाय्यं ददाति' मित्रतां च याति, कदाचिन्नोपकरोतीति द्वयोः सौहार्दे वस्तुतो न कोऽपि गुणविशेषः कारणं भवति। यथोक्तं नलचम्प्वाम्—

'भवति हृदयहारी क्वापि कस्यापि कश्चित्
न खलु गुणविशेषः प्रेमबन्धप्रयोगे।
किसलयति वनान्ते कोकिलालापरम्ये
विकसति न वसन्ते मालती कोऽत्र हेतुः'।।

नीतिकारैस्तु प्राय इदं प्रतिपादितमस्ति यत् सुहृद्भिः समगुणयुक्तैर्भाव्यम्। ययोर्वयः, वित्तम्, कुलञ्च किं वा बलादिकमपि समं भवेत्, तयोरेव सौहार्दं भवति, नान्ययोरिति। इदमेव च सौहार्दं दृढं भवति। पुष्टविपुष्टयोः, बलवदबलवतोः, वित्तवद्दरिद्रयोः, बालवृद्धयोः, विद्वन्मूर्खयोश्च सौहार्दमुचितं न भवति, अपि तु विनाशकारि भवति—

'ययोरेव समं वित्तं ययोरेव समं कुलम् ।
तयोर्मैत्री विवाहश्च न तु पुष्टविपुष्टयोः ।।२९।।
यो मित्रं कुरुते मूढ आत्मनोऽसदृशं कुधीः ।
हीनं वाप्यधिकं वापि हास्यतां यात्यसौ जनः' ।।३०।।

मृच्छकटिककारो महाकविः शूद्रकोऽप्येवं समर्थयति यद् वित्तवद्दरिद्रयोः सौहार्दं शिथिलतां याति, दरिद्रतां गते मित्रे सुहृदः सौहृदादपि शिथिलीभवन्ति, किञ्च विमुखीभवन्ति, यथा चारुदत्तमुखेनेमां सामाजिकीं स्थितिं प्रकटयति—

'सत्यं न मे विभवनाशकृताऽस्ति चिन्ता
भाग्यक्रमेण हि धनानि भवन्ति यान्ति।
एतत्तु मां दहति नष्टधनाश्रयस्य
यत् सौहृदादपि जनाः शिथिलीभवन्ति'।।(१।१३)

किञ्च—

'दारिद्र्यात्पुरुषस्य बान्धवजनो वाक्ये न सन्तिष्ठते
सुस्निग्धा विमुखीभवन्ति सुहृदः स्फारीभवन्त्यापदः।
सत्त्वं ह्रासमुपैति शीलशशिनः कान्तिः परिम्लायते
पापं कर्म च यत् परैरपि कृतं तत्तस्य सम्भाव्यते'।।(१।३६)

किन्तु कृतायां विचारणायां नेयं समानता सौहार्दस्य वास्तविकी स्थितिः, न चास्ति कापि प्रामाणिकी योग्यता सौहार्दस्य यत्र मृच्छकटिके शस्तहृदयश्चारुदत्तो दरिद्रतायाः कृतेऽपि समधिकं दुःखं प्रकटयन् दृश्यते, दारिद्र्यं प्रति च सौहार्दं जनयति स्वकीये विनाशे दारिद्र्यस्याश्रयार्थं शोकं प्रकटयति—

'दारिद्र्य! शोचामि भवन्तमेवमस्मच्छरीरे सुहृदित्युषित्वा।
विपन्नदेहे मयि मन्दभाग्ये ममेति चिन्ता क्व गमिष्यसि त्वम्'।।(१।३८)

तत्र कविहृदये क्वास्ति पणं समानतायाः सौहार्दे? प्रथितैवास्ति सुदामाश्रीकृष्णयोः सौहार्दम्। यदा मनुष्यमृगयोः, मनुष्यवृक्षयोः, मानवदेवयोश्च दृढं सौहार्दं प्रतिपादितमस्ति तर्हि का वार्ता सौहार्दे समानतायाः? मनुष्यमृगयोर्मैत्री यथाऽभिज्ञानशाकुन्तले शकुन्तलायाः पतिगृहगमनावसरे एको मृगपोतः पुनः पुनस्तस्याः पटान्तमाकर्षति, तदा महर्षिः कण्वः कथयति शकुन्तलाम्—

'यस्य त्वया व्रणविरोपणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे।
श्यामाकमुष्टिपरिवर्धितको जहाति
सोऽयं न पुत्रकृतकः पदवीं मृगस्ते'।।४।।

प्रतिमानाटकेऽपि रामवनगमनावसरे गजा वाजिनश्च सर्वे दुःखनिमग्ना दृश्यन्ते। सर्वैश्च स्वस्वव्यापारं परित्यज्य रामादिकं प्रति स्वकीयं सौहार्द प्रकटितम्, विक्रोशितश्च राजा सर्वथा—

नागेन्द्रा यवसाभिलाषविमुखाः सास्रेक्षणा वाजिनो
ह्रेषाशून्यमुखाः.................।।२।२।

कविविभूतिना महाकविना भवभूतिनापि मनुष्यमृगसौहार्दस्यातीवप्रशस्यतर-मुदाहरणमुपस्थापितमस्ति। वने वसन्ती सीता स्वकरकलितैः सल्लकीपल्लवाग्रैः करिकलभकान् परिवर्धयति स्म। एकं च करिकलभकं पुत्रमिव मनुते स्म—

'सीतादेव्या स्वकरकलितैः सल्लकीपल्लवाग्रै-
रग्रे लोलः करिकलभको यः पुरा वर्धितोऽभूत्'।।(उ.रा. ३।६)

यदा सीता स्वकरिकलभकमन्येन द्विरदपतिना आक्रान्तं श्रुतवती तदा तत्परित्राणार्थं राममाह्वयति स्म—

'आर्यपुत्र! परित्रायस्व परित्रायस्व मम पुत्रकम्'। (पृ. १५०)

रामोऽपि मृगान् बान्धवरूपेण मनुते स्म—

'यत्र द्रुमा अपि मृगा अपि बान्धवो मे'। (उ.रा. ३।८)

एवमेव बहून्युदाहरणानि प्रस्तोतुं शक्यन्ते मनुष्यमृगयोः सौहार्दस्य। मनुष्यपक्षिणोः सौहार्दमपि बीजरूपेणाभिज्ञानशाकुन्तले द्रष्टुं शक्यते। शकुन्तलायाः पतिगृहगमनावसरे मृगैर्दर्भकवलं परित्यक्तम्, मयूरैश्च नर्तनं परित्यक्तम्।

'उद्गीर्णदर्भकवला मृगाः परित्यक्तनर्तना मयूराः'।

मनुष्यवृक्षयोरपि सौहार्दस्य निदर्शनं तत्रैवास्ति। शकुन्तलया विरहिताभिर्लताभिरपि अश्रवः प्रवाहिताः—

'अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः'।

मनुष्यदेवयोः सौहार्दे इन्द्रेण सह दुष्यन्तपुरूरवसादीनां सौहार्दं नाटकेषु, काव्येषु दिलीपस्य प्रथितमेवास्ति सौहार्दमिन्द्रेण। देवासुरसङ्ग्रामे दुष्यन्तो महत्साहाय्यं सम्पादयति स्म। यथा कथयति कण्वशिष्यः—

'आशंसन्ते समितिषु सुरा बद्धवैरा हि दैत्यै-
रस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे'।।

मनुष्याणां मनुष्येतरजातिसौहार्दमिदं केवलमत्र सङ्केतितम्।

अनेन सिद्धं यत् समानयोरेव सौहार्दमिति नियमो नाङ्गीक्रियते नाटककारैः। अत एव नास्ति च कापि प्रामाणिकी योग्यता सौहार्दस्य नाटककाराभिमता।

## सुहृदां भेदाः

सुहृदां भेदानां परिगणनावसरे प्रथमतस्तु भेदद्वयं दृश्यते— सहजसुहृदः, कार्यकारणवशीभूताश्चेति। तत्र सहजसुहृदस्ते सन्ति येऽकारणमुद्देश्यविशेष-मनालोच्यैव परस्परं मित्रतां यान्ति, परस्परं साहाय्यं च सम्पादयन्ति। एवंविध-सौहार्दे उपकारः सहयोगो वा प्रथमं जायते, पश्चाच्च कृतं साहाय्यं विचार्य आकर्षणम्, ततश्च सौहार्दस्योत्पत्तिः, क्रमशस्तद्घनीभावश्च भवति। सहजसौहार्दमेव विशेषतया रूपकेषु प्रधाननायिकयोर्विवाहस्य कारणत्वेन प्रतिपादितमस्ति। उदाहरणार्थं यथा— अविमारके महाकविना भासेन प्रणीते, उद्यानभूमिं गतायाः कुन्तिभोजपुत्र्याः कुरङ्ग्यास्ततः परावर्तमानायाः पथि मदोन्मत्तेन गजेनाक्रान्तायाः रक्षणमविमारकेन कृतम्। तत्पराक्रमं दृष्ट्वा तम्प्रति तस्या मनसि भावोद्रेको जातः। सहजं सौहार्दमपि प्रथमतो भेदद्वयेन विभक्तं दृश्यते—१. प्रधाननायकनायिकयोः, २. प्रधानाप्रधानयोश्च। तत्र प्रधाननायकनायिकयोः सहजं सौहार्दं पूर्वानुरागोत्पत्तेः कारणं जायते, पश्चाच्च सम्पद्यते तयोर्विवाहोऽपि। प्रधानाप्रधानयोः सहजं सौहार्दं मानविकं मानवेतरजातिकञ्चेति द्विविधम्। तत्र मानविकमपि १. राज्ञो राजानं प्रति, २. राज्ञो लोकम्प्रति, ३. लोकस्य राजानम्प्रति, ४. पुरुषस्य पुरुषं प्रति,

५. पुरुषस्य नारीम्प्रति ६. नार्याः नारीम्प्रति ७. नार्याः पुरुषम्प्रति ८. कुमारस्य कुमारम्प्रति, (भ्रातुः भ्रातरम्प्रति) ९. भृत्यस्य कुमारम्प्रति १०, गुरुसुहृदः ११. ऋषिसुहृदः, १२. भक्तिसंवलिताः सुहृदश्चेति भेदैर्नानाविधमिति।

मनुष्येतरजातिकं सौहार्दमपि— देवविषयकम्, नदीपर्वतविषयकम्, पशुपक्षिसर्पादिविषयकम्, वृक्षलतादिविषयकञ्चेति बहुविधं दृश्यते।

कार्यकारणवशीभूताः सुहृदस्ते सन्ति ये किमपि कार्यविशेषमुद्दिश्य सौहार्दं यान्ति सहायकाश्च भवन्ति। कार्यकारणवशीभूतसुहृदां भेदपरिगणनावसरे १. शृङ्गारसुहृदः, २. अर्थसुहृदः ३. अन्तःपुरसुहृदः ४. दण्डसुहृदः, ५. धर्मसुहृदश्चेति नानाविधाः भेदा उपस्थापयितुं शक्यन्ते। यथा साहित्यदर्पणे नायकस्य सहायकानां भेदपरिगणनायां शृङ्गारसहायकाः, अर्थसहायकाः, अन्तःपुरसहायकाः, दण्डसहायकाः, धर्मसहायकाश्चेति भेदाः परिगणिताः सन्ति—

शृङ्गारेऽस्य सहायाः विटरचेटविदुषकाद्याः स्युः।
भक्ता नर्मसु निपुणाः कुपितवधूमानभञ्जन्माः शुद्धाः।।
सम्भोगहीनसम्पद्विटस्तु धूर्तः कलैकदेशज्ञः।
वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठ्याम्।।
कुसुमवसन्ताद्यभिधः कर्मवपुर्वेषभाषाद्यैः।
हास्यकरः कलहरतिर्विदूषकः स्यात्स्वकर्मज्ञः।।
मन्त्री स्यादर्थचिन्तायां तद्वदवरोधे।
वामनषण्ढकिरातम्लेच्छाभीराः शकारकुब्जाद्याः।।
मदमूर्खताऽभिमानी दुष्कुलतैश्वर्यसंयुक्तः।
सोऽयमनूढाभ्राता राज्ञः श्यालः शकार इत्युक्तः।।
दण्डे सुहृत्कुमाराटविकाः सामन्तसैनिकाद्याश्च।
ऋत्विक्पुरोधसः स्युर्ब्रह्मविदस्तापसास्तथा धर्मे।।

(साहित्यदर्पणः परि. ३, का.-४०-४५)

एवं सर्वं सङ्कलेन वक्तुं शक्यते यत् समाजे सुहृदामस्ति महती उपयोगितेति सहायान् विना कोऽपि किमपि कार्यं कर्तुं न पारयति, तथा च साहाय्यं प्राप्य क्षोदीयानपि तथैव कार्यान्तं गच्छति, यथा महानद्यां सम्भूय नगापगा अपि अम्भोधिमभ्येति—

बृहत्सहायः कार्यान्तं क्षोदीयानपि गच्छति।
सम्भूयाम्भोधिमभ्येति महानद्या नगापगा।।

(शिशुपालवधमहाकाव्यम्)

रूपकाणि सन्ति समाजस्यादर्शभूतानि। तत्र समाजस्य वास्तविकं चित्रणं द्रष्टुं शक्यते। अतः सुहृदः कथं भवन्ति, का तेषां योग्यता, किम्प्रकारकाश्च भवन्ति, तथा काऽस्त्युपयोगिता सुहृदाम्, के च तेषां गुणाः के चावगुणा इत्यादिविषयाणां सम्यगध्ययनार्थं रूपकाणां पर्यालोचनमावश्यकमस्तीति ध्यायं ध्यायं मया संस्कृतरूपकेषु सुहृदां स्थितेः विवेचनं कृतम्। रूपकाण्याधारीकृत्य कृतं सुहृदां विवेचनं सुहृदां वास्तविकं स्वरूपमुपस्थापनमेवास्ति मदीयास्य निबन्धस्योपयोगिता।



# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

१. एषा देशे विदेशे च लब्धप्रसरा त्रैमासिकी संस्कृतपत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठ-भाद्रपद-मार्गशीर्ष-फाल्गुनपूर्णिमासु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धानप्रवृत्तेः समालोचना-प्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति।

४. अस्यां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां स्वोपज्ञ-विचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते।

५. प्रकाशितनिबन्धस्य प्रतिमुद्रणानां पञ्चविंशतिः, पत्रिकायाश्च सोऽङ्को दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

६. अस्यां पत्रिकायां विशिष्टानां हिन्दीसंस्कृताङ्ग्लग्रन्थानां समालोचनाः प्रकाश्यन्ते। तदर्थं ग्रन्थकृद्भिर्ग्रन्थस्य द्वे प्रतिकृती प्रेषयितव्ये।

७. "**वित्त अधिकारी, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी-२२१००२** (उ.प्र.)" इति सङ्केतेन ('बैङ्कड्राफ्ट' अथवा 'पोस्टल-आर्डर' इत्येतेनैव) मूल्यं प्रेषणीयम्।

८. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः "**सम्पादक, सारस्वती सुषमा, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय**, वाराणसी-२२१००२ (उ.प्र.)" इति सङ्केतेन विधेयः।



रजिस्टर्ड न्यूजपेपर्स एक्ट के अन्तर्गत

# विज्ञप्ति

| | |
|---|---|
| १. प्रकाशन का नाम | सारस्वती सुषमा |
| २. प्रकाशन की तिथि | त्रैमासिक |
| ३. सम्पादक एवं प्रकाशक का नाम | **डॉ. हरिश्चन्द्र मणि त्रिपाठी** |
| राष्ट्रियता | भारतीय |
| पता | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी - २२१००२ |
| ४. मुद्रक का नाम | **श्री अनूप कुमार नागर** |
| राष्ट्रियता | भारतीय |
| पता | श्रीजी-कम्प्यूटर प्रिण्टर्स, नाटी इमली, वाराणसी |
| ५. स्वामित्व | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी - २२१००२ |

मैं हरिश्चन्द्र मणि त्रिपाठी घोषित करता हूँ कि उल्लिखित विज्ञप्ति मेरी जानकारी के अनुसार बिलकुल ठीक है।

हस्ताक्षर

**हरिश्चन्द्र मणि त्रिपाठी**

निदेशक, प्रकाशन-संस्थान

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय

वाराणसी - २२१००२

पञ्जीकरणसंख्या—६९८१/५७

## सुसङ्ग्राह्याणि अभिनवप्रकाशनानि

१. **वेदान्तपरिभाषा** : वेदान्तविषयकोऽयं वादग्रन्थः श्रीमद्धर्मराजाध्वरीन्द्रप्रणीतो रामकृष्णाध्वरिकृत'**शिखामणि**'टीकया, स्वामिश्रीमदमरदासप्रणीत'**मणिप्रभा**'टीकया चोपेतः प्रो.पारसनाथद्विवेदिमहोदयस्य टिप्पण्यादिभिः, भूमिकया, अनुसन्धानात्मकपरिशिष्टैश्च सम्भूष्य सम्पाद्य च प्रकाशितः— ४००.००

२. **गाथासप्तशती (गाहासत्तसई)** : ग्रन्थोऽयं हालोपनामकमहाकविश्रीसातवाहनसङ्कलितः, भट्टश्रीमथुरानाथशर्मकृतया प्राकृतगाथासप्तशत्याश्छायारूपया **संस्कृतगाथासप्तशत्या, व्यङ्ग्यसर्वङ्कषा**ख्यव्याख्यया च विभूषितः सुसम्पाद्य प्रकाशितः— ४००.००

३. **कातन्त्रव्याकरणम्** : आचार्यशर्ववर्मप्रणीतो व्याकरणशास्त्रस्यापूर्वोऽयं ग्रन्थः श्रीदुर्गसिंहकृताभ्यां **कातन्त्र-वृत्ति-टीकाभ्यां** श्रीमत्त्रिलोचनदासकृतया '**कातन्त्रवृत्तिपञ्जिका**'टीकया कविराजसुषेणशर्मकृतया '**कलापचन्द्र**'-टीकया, अथ च डॉ.जानकीप्रसादद्विवेदिकृतया **समीक्षया**, विवरणात्मिकया भूमिकया, अनुसन्धानात्मक-परिशिष्टैश्च सनाथीकृत्य सुसम्पाद्य प्रकाशितः— प्रथमो भागः ३५०.००
द्वितीयो भागः खण्डम्-१ ५००.००
द्वितीयो भागः खण्डम्-२ ६००.००

४. **सर्वानन्दकरणम्** : ज्योतिषशास्त्रस्य महनीयोऽयं ग्रन्थः पण्डितश्रीगोविन्द-आप्टेमहोदयेन विरचितः स्वोपज्ञव्याख्यया विभूषितश्च सुसम्पाद्य प्रकाशितः— १२०.००

५. **बृहदारण्यकवार्तिकसारः** : श्रीमद्विद्यारण्यस्वामिविरचितो वेदान्तशास्त्रीयोऽयं ग्रन्थो म.म.पण्डित-श्रीहरिहरकृपालुद्विवेदिविरचितेन हिन्दीभाषानुवादेन समलङ्कृत्य प्रकाशितः—
प्रथमो भागः २५०.००, द्वितीयो भागः २५०.००
तृतीयो भागः २४०.००, चतुर्थो भागः २७०.००

६. **रसगङ्गाधरः** : साहित्यशास्त्रीयोऽयं प्रौढो ग्रन्थः पण्डितराजजगन्नाथप्रणीतः श्रीनागेशभट्टकृतया '**गुरुमर्मप्रकाश**'व्याख्ययोपेतः सुसम्पाद्य प्रकाशितः— प्रथमो भागः १८०.००
द्वितीयो भागः ४८०.००

७. **पाश्चात्त्य-भारतीयराजनीत्योः समालोचनम्** : पण्डितराजश्रीराजेश्वरशास्त्रिव्याख्यानभूतः समालोचनात्मकोऽयं ग्रन्थः सुसम्पाद्य प्रकाशितः— भाग-१ ५००.००
भाग-२ ५५०.००

८. **मानवनीतिविवेचनम्** : प्रो.राधेश्यामधरद्विवेदिमहोदयेन प्रणीतो भारतीयसमाजनीतिमानवनीत्योश्च विश्लेषणात्मकोऽनुसन्धानात्मकोऽयं ग्रन्थः सम्यग्रूपेण सम्पाद्य प्रकाशितः— २८०.००

९. **भास्करी (द्वितीयं संस्करणम्)** : शैवदर्शनस्य महनीयोऽयं ग्रन्थः श्रीमदुत्पलाचार्यप्रणीतया **ईश्वर-प्रत्यभिज्ञाकारिकयोपेतः** श्रीमदाचार्याभिनवगुप्तविरचित'**विमर्शिन्या**'ख्यटीकया विभूषितः, तट्टीकाभूत-**भास्करी**व्याख्यया समलङ्कृत्य सम्पाद्य च प्रकाशितः— प्रथमो भागः १५०.००
द्वितीयो भागः १५०.००
तृतीयो भागः १८०.००

१०. **वर्णाश्रम शिक्षा-व्यवस्था तथा आधुनिक युग में उसकी उपयोगिता** : डॉ.सुभाषचन्द्रतिवारिमहोदयेन विरचितः शिक्षाशास्त्रस्यानुसन्धानात्मको विश्लेषणात्मकोऽयं ग्रन्थः सुसम्पाद्य प्रकाशितः— २००.००

११. **संस्कृतकथाकुञ्जः** : अभिनवकथानिगुम्फनपराणां स्वनामधन्यानां कथाकाराणामेकविंशतिसंख्याकाः कथाः सङ्कलय्य पण्डितश्रीशिवजी-उपाध्यायमहोदयैः, डॉ.शिवदत्तशर्मचतुर्वेदिमहाशयैश्च सम्पादितोऽयं ग्रन्थः प्रकाशितः— १३०.००

१२. **भवभूति की काव्यभाषा का शैली (रीति) वैज्ञानिक अध्ययन** : भाषावैज्ञानिकानुसन्धानात्मकोऽयं ग्रन्थः डॉ.व्रजभूषणत्रिपाठिमहोदयेन विरचितः सुसम्पाद्य प्रकाशितः— २६०.००

*पत्रव्यवहारसङ्केतः*— **निदेशकः**, प्रकाशनसंस्थानस्य, सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणसी-२२१००२